# नि....वे....द....न ।

अमारी आ श्री लब्धिसूरीश्वरजैन ग्रन्थमालाना छठ्ठा पुस्तक तरीके प्रस्तुत श्रीहरिश्चन्द्र–कथानक वांचकोना पूनीत करकमलमां रजु करतां अमो हर्षित थइए ए स्वाभावीक छे.

श्री भावदेवसूरिमहाराजे रचेला संस्कृत श्लोकवद्ध पार्श्वनाथचरित्रमांथी उद्धृत करेल आ कथानक पहेलां अमदावादना वीरसमाजे प्रकट करेलुं. परंतु ते हालमां दुर्लभप्राप्य थवाथी तेमज तेमां केटलीक अशुद्धीओ रहेल होवाथी तथा पू. साधुसाध्विजी महाराजोने अहर्निश अत्यंत आवश्य होवाथी तेना पुनर्मुद्रण कराववा माटे पू. उपाध्यायजी महाराजने इच्छा थइ अने जेना फल-स्वरुपे आ प्रकाशीत थाय छे.

आ ग्रन्थ छापवामां उपदेश आपनार पू. उपाध्यायजी महाराजना तथा साहाय्य आपनार सद्गृहस्थोना अमो आभारी छीए.

अमारा आ अगाउ प्रकट थयेला पांच पुस्तकोने जे रीते वांचकोए अपनाव्या छे ते रीते आने पण अपनावशे अने शासनदेव अमोने हजु सारामां सारी श्रुतसेवा करवा उद्युक्त करशे एम प्रार्थी हाल तो विरमीए छीए.

छाणी
ता. २०–२–३९

चन्दुलाल.

## श्रीभावदेवसूरिविहितपार्श्वनाथचरित्रोद्धृतम्

# श्रीहरिश्चन्द्रकथानकम् ।

नाभेयाय नमस्तस्मै यस्य क्रमनखांशवः । मौलौ दधति नम्राणां माङ्गल्यामक्षतश्रियम् ॥ १ ॥ श्रीविद्यावास्तुहस्ताभ्यां वाग्देवी पद्मपुस्तकम् । जीयाद् दधाना दौर्गत्य–दुःखोच्छेदाय देहिनाम् ॥ २ ॥ सत्त्वमेव नृणां तत्त्वं सत्त्वं सिद्ध्यै भवद्वये । विना सत्त्वं सजीवोऽपि निर्जीव इति कथ्यते ॥ ३ ॥ विशीर्णोऽपि यथा वृक्षः सति मूले प्ररोहति । प्रक्षीणोऽपि तथा भूयो नरः सत्त्वाद् विवर्धते ॥ ४ ॥ यद् दूरं यद् दुराराध्यं दुर्घटं दुर्लभं च यत् । सर्वं सिध्यति तत् सत्त्वात् तद्विना तु सदप्यसत् ॥ ५ ॥ श्रूयते हि पुरा लोके श्रीमदिक्ष्वाकुवंशभूः । उदारचरितः सत्त्वे हरिश्चन्द्रो महान् नृपः ॥ ६ ॥ तथाहि—

अस्त्यत्र भरतेऽयोध्या पुरी वप्रांशुकोज्ज्वला । प्रासादमण्डना नान्यैरभिभूता सतीव या ॥ ७ ॥ सूर्यवंशभवक्ष्मापवृत्तोज्ज्वलयशःश्रिया । जातच्छत्रा महैश्वर्यं दधाति नगरीषु या ॥ ८ ॥ नतिरेवोन्नतिर्येषां दानमेव धनार्जनम् । परार्थ एव तु स्वार्थः क्षमैव हि समर्थता ॥ ९ ॥ एवंविधनरोत्तंसैर्वृक्षैरुद्यानभूरिव । या सदालंकृता हर्षं न केषां कुरुतेतराम् ? ॥ १० ॥

( युग्मम् ) एकनक्षत्रमालेन्दु स्त्रीणां हारमुखेन्दुभिः । प्रतिबिम्बच्छलाद् व्योम यया सौधेष्वधःकृतम् ॥ ११ ॥ बभूव नृपतिस्तस्यां हरिश्चन्द्रो महाभुजः । धर्मेणोद्वाहिता कीर्तिर्येनर्ते करपीडनम् ॥ १२ ॥ तथा नीतिगवी तेन पोषिता सुकृतात्मना । विश्वप्रीत्यै यथाऽद्यापि यशो दुग्धं तदुद्भवम् ॥ १३ ॥ अन्यदा रात्रिपर्यन्ते पल्यङ्कस्थः स बन्दिना । पठ्यमानमिमं श्लोकं सत्त्वोत्तेजनमाशृणोत् ॥ १४ ॥ विपद्यपि गता सत्त्वाद् ध्रुवं स्यात् संपदां पदम् । गतोऽप्यस्तं रविर्मार्गादच्युतोऽस्युदयी पुनः ॥ १५ ॥ इमं श्रुत्वा पठन्नेव समुत्तस्थौ महीपतिः । पुनः पुनस्तदीयार्थं मुदा हृदि विभावयन् ॥ १६ ॥ कृत्वा प्राभातिकं राजा यावदास्थानमाययौ । तावत् कोऽपि नरोऽभ्येत्य सम्भ्रान्त इदमूचिवान् ॥ १७ ॥ महाराज ! हरिश्चन्द्र ! त्वयि शासति मेदिनीम् । न श्रुतावपि लोकानां भयमित्यक्षरद्वयम् ॥ १८ ॥ किन्त्वेकः शूकरः शक्रावतारवनमध्यगान् । कुतोऽप्यागत्य भीष्माङ्गो भञ्जन्नास्ते लताद्रुमान् ॥ १९ ॥ तापसाश्चाभवंस्तत्र सर्वे भयविसंस्थुलाः । ततो दध्यौ नृपोऽमीषां किमभूद् हा ! तपस्विनाम् ? ॥ २० ॥ यथा लोकः करं दत्ते स्वधनस्याऽवनीपतेः । मुनयोऽपि तथा धर्मषष्ठभागमिति श्रुतिः ॥ २१ ॥ ततो रक्ष्या मयैवेते ध्यात्वेत्युत्थाय संभ्रमात् । अब्रवीच्च हहा ! कोऽयं मयि सत्यप्युपप्लवः ॥ २२ ॥ श्रीमन्नाभेयदेवस्यारामशत्रुं मुनिद्रुहम् । तमद्य शूकरं हन्मि प्रतिज्ञां चाऽकरोदिति ॥ २३ ॥ अथो यथागतं क्वापि वराहवेदके गते । प्रतिश्रवमिव प्रोच्चं राजाऽऽरोहत् तुरङ्गमम् ॥ २४ ॥ सैन्यं संनह्यदेवाऽसौ विमुच्य स्वयमेव तम् । निग्रहीतुमनाः क्रोडं त्वरीतं निर्ययौ पुरात् ॥ २५ ॥ मनोवेगेन यात्यश्वे भूपतिः प्राप तत्क्षणात् । वनं शक्रावताराख्यं मुदेवाऽभिमुखागतम् ॥ २५ ॥ अपश्यत् स्मेराब्जमुखीं कलहंसकमण्डिताम् । मृदुवीचीभुजां तत्र शरयूमुदधिप्रियाम् ॥ २६ ॥ राजा पप्रच्छ पार्श्वस्थौ स कपिञ्जल कुन्तलौ ।

अहो ! क्वाऽसौ वराहस्तावूचतुर्नन्वयं पुरः ? ॥ २७ ॥ वराहस्तद्वचः श्रुत्वा घुर्घुराऽऽरवमुच्चकैः । कुर्वाणोऽपि नृपं क्रोधाद्
दधावे वनगह्वरात् ॥ २८ ॥ लघुहस्तस्ततो राजा जानुलम्बभुजोपि हि । रोमाञ्चकवचं बिभ्रद् निर्भयोऽपि भृशं तनौ ॥ २९ ॥
करे चापमलङ्कृत्य पूरयंस्तद्वपुः शरैः । वराहं पातयामास पूरयामास संश्रवम् ॥ ३० ॥ ( युग्मम् ) ततः कपिञ्जलं प्राह
राजा पश्याग्रतः कियत् । लक्षमेतचलं भिन्न सोऽप्युपेत्य तथाऽकरोत् ॥ ३१ ॥ स्वेनैत्य पश्य मित्रेति प्रोक्तस्तेन नृपो द्रुतम् ।
ददर्श रुधिरार्द्रं तं ज्वलद्दवमिवाचलम् ॥ ३२ ॥ उवाच च यथास्यैवमतैरिश्चीयमाकृतिः । तथा मन्ये वराहेण भाव्यं दिव्येन
केनचित् ॥ ३३ ॥ कपिञ्जलोऽवदद् देव ! द्वीपी चायं हतः पुरा । राजाऽह पुनरयं किं विलोक्याह कपिञ्जलः ॥ ३४ ॥
इदमज्ञातमेवाऽस्तु राजा प्राह तथापि किम् । कुन्तलोऽप्याह किं ज्ञातेनाऽमुना देव ! चल्यताम् ॥ ३५ ॥ उपसृत्य स्वयं राजा
लुठद्गर्भां मृगीं हताम् । वीक्ष्य प्राह विपण्णः सन्नकृत्याचरणं हहा ! ॥ ३६ ॥ न्यायः कोऽयमशस्त्रो यद् दधानो वदने
तृणम् । इत्थं निःशरणो दीनो हन्यते सुभटैः पशुः ? ॥ ३७ ॥ धिग् धिग् मां हरिणिभ्रूणघातकं गुरुपातकम् । धिगिमां
मेऽखिलक्षोणीकरान्निजनितां श्रियम् ॥ ३८ ॥ विकलाक्षत्वकृत् पञ्चेन्द्रियाणामपि या नृणाम् । कृत्याकृत्यमतिं या च मदिरेव
विलुम्पति ॥ ३९ ॥ कुलटेव न यैकत्राऽवस्थाना तामपि श्रियम् । इच्छवो मार्गमुज्झन्ति मुनिभिः श्लाघितं जडाः ॥ ४० ॥
धन्यास्ते मुनयो हित्वा महासंसारकश्मलम् । निष्पङ्के संवृतात्मानो मोक्षमार्गे चरन्ति ये ॥ ४१ ॥ तद् गच्छाम्याश्रमं पुण्यं
यत्र सन्ति तपोधनाः । इयतः कल्मषात् शुद्धिः कथं मे भविताऽन्यथा ? ॥ ४२ ॥ इति राज्याद् विरक्तात्मा पादचारेण
भूपतिः । व्रजित्वा सह मित्राभ्यां विवेश द्रुतमाश्रमम् ॥ ४३ ॥ दृष्ट्वा कुलपतिं तत्र ननाम मुदितो नृपः । पृष्ठे पाणिं निधायास्य

मुनिरप्याशिषं ददौ ॥ ४४ ॥ क्षतात् त्राणेन लोकानां स्वस्य क्षत्र इति प्रथाम् । कुर्वाणः सार्थिकां पुण्यैः प्रवर्धस्व सदा नृप ! ॥ ४५ ॥ राजा पप्रच्छ भगवन् ! ज्ञान-ध्यान-तपांसि वः । निर्वहन्त्यहतं कच्चित् कुशलं मृगभूरुहाम् ॥ ४६ ॥ मुनिरूचे महाराज ! भरतान्वयभूषण ! । त्वयि प्रशासति क्षोणीं कुतोऽस्माकमुपद्रवः ? ॥ ४७ ॥ मही राजन्वती तेजः प्रबलं विमलं यशः । वर्णाश्रम ! महीरक्षा दक्षा वृत्तिस्तवाऽखिला ॥ ४८ ॥ अस्मिन्नवसरे क्वाऽपि जातः कोलाहलो महान् । किमेतदिति सम्भ्रान्तौ मुनि-भूपौ-बभूवतुः ? ॥ ४९ ॥ अब्रह्मण्यमब्रह्मण्यमिति च व्याकुलं वचः । श्रुत्वा कुलपतिः शिष्यं तं ज्ञातुं प्राहिणोद् द्रुतम् ॥ ५० ॥ पुनरार्तस्वरो जज्ञे स्त्रीणां शोकस्पृशामिति । मातश्चेद् मे मृगी मर्ता करिष्येऽनशनं तदा ॥ ५१ ॥ माताऽपि प्राह चेद् वत्सेऽनशनं त्वं करिष्यसि । तदाहमपि कर्तास्मि विना त्वां जीवितेन किम् ॥ ५२ ॥ श्रुत्वा कुलपतिश्चैतद् हृदयं स्फोटयद् वचः । किं नः प्राणप्रिया पुत्री वञ्चनाऽनशनीयति ? ॥ ५३ ॥ इयं च निकृतिर्नूनमसमत्सधर्मचारिणी । वत्सामनुसरन्त्येतद् ब्रूते किमसमञ्जसम् ? ॥ ५४ ॥ ततोऽङ्गारमुखादाशु स तापस्यावजूहवत् । आजग्मतुरथो तारं ते रुदत्यावुभे अपि ॥ ५५ ॥ उवाच वञ्चनां मायी मुनिः किं पुत्रि ! रोदिषि ? । साऽह जानाति तातो यदस्ति क्रीडामृगी मम ॥ ५६ ॥ सोऽप्याह या त्वया बाल्यात् पोषिता स्वकरार्पितैः । नीवारकवलैस्तस्यास्ततः किमभवत् सुते ! ? ॥ ५७ ॥ इत्युक्ते वञ्चना तारस्वरं रोदिति केवलम् । ततः प्रविश्य सम्भ्रान्तः शिष्यः कुलपतिं जगौ ॥ ५८ ॥ भूरराजन्वती सेयमब्रह्मण्यमहो ! महत् । मृगयाव्यसनात् पापः कोऽप्यहन् गर्भिणीं मृगीम् ॥ ५९ ॥ सास्रं कुलपतिः प्रोचे हहा ! किं भाव्यतः परम् ? । यतस्तां निघ्नता तेनाऽऽनीतोऽस्माकं कुलक्षयः ॥ ६० ॥ विना मृगीं कथं जीवेद् वत्सा तज्जीविता ततः । न प्राणिति विना पुत्रीम-

सत्प्राणप्रिया खलु ॥ ६१ ॥ विना सधर्मचारिण्या कुतो मे तपसां विधिः ? । तपोविधिं विना मे स्याद् ऋषित्वमनघं नहि
॥ ६२ ॥ राजन्निक्ष्वाकुराजेन्द्र ! कौतस्त्योऽयं तपस्विनाम् । इत्थमाकस्मिकः शोकशङ्कुस्त्वय्यपि भूपतौ ? ॥ ६३ ॥ ततः
कुतोऽपि तं ज्ञात्वा साधुबाधाकरं परम् । श्वपाकं शाधि येन त्वं लोकपालोऽसि पञ्चमः ॥ ६४ ॥ वञ्चना त्वाह मां तात !
चितामारोढुमादिश । किं न वेत्सि ममैण्या हि मरणं क्रकचायते ? ॥ ६५ ॥ सविषादं नृपः प्रोचे मुने ! कुर्वेऽहमत्र किम् ।
परेषां दण्डमाधातुमलमेपोऽस्मि नात्मनः ? ॥ ६६ ॥ ससंरम्भं च सौत्सुक्यं मुनिः प्रोवाच नन्वहो ? । इयता स्यात् किमुक्तं
यद् मया व्यापादिता मृगी ? ॥६७॥ पश्चात्तापात् स्वमात्मानं प्रणिन्दति महीपतौ । पिधाय वल्कलेनास्यं पूच्चक्रेऽथ स मायिकः
॥ ६८ ॥ ऊचे च कुपितो भूपमाः पाप ! वहसि ध्रुवम् । कोदण्ड–शरधी हन्तुं ध्यानलीनांस्तपस्विनः ? ॥ ६९ ॥ निपत्य
पादयो राजा विनयाद् मुनिमब्रवीत् । तमेकमपराधं मे क्षमस्व त्वं क्षमानिधे ! ॥ ७० ॥ मुनिः पराङ्मुखो भूत्वा चुक्रोश
नृपमुच्चकैः । भरतान्वयचन्द्राङ्क ! व्रज व्रज ममाश्रमात् ॥ ७१ ॥ युष्मादृशां निर्घृणानां श्रुता वागपि पाप्मने । किं पुनः
कर्मचण्डाल ! वाचाल ! सङ्गमस्त्वया ॥ ७२ ॥ राजा सविनयं प्राह मुने ! ब्रूहि करोमि किम् ? । विशाम्यग्निं, त्यजामि क्ष्मां,
चरामि व्रतमेव वा ॥ ७३ ॥ सकोपं मुनिरप्यूचेऽद्यापि श्रावयसे गिरम् । मायाविन् ! हरिणीभ्रूणघातपातकपङ्किलाम् ? ॥ ७४ ॥
ततोऽङ्गारमुखोऽवादीत् प्रसादं ! कुरु मा रुपः । तपस्तेजोनिधे ! नायमपमानं नृपोऽर्हति ॥ ७५ ॥ किन्तु दुष्कर्मणोऽमुष्य
पवित्रीकारकारणम् । शास्त्रानुपाति यत् किञ्चित् तदेवाऽऽशु समादिश ॥ ७६ ॥ मुनिरूचेऽङ्गारमुख ! शुद्धिरस्य तदा भवेत् ।
सर्वस्वं यद्यसौ दत्ते दानं ह्यघनिवृत्तये ॥ ७७ ॥ सोच्छ्वासं नृपतिः प्रोचे प्रसीद भगवन् ! मयि । सर्वस्वं मे गृहाण त्वं विलयं

यात्वघं मम ॥ ७८ ॥ किं न प्राप्तं मया त्रातः ! शुध्यामि यद् यतस्ततः । सग्रामाऽश्वेभकोशाभूर्दत्ता तेऽम्बुधिमेखला ॥ ७९ ॥
प्रणम्य मुनिमङ्गारमुखः प्राह कृताञ्जलिः । राजा यदभिधत्ते तद् भगवन् ! प्रतिपद्यताम् ॥ ८१ ॥ अथाऽपसार्य राजानमूचतुः
सुहृदौ मृदु । अकाण्डे कोऽयमुत्पातो राजन् ! विमृश मा मुहः ? ॥ ८२ ॥ राजाऽवज्ञाय तद्वाचमूचे सप्रश्रयं मुनिम् । यदुक्तं
भगवन्नस्तु गृहाण वसुधामिमाम् ॥ ८३ ॥ क्षमाधारं मुनिः प्राह दत्ताऽसभ्यं मही त्वया । नार्हस्यतः परं पृथ्व्या भोगमा-
मिति सोऽब्रवीत् ॥ ८४ ॥ तदा तत्रागतं वाराणसीतः शिष्यमात्मनः । मुनिं कौटिल्यनामानमाजूहवत् स तापसः ॥ ८५ ॥
हरिश्चन्द्रेण मे पृथ्वी दत्ता जलधिमेखला । इत्यर्थे खलु साक्षी त्वमिति तं मुनिरादिशत् ॥ ८६ ॥ कौटिल्योऽप्यवदद् राजन्न-
त्रार्थे साक्षिणो वयम् । ओमित्युक्ते नृपेणाऽगात् स स्वं स्थानं मुदं नृपः ॥ ८७ ॥ अथ व्यजिज्ञपत् कोऽपि शिष्यो यावदियं
मृगी । तिष्ठेत् तावद् विपन्ना न पाठस्तत् क्रियतां किमु ? ॥ ८८ ॥ सखेदं मुनिरूचेऽस्याः कारयाऽनलसंस्कृतिम् ।
वञ्चनाऽऽह मया सार्धमस्याः स्यादग्निसंस्कृतिः ॥ ८९ ॥ राजा तां विनयादूचे ममैकं दुर्नयं सह । अहं तुभ्यं
प्रदास्यामि स्वर्णलक्षमसंशयम् ॥ ९० ॥ कष्टादिव तयाऽप्योमित्युक्ते प्राह मुनिस्ततः । दीयतां तर्हि हेमाऽस्यै राजा प्राहैत
मत्पुरे ॥ ९१ ॥ प्रातः सन्ध्याविधिं कृत्वा पश्यैते वयमागताः । इत्याकर्ण्य मुनिं राजाऽवोचत् तर्ह्यधुना वयम् ॥९२॥ इक्ष्वा-
कुवंशभूपालगुरुं श्रीनाभिसंभवम् । देवं शक्रावतारस्थमर्चित्वा यामः धामनि ॥ ९३ ॥ ( युग्मम् ) एवं कृत्वा च पाश्चात्याग-
तसैन्येन संयुतः । हरिश्चन्द्रनृपोऽयोध्यां प्रविवेश दिनात्यये ॥ ९४ ॥ अथ राज्यमहास्तम्भः सर्वनीतिविशारदः । मन्त्री मित्रं
च तस्यासीद् वसुभूतिर्महीपतेः ॥ ९५ ॥ कुन्तलाद् ज्ञातवृत्तान्तः स दध्यौ हृदि हा ! कथम् । अपर्यालोचयन्तोऽर्थं राजानः

देशाद् देशप्रवासो हि स्वीकृतो भूभुजा स्वयम् ॥९७॥
स्वोपघातकाः ? ॥ ९६ ॥ ददता वसुधां तस्मै तापसाय दुरात्मने । विजृम्भितम् ॥ ९८ ॥ अविमृष्टायतिर्भूपः
यदन्येनाऽदृष्टचरो वराहं कोऽप्यवेदयत् । भूभुजे तद् ध्रुवं किञ्चिद् दिव्यमेतद् कुर्युर्यत् किञ्चन महीभुजः ।
क्षीयते न्यायवानपि । अत एव विमृष्टारः सन्निधेयाः सुमन्त्रिणः ॥ ९९ ॥ किं कुर्मो दुर्धियः विलासमण्डपेऽह्नाय
नत्तत्प्रतिक्रियाव्यग्रैः क्लिश्यते सचिवैः पुनः ॥ १०० ॥ विमृश्यैवं तदामात्यः सशल्य इव निःश्वसन् । प्रतिज्ञातमकु-
मचिन्त्यो नृपतिं ययौ ॥ १०२ ॥ नत्वोपविष्टे तस्मिंश्च मन्त्रिणि प्राह भूपतिः । वराहाऽऽवेदकस्याग्रे न्यवेदयत् ॥ १०३ ॥
ष्महि ॥ १०२ ॥ मन्त्र्याह देव ! तत् सर्वं वृत्तान्तं ज्ञातवानहम् । राज्ञोचे सस्मितं तर्हि कुन्तलस्तद् ॥ १०४ ॥ किन्तु विज्ञपयि-
मन्त्री प्राह विभो ! कस्य प्रभुत्वं न मुदे भुवि । अनौचित्यमपि स्तौति यत्रौचित्यमिवाऽनुगः ॥ १०४ ॥ किन्त्वेतद् युक्तं नो
ष्यामि कर्णयोः कटु किञ्चन । नाथाऽयं वसुधात्यागो नहि मे प्रतिभासते ॥ १०५ ॥ राज्ञोचे सत्यं प्रयातु निधनं कुलम् ।
युक्तमेव वा । प्रारम्भाद् युज्यते पूर्वं निर्वाहोऽङ्गीकृते पुनः ॥ १०६ ॥ किञ्च यान्तु श्रियो नाशं स्वर्णलक्षं हि ढौकस्व
प्रवासो वाऽस्तु निर्वाहः प्रतिज्ञाते भवेद् यदि ॥ १०७ ॥ अलं तदेतया पूर्वकृतमीमांसयाऽधुना । अगोचरे वाचां राज्ञोऽस्य
स्वेनाऽयातिमुनिर्यतः ॥ १०८ ॥ ततः सशिष्यः स मुनिः कुर्वन्नागाद् नृपस्तुतिम् । अहो ! स्वर्णलक्षं महीपतिम् ॥११०॥
चरितं महत् ॥ १०९ ॥ पुरोभूय नृपस्याऽसौ सकोप इव मायया । अयाचत स्वशिष्येण राज्ञोक्तः सचिवस्तस्मै
नृपाऽऽदेशादथादिक्षत् स मन्त्री कुन्तलं ततः । सोऽपि स्वर्णं समादाय मुमोच नृपतेः पुरः ॥१११॥ कुत एतन्मुनिर्जगौ ।
तापसाय ह्युपानयत् । सोऽपि वीक्ष्य किमेतद् भोः ! पप्रच्छेति नृपं मुनिः ॥११२॥ राज्ञोचे वञ्चनास्वर्णं,

अथाख्यद् नृपतिः कोशात्, बहिरन्तः स वा क्षितेः ? ॥ ११३ ॥ इत्युक्ते मुनिना राजा प्राह मध्ये क्षितेर्मुनिः । ब्रूते स्वामी क्षितेः कोऽत्र राजाऽऽख्यत् त्वं न चाऽपरः ॥ ११४ ॥ मुनिरूचे ततः कोऽयं प्रकर्षः कौशलस्य ते । यन्मदीयेन हेम्ना मेऽनृणीभवितुमिच्छसि ? ॥ ११५ ॥ तदास्तां काञ्चनं यामो दृष्टं सत्यं तवेयता । इत्युदित्वा मुनौ याति राजा तस्य पुरोऽवदत् ॥११६॥ विलम्बध्वं क्षणं यावदानयाम्यन्यदन्यतः । सकष्टमिव तस्थौ च स मुनिर्भूभुजाऽर्थितः ॥११७॥ ततो राजा मन्त्रिकर्णे किमप्याचष्ट मन्त्र्यथ । केनचित् पुरुषेणाऽऽश्वऽजूहवद् वणिजोऽखिलान् ॥११८॥ मुनिना दिव्यशक्त्या ते हरिश्चन्द्रे द्विषः कृताः । संभूय मन्त्रयामासुः स्वामी नोऽतः परं मुनिः ॥११९॥ हरिश्चन्द्रस्य दत्तेन किं द्रव्येण वृथाऽधुना ? । यो हि स्वामी पुरस्याऽस्य देयोऽस्माभिः करोऽस्य तत् ॥१२०॥ इति मन्त्रयतो मन्त्री तानूचे रहसि स्थितः । राजा वोऽर्थयते स्वर्णमधमर्णो मुनेः स यत् ॥१२१॥ पश्यतस्तान् मिथो वक्तुं स्वर्णदाने कृतोत्तरान् । हरिश्चन्द्रस्ततोऽभ्येत्य स्वयमर्थयते स्म तान् ॥१२२॥ हे पौराः ! वोऽञ्जलिर्बद्धो दत्त स्वर्णं कियन्मम । कुतश्चिदपि याचित्वा दास्ये वः काञ्चनं पुनः ॥१२३॥ अल्पद्रव्या वयं दातुं स्वर्णलक्षं न शक्नुमः । इत्यूचिवांसो वणिजो राज्ञाऽऽदिष्टा ययुर्गृहम् ॥ १२४ ॥ विलक्षोऽथ नृपो दध्यौ किं करोमि कुतः पुनः । समानयामि तत् स्वर्णं हा ! धिक् कीदृगुपस्थितम् ? ॥ १२५ ॥ ततः कुलपतिः कोपकम्पमानाधरोऽवदत् । विलम्बः कोऽयमद्याऽपि राजन् ! विसृज मां ततः ? ॥ १२६ ॥ वसुभूतिर्मुनिं प्राह विश्वदृश्वा त्वमस्यथ । हरिश्चन्द्रसमः क्वाऽपि दृष्टः किं कोऽपि सात्त्विकः ? ॥ १२७ ॥ सोपहासमुवाचाऽथाङ्गारवक्त्रो न मन्त्र्यपि । दृष्टोऽभूत् त्वादृशो नाऽपि हरिश्चन्द्रसमो नृपः ॥ १२८ ॥ नृपं प्रति मुनिः प्रोचे मायाविन् ! किं वृथोदितैः ? । हंसि मध्याह्नसन्ध्यां नः सत्त्वं सत्यं च ते ह्यदः ? ॥१२९॥ ऊचेऽङ्गार-

मुग्धो राजन्! वाञ्छसि त्वं किमात्मनः ? कुलस्य यशसो लोकस्याकस्मिकमिह क्षयम् ? ॥ १३० ॥ प्रणम्योचे नृपो भीते-
स्ततः किं स्यात् क्षयोऽपि नः ?। उपपूर्वाचलं नैव ग्रहाणामस्तसम्भवः ॥ १३१ ॥ निहन्ति पार्ष्णिना भूपं मुनिस्तं नतवान्
नृपः। कोपे क्षान्तौ च तावेव तदाऽभूतां निदर्शने ॥ १३२ ॥ सरोषमङ्गारमुखो भूपं प्राह नृपाधम!। विप्लावयसि किं
नस्त्वं मृषाभाषामहोदधे! ॥ १३३ ॥ आहाङ्गारमुखं मन्त्री विरोधस्ते मिथः कथम्। क्वेदृक् तपो रुषः क्वैमास्तन्मा ब्रह्म
कलङ्कय ? ॥ १३४ ॥ प्राहाऽङ्गारमुखः कोपादस्थापितमहत्तर!। कस्त्वमपि मम ब्रह्मचिन्तायां सचिवाधम!? ॥ १३५ ॥
अरे राजंस्त्वमेनं किमन्तरालापिनं वटुम्। न निवारयसे किं मे न प्रयच्छसि काञ्चनम् ? ॥ १३६ ॥ राज्ञोचे त्वं मुनिः स्वैरं
ब्रूहि मन्ये महोऽस्मि यत्। सूर्यवंश्या हि नैवेर्ष्यां भजन्ते यतिषु क्वचित् ॥ १३७ ॥ ऊचेऽङ्गारो यतिर्नाहं किन्त्वेष ब्रह्मराक्षसः।
ततो यद्यस्ति ते शक्तिस्तदा प्रहर सत्वरम् ॥ १३८ ॥ नृपो दध्यौ स्वप्रतिज्ञाघातिना कलहेन किम्?! तापसेन सहाऽनेन
क्रियते कृत्यमेव हि ॥ १३९ ॥ कर्णे च कथिते भूपेनाऽऽनीयाभरणान्यपि। कुन्तलेनाऽर्पितान्येष राज्ञोऽमूनीत्यपाकरोत्
॥ १४० ॥ कुन्तलो वसुभूतिश्चाहतुः कुलपते! नृपः। यावद् ददाति ते स्वर्णं तावदावां गृहाण भोः ॥ १४१ ॥ मुनिराह
त्वया जूर्णमार्जारेण करोमि किम्। अल्पेन कुन्तलेनाऽपि कः स्वर्णं स्वमुपेक्षते ? ॥ १४२ ॥ आदिक्षत् कुन्तलं राजा देवी-
भूषणमानय। स ययाचे ततो देवीं देव्याहैष्याम्यहं स्वयम् ॥ १४३ ॥ तेन दर्शितमार्गाऽसौ रोहिताश्वेन संयुता। आययौ
सदसि क्षिप्रं सुतारा सावगुण्ठना ॥ १४४ ॥ प्रणम्यैषा मुनिं प्रोचे गृहाणाभरणं मम। मुनिराह पितुर्भर्तुर्वैतान्येषाऽब्रवीदिति
॥ १४५ ॥ आर्यपुत्रेण मे योग्यं नेपथ्यमिदमर्पितम्। मुनिराह ततः केयं दक्षता ते प्रतिव्रते!? ॥ १४६ ॥ ऊचेऽङ्गारमुखः

किं न जानासि त्वमियं किल । महाकूटनिवासस्य हरिश्चन्द्रस्य गेहिनी ॥ १४७ ॥ त्वदीयमेवाऽर्प्यते वस्तु येत्युदितेऽमुना । आवद्धभ्रूकुटीभङ्गः कुन्तलोऽथ रुषाऽवदत् ॥ १४८ ॥ अरे ! तापस ! नो वेत्सि देवीमेतां महासतीम् । तदेप त्वं न भवसीत्युक्त्वा सोऽप्यवदद् नृपम् ॥ १४९ ॥ विमृशाऽद्यापि मा मुह्यः किं यतेः स्यात् परिग्रहः । वाचश्चेमाः स्युरेते हि मुनिव्याजेन राक्षसाः ? ॥१५०॥ ततः कुलपतिः क्रोधादूचे कर्मकराधम ! । आसादितपरज्ञानानधिक्षिपसि तापसान् ? ॥ १५१॥ यदि मेऽस्ति तपःसत्यं तदा त्वमधुना द्रुतम् । श्मशानवासी गोमायुर्भवेत्युक्त्वा शशाप तम् ॥१५२॥ कुन्तलो जम्बूको भूत्वा शब्दं कुर्वन् ययौ क्वचित् । प्रसीद मा कुपः स्वामिन् ! मुनिमित्यानमद्नृपः ॥ १५३ ॥ पादेनाहत्य परतः क्षिपति क्ष्मापतिं मुनौ । रोहिताश्वो रुदन्नाह मा स्म हन् पितरं मम ॥ १५४ ॥ किन्तु मां हि गृहाण त्वमिति श्रुत्वा शिशोर्वचः । मुनिः साश्रुदृशीभूय प्रोचेऽङ्गारमुखं मृदु ॥ १५५ ॥ बाष्परुद्धगलो नाऽस्मि शक्तोहं दातुमुत्तरम् । ऊचेऽङ्गारमुखो मैवं मुञ्च त्वमधुनैव हि ॥ १५६ ॥ क्रूरीभूय मुनिः प्राह सुतारां शिक्षितस्त्वया । बालोऽयं साऽऽह कृत्येषु नाऽयं शिक्षामपेक्षते ॥ १५७ ॥ यतः–
वृद्धोपास्तिं विनाऽपि स्याद् दक्षः स्फुर्तिमयः पुमान् । मणिः किं गारुडेऽधीती यदसौ हरते विषम् ? ॥ १५८ ॥ राजाऽथ सास्रं दध्यौ च यत् सजीवमजीवकम् । चेद् दत्तं प्राग् भुवा सार्धं ततः स्वर्णं ददे कुतः ? ॥ १५९ ॥ विलम्ब्य काञ्चनं कृत्वा कथञ्चिद् दातुमुत्सहे । इत्याह दैन्यात् स मुनिं मासमेकं सहस्व ते ॥ १६०॥ मुनिरूचे कथं पश्चाद् भिक्षयित्वा प्रदास्यसि ? । राजाहैक्ष्वाकवो भिक्षां दातुं दक्षा न याचितुम् ॥ १६१ ॥ कुतस्तर्हीति तेनोक्ते राजोचे मुनिपुङ्गव ! विक्रीय स्वमपीत्येतद् मुनिः श्रुत्वा विसिष्मिये ॥ १६२ ॥ वाचा तु कठिनः प्राह पृथ्वीं मुञ्च ममाऽधुना । राज्ञोचे कुत्र याम्याह स

न यत्रोपलक्ष्यसे ? ॥ १६३ ॥ राज्ञोक्त मे भुवं मुञ्च त्वमितीदं कियद् वचः ? । हन्त ! पूरयितुं सन्धां त्यजन्तीक्ष्वाकवो
तापून् ॥ १६४ ॥ ततोऽपचार्य ते प्रोचुस्तापसा मुदिता मिथः । अहो ! सत्त्वमहो ! सत्त्वमहो ! सात्त्विकस्तुश्च भूः ॥ १६५ ॥
देव्याह किमिद मन्त्रिन्नरिष्टं नः समापतत् । सोप्याह किमिदं वेद्मि दैवं पृच्छ नृपप्रिये ! ॥ १६६ ॥ विमृश्याह नृपो देवीं
गच्छान्तः पुरमात्मनः । सुताराऽऽह गमेष्यामि युष्माभिः सार्धमप्यहो ! ॥ १६७ ॥ सास्रं प्राह नृपो देवि ! सुकुमारःशिशुः
सुतः । पन्थानो विपमास्तत् त्वं तिष्ठाऽत्रैव व्रजाम्यहम् ॥ १६८ ॥ सावष्टम्भं सुताराऽऽह यद् भाव्यं तद् भवत्विह । आग-
मिष्याम्यहं सार्धं त्वया च्छायेव निश्चितम् ॥ १६९ ॥ पतिव्रते ! क्व चलिताऽसीत्युक्ते मुनिनाऽऽह सा । प्रवासे सह नाथेन
गेन पत्यनुगाः स्त्रियः ॥ १७० ॥ ममायत्तां हरिश्चन्द्रो नेष्यते त्विदमद्भुतम् । इत्युक्ते मुनिना प्राह वसुभूतिः क्रुधा ज्वलन्
॥ १७१ ॥ अरे ! तापस ! नासि त्वं विज्ञो लोकस्थितेः खलु । विद्धीदानीं स्त्रियो भर्तृदेवता न परात्मिकाः ॥ १७२ ॥ यत्
ग्राह व्यवहारज्ञस्त्वन्मन्त्री तत्र ते मतम् । इत्युक्ते तापसेनाह राजाऽपि मुनिपुङ्गवम् ॥ १७३ ॥ मम स्त्रैणस्य पौंस्नस्य देश-
कोशा-ऽश्व-हस्तिनाम् । किमन्यद् देव्याः पुत्रस्य त्वमेव स्वाम्यतः परम् ॥ १७४ ॥ तत् त्वं चेन्मन्यसे देवी तदायातु मया
सह । देव्याह विसृज त्वं मां मुने ! स प्राह याहि तत् ॥ १७५ ॥ किन्तु मुक्त्वाऽऽभरणानि यातेति मुनिनोदिते । मुमोच
नृपतिः सर्वं नेपथ्यं मुकुटादिकम् ॥ १७६ ॥ सुताराऽऽह पुनः किञ्चिदस्त्ववैधव्यलक्षणम् । भूषणं भगवन्नेवं निशम्य
मुनिरब्रवीत् ॥ १७७ ॥ तव भद्रे ! हरिश्चन्द्र एवाऽवैधव्यलक्षणम् । इति वाचि मुनौ सास्रा सुताराऽप्यभवत् ततः ॥ १७८ ॥
मन्त्री प्राह मुनिं कोपादरेरे ! ब्रह्मराक्षसः ! । नृपोऽविज्ञोऽददत् ते क्ष्मां, किं वा गृह्णन्नितो भवान् ॥ १७९ ॥ क्रुधा प्रोचे मुनि-

नाऽयं कृत्येषु विदुरो नृपः । नचाऽहमपि विज्ञोऽस्मि, विज्ञस्त्वं योऽन्तरायकृत् ॥ १८० ॥ मुनिः क्रुधाऽक्षिपद् भूमौ गृहीत्वाम्भः कमण्डलोः । आह चास्ति तपश्चेन्मे तदा त्वं द्राक् शुको भव ॥ १८१ ॥ ततश्च सचिवः कीरो भूत्वाऽगाद् नभसा क्वचित् । राजा तु सभयं नत्वाऽवोचदेष गतोऽस्म्यहम् ॥१८२॥ निवार्य रुदतो भूपः पूर्लोकानन्वयप्रियान् । क्षमयित्वा स्वापराधान् प्रतस्थे सप्रियासुतः ॥१८३॥ अनुरागाल्लुठद्बाष्पमनुयान्तं पुरीजनम् । कष्टान्निवर्तयामास राजा स्नेहगिरा मृदुः ॥ १८४ ॥ प्रचलन् सात्त्विकः पुत्र—कलत्राभ्यां समन्वितः । कथं कथमपि प्रांतमध्वनः प्राप भूपतिः ॥ १८५ ॥ दूरमार्गपरिश्रान्ता सुतारा नृपमब्रवीत् कियदद्यापि गन्तव्यं खिन्नान्यङ्गानि नाथ ! मे ? ॥ १८६ ॥ उवाच नृपतिर्देवि । मा ताम्यः किं न पश्यसि । अभ्रंलिहगृहाकीर्णामाराद् वाराणसीं पुरीम् ? ॥ १८७ ॥ अतीव यदि खिन्नाऽसि वहन्ती पुत्रमात्मना । अनुगङ्गातटं रूढं तदा चम्पकमाश्रय ॥ १८८ ॥ देव्या तथाकृते राजा स्वेनैव समवाहयत् । यथासुखं तदङ्गानि ततो देवी व्यचिन्तयत् ॥ १८९ ॥ यदा हि संपदः पुंसां तदा सर्वोऽनुगच्छति । इदानीमार्यपुत्रं यन्न कोऽप्यागादनुव्रजन् ॥ १९० ॥ स्तुत्यः स्तौतीहते काम्योऽनुगम्योऽप्यनुगच्छति । नरं यस्यां प्रसन्नायां को हि नेच्छति तां श्रियम् ? ॥ १९१ ॥ स्वप्न-दृश्या ततोऽभूद् नः सा संपद् यां विनाऽधुना पद्भ्यां यानं क्षितौ शय्या कदाहारो मनःक्लमः ॥ १९२ ॥ इत्यूचाना पिधा-याऽऽस्यं रुरोदोच्चैर्नृपप्रिया । रोहिताश्वस्ततोऽरोदीद् भूत्वा साश्रुर्नृपोऽवदत् ॥ १९३ ॥ मा रोदीर्भव धीरा त्वं सात्त्विकत्वमुरी-कुरु । मा मा शोक पिशाचोऽस्मान् गृह्णातु परितो भ्रमन् ॥ १९४ ॥ रोहिताश्वस्ततोऽवोचदहं तात ! बुभुक्षितः । राजाऽऽ-दिक्षदरे ! क्षिप्रं देहि वत्साय मोदकम् ॥ १९५ ॥ न कोऽपि यावदायाति विलक्षो नृपतिस्ततः । किमेतदिति देव्योक्तः

पूर्वाभ्यासोऽब्रवीदिति ? ॥ १९६ ॥ रोहिताश्वः पुनः प्राह हे ! मातः ! क्षुधितोऽस्म्यहम् । रुदती तारतारं सा सुतारा
सुतमब्रवीत् ॥ १९७ ॥ चक्रवर्तित्वप्रतिभूलक्षणोपेतवर्ष्मणः । भरतान्वयजातस्याऽवस्था केयं तवागता ? ॥ १९८ ॥ अथ
दध्यौ नृपःकीदृग् राज्यस्यैतादृशः फलम् । रुदतो यत् तनूजस्य प्रातराशेऽप्यशक्तता ॥ १९९ ॥ आस्तां विनोदयाम्येनं
कौतुक-प्रेक्षणादिभिः । पश्येत पुत्र ! गङ्गायां मिथः क्रीडन्ति पक्षिणः ॥ २०० ॥ हंसोऽयं सारसोऽयं च कोकद्वन्द्वमिदं
पुरः । कलापं पूरयित्वा च नृत्यत्येप शिखी कथम् ? ॥ २०१ ॥ तन्नामोच्चारपूर्वं तु वीक्षमाणः सविस्मयम् । रोहिताश्वः पुनः
प्राह ताताऽहं क्षुधितो भृशम् ॥ २०२ ॥ सवैलक्ष्यं पुनर्भूपे बोधयत्येवमेव तम् । आगादकस्मात् क्वाप्येका वृद्धा पाथेयम-
स्तका ॥ २०३ ॥ पृच्छन्ती नगरीमार्गं भूपं साऽऽहेदमद्भुतम् । चक्रिणो लक्षणान्यङ्गेऽवस्था च कथमीदृशी ? ॥ २०४ ॥
कथा नः श्रूयमाणाऽपि कातराणां भयावहा । तन्मा पृच्छ पुरो गच्छ राज्ञेत्युक्ते चचाल सा ॥ २०५ ॥ मोदकं देहि मे तात !
मुनरामितिभापिणि । रोहिताश्वे ततो वृद्धा निवृत्त्य तमढौकयत् ॥ २०६ ॥ स्वयं निर्लम्पटत्वेन सात्त्विकस्य सुतत्वतः ।
बुभुक्षितोऽपि बालोऽपि रोहिताश्वोऽग्रहीन्न तम् ॥ २०७ ॥ नानुकम्पाप्रदानं ते गृह्णीमो वयमध्वगे ! । प्रत्याख्यातेति राज्ञा
सा ययौ क्वापि क्षणादपि ॥ २०८ ॥ देवि ! चेद् गतखेदाऽसि तदोत्तिष्ठ पुरीं प्रति । याम इत्थं नृपेणोक्ते सुताराऽऽह
सगद्‌गदम् ॥ २०९ ॥ निजराज्यपरिभ्रंशलज्जासज्जमनाः कथम् । प्रवेक्ष्यत्यार्यपुत्रोऽत्र वैरीपुर्यां स्थितद्विपि ? ॥ २१० ॥
सावष्टम्भं नृपः प्राह का लज्जासत्त्वशालिनाम् ? । पूर्णीकर्तुं निजां सन्धामापदो यदि तन्महः ॥ २११ ॥ सुताराऽऽह भवेद्
दैवात् सा काऽप्यापदतर्किता । यत्र स्वस्य पराभूतिर्वैरिवर्गस्य तूत्सवः ॥ २१२ ॥ राजा प्रोवाच देवि ! त्वं न विचार्य

इदं पुराकृतं कर्म प्रभवत् केन वार्यते ? । तत्प्रभावाद्
प्रभाषसे । लक्ष्म्या बलेन वा हीनो यदि स्यां तत् पराभवः ॥२१३॥
दशाऽस्माकं यद्येषा तद् द्विषां किमु ? ॥ २१४ ॥ ततः प्रति पुरीं राजा प्रतस्थे प्रियया सह । तामाह स्यात् कुतः स्वर्णं
यदासन्नोऽवधिर्मुनेः ? ॥ २१५ ॥ मां विक्रीयाऽऽर्यपुत्राऽस्मै तद् यच्छेति तयोदिते । राज्ञोक्तं विक्रयश्चेत् तत् सर्वेषां नहि
कस्यचित् ॥ २१६ ॥ रोहिताऽश्वो ब्रवीत् सास्रं मां विक्रेष्टाऽस्तु मा पितः ! । मातर्वारय तातं मां विक्रीणानं पुरे धनैः
॥ २१७ ॥ सुतारा रोदिति क्ष्मापो बाष्पं रुद्ध्वाऽऽह वत्स ! कः विक्रेष्यते त्वां, सोऽप्याह तात ! विक्रेष्यते भवान् ॥२१८॥
त्वदन्तिकेऽम्ब ! स्थास्यामि यास्याम्यन्यगृहे न तु । वरं मे मोदकं मा दा इत्यूचानो रुरोद सः ॥ २१९ ॥ राज्ञोचे देवि !
नैवाहं पुत्रस्य करुणं वचः । श्रोतुं शक्नोमि तदिमं कथञ्चिदपि वारय ॥ २२० ॥ रुदत्याह सुतारा त्वं चक्रवर्ती भविष्यसि ।
मा रोदीस्तिष्ठ वत्स ! त्वां विक्रेष्यति न कश्चन ॥ २२१ ॥ रोहिताश्वस्य वाचाऽथ मनो मर्माविधा रुदन् । पुरीभृतकवीथ्यां
स तस्थौ श्रेण्यां नृपस्ततः ॥ २२२ ॥ किञ्चिद् विमृश्य च क्षिप्रं तृणान्यानीय भूपतिः । न्यसन् मूर्ध्नि सुतारोक्तः प्राहैषा
भृतकस्थितिः ॥ २२३ ॥ रोहिताश्वं धुनानं स्वं शिरः प्राह ततो नृपः । विधेहि मद्वचो वत्स तुभ्यं दास्यामि हस्तिनम् ॥२२४॥
दध्यौ सुतारा धिग् दैवं भवे भवशतानि यः । दत्ते यन्नः क्व सा लक्ष्मीः क्वैषा विक्रयवाच्यता ? ॥ २२५ ॥ राजाऽप्यचि-
न्तयद् दत्ता न तथाऽकीर्तये मही । यथा ह्यकीर्तये पत्नी-पुत्रयोरिह विक्रयः ॥ २२६ ॥ विसृजामि सुतरां तत् सपुत्रां
पितृवेश्मनि । यदभाव्यं तदहं सोढा ध्यात्वेत्यूचे च तां नृपः ॥ २२७ ॥ देवि ! याहि पितृकुलं पुत्रमादाय सम्प्रति । यथा
तथाऽप्यहं स्वर्णं दास्यामि मुनये खलु ॥ २२८ ॥ साक्षेपं प्राह देवी तु किन्तु स्यात् प्रलयेऽप्यदः ? । विमुच्य त्वामहं यान्ती

सत्यं जाताऽस्मि दुर्जना ॥ २२९ ॥ सरसीव पयःपूर्णे सर्वमृद्धौ समं भवेत् । नैःस्व्ये स्व-परयोर्भेदः शुष्केऽस्मिन्नुच्च-नीचवत्
॥ २३० ॥ किञ्च—वरं मृत्युर्वरं भिक्षा वरं सेवाऽपि वैरिणाम् । दैवाद् विपदि जातायां स्वजनाऽभिगमो न तु ॥ २३१ ॥
अपिच—सा सती या ह्रिया भर्तुः सम्मुखे दिवसेऽनुगा । तनुच्छायेव धैर्येण प्रतीपेऽस्मिन् पुरो भवेत् ॥ २३२ ॥ इतश्च
ब्राह्मणः कोऽपि वीक्षमाण इतस्ततः । भृतिकां काञ्चिदायासीदुपभूपं स उन्मुखः ॥ २३३ ॥ दृष्ट्वा च भूपमापादमस्तकं
चक्रिलक्षणम् । ऊचे कस्त्वं कथं देहं श्रीगेहं भृतकीयसि ? ॥ २३४ ॥ शुचाऽऽत्तमौनं भूपालमालप्याऽगच्छदग्रतः । दृष्ट्वा
सुतारां सास्रोऽभूदुच्चैर्दैवं निनिन्द च ॥ २३५ ॥ रतेरपि शिरोरत्नमेतां निर्माय सुन्दरीम् । कथं नयसि रे ! दैव ! हन्त !
दास्यनिडम्बनम् ॥२३६॥ यतः—स्निग्धमङ्गं सतीरूपं सुवर्णं साधुभाषितम् । धत्ते किमपि लावण्यमसंस्कृतमपीतरत् ॥२३७॥
सुतारायाः पुरः पुण्यं रोहिताश्वं सुलक्षणम् । दर्भाङ्कशिरसं प्रेक्ष्य धिक् शास्त्रमिति सोऽब्रवीत् ॥२३८॥ शास्त्रेषु लक्षणानीह कथ्यन्ते
यानि कानिचित् । सन्ति सर्वाणि तान्येषामवस्था पुनरीदृशी ॥२३९॥ नृपः स्वानुभवं प्राह मा मैवं त्वं द्विज ! ब्रवीः । शास्त्रं
नहि मृषाभापि किन्तु मे कर्मवैभवम् ॥ २४० ॥ पूर्वे जन्मनि यश्चक्रे ददतामदतां स्वयम् । श्रेयश्च कुर्वतामन्तरायः स इह
भुज्यते ॥२४१॥ तद्वशादीदृशी चेत् तेऽवस्थैषा तच्छुचाऽत्र किम् । सर्वं विषहमाणो हि कर्मभिर्मुच्यते जनः ॥२४२॥ किमस्या
मूल्यमित्युक्ते ब्राह्मणेन मुहुर्मुहुः । कथञ्चिद् रुद्धबाष्पोऽथ राजाऽऽख्यदुचितं हि यत् ॥२४३॥ ततः स्वर्णसहस्राणि पञ्चाऽस्या
मूल्यमस्तुः भोः ! । वदतीति द्विजे राजा लज्जयाऽधोमुखोऽभवत् ॥ २४४ ॥ अनिषिद्धमनुज्ञातमिति विप्रे नृपाञ्चले ।
स्वर्णं बध्नाति राजाख्यद् मोक्षोऽस्या द्विगुणेन भोः ॥ २४५ ॥ तत् प्रपद्य द्विजः प्राह सुतारामग्रतो भव । चलितायां

सुतारायां रोहिताश्वोऽञ्चलेऽलगत् ॥२४६॥ रुदतीदं सुताराऽऽह तिष्ठ त्वं पितुरन्तिके । आनेतुं मोदकं तुभ्यं वत्स ! यान्त्यस्मि सम्प्रति ॥ २४७ ॥ अमुञ्चत्यञ्चले तस्मिन् मुहुर्मात्राऽपि बोधिते । भृतिके किं विलम्बोऽयमिति क्रुद्धो द्विजोऽवदत् ॥ २४८ ॥ सुतारां सभयं यान्तीं यावद् मुञ्चति नार्भकः । तावत् करतलेनैतमाहत्याऽपातयद् द्विजः ॥ २४९ ॥ सबाष्पं पुनरुत्थाय मातुर्वस्त्राञ्चलेऽलगत् । पुनर्द्विजेन भूमौ स पादेनाऽऽहत्य पातितः ॥ २५० ॥ राजा सास्रं ततो दध्यौ धिगापदमिमां मम । इन्द्रस्याऽप्यङ्कलाल्योऽयं पदा विप्रेण हन्यते ॥ २५१ ॥ ततः प्रोचे नृपो विप्र ! न तिष्ठेद् मातरं विना । शिशुः किमपि ते कर्म कर्ता क्रीणीह्यमुं ततः ॥ २५२ ॥ नैतं मुधाऽपि गृह्णामीत्यूचानं द्विजमब्रवीत् । सुताराऽऽर्य ! गृहाणैनं विधाय मय्यनुग्रहम् ॥ २५३ ॥ विप्रोऽपि कृपया स्वर्णसहस्रं तस्य वेतने । कृत्वा दत्त्वा च राज्ञे, तावादाय स्वगृहं ययौ ॥ २५४ ॥ राजा दध्यौ न लप्स्येऽहं पुरे वासं ततो मुनिः । यद्येति स्वर्णमेतस्मै दत्त्वा स्यामकुतोभयः ॥ २५५ ॥ ततः कुलपतिः कुर्वन्नाज्ञामिव समाययौ । कोपात् पराङ्मुखीभूय प्रोचे द्राग् देहि हेम मे ॥ २५६ ॥ गृहाण कियदप्येतदित्युक्ते भूभुजा मुनिः । उवाच कुपितस्त्वैतद् ग्रहीष्येऽल्पं न काञ्चनम् ॥ २५७ ॥ मासोपरि गताः पञ्च दिना यदि तदाऽपि हि । कियदेव ब्रुवाणस्त्वमदश्यास्य ! न लज्जसे ॥ २५८ ॥ दध्यौ राजाऽधमर्णं धिगुत्तमर्णस्य दुर्गिरः । यः सहन्नपि भूयोऽपि तं प्रीणयति चाटुभिः ॥ २५९ ॥ ऊचे च भगवन्नेव काऽपि मे चित्तदुष्टता । विक्रीय दयिता-पुत्रो यत् प्राप्तं तत् समर्पये ॥ २६० ॥ ऊचेऽङ्गारमुखो मूर्ख ! राजानं प्रार्थय द्रुतम् । चन्द्रशेखरमत्रत्यं किं विक्रीतौ प्रिया-सुतौ ? ॥ २६१ ॥ राजाऽऽख्यत् किमिदं ब्रूषेऽनुचितं सत्त्वशालिनाम् । शतशो हि पराभूतान्नाहं प्रत्यर्थिनोऽर्थये ॥ २६२ ॥ प्रतिज्ञाभ्रष्ट ! वाचाट ! पुरो नः स्वं

निष्क्रयसे । इत्युक्ते मुनिना प्राह राजा मा स मुने ! कुपः ॥ २६३ ॥ चण्डालस्याऽपि कर्माऽहं कृत्वा दुष्करमप्यथ । दास्ये
स्वर्णमिति क्ष्मापोक्तेऽभूद् रोमाञ्चितो मुनिः ॥ २६४ ॥ ततः कौपीनवासोभृल्लघुपिङ्गकचोच्चयः । दृढयष्टिकरो वृद्धो निषादः
कोऽपि चाऽगमत् ॥ २६५ ॥ राजानं वीक्ष्य स प्रोचे रे ! त्वं कर्मकरोऽसि किम् ? करिष्यसि च मे कर्म तत् श्रुत्वाऽचिन्तयद्
नृपः ॥ २६६ ॥ रुचिरस्तन्नतो लोकः क्रायको नास्ति नो मुनिः । क्षमते तन्निषादस्यापि कुर्वे कर्म सम्प्रति ॥ २६७ ॥ करिष्ये
कर्म तेऽवश्यं राज्ञेत्युक्तेऽथ सोऽवदत् । किं किं कर्ताऽसि मे कर्म राजाऽऽदिशसीह यत् ॥ २६८ ॥ रक्षितव्यं श्मशानं च
लातव्यं मृतकाम्बरम् । अर्धदग्धानि काष्ठानि ग्राह्याणि च चितिचयात् ॥ २६९ ॥ यत् तत्रोत्पद्यते तस्यार्धं हि गृह्णाति
भूपतिः । अन्यस्यार्धस्य भागौ द्वौ ममैकस्ते तु दास्यते ॥ २७० ॥ राजाऽऽदिशति यत् किञ्चित् तच्च कार्यं त्वया सदा । गङ्गा-
महाश्मशानेशः कालदण्डाभिधोऽस्म्यहम् ॥ २७१ ॥ इति श्रुत्वा नृपः साह तं त्वदाज्ञाकृदस्म्यहम् । यदत्र मां प्रति स्यात् तद्
दातव्यं मुनये खलु ॥ २७२ ॥ अपवार्य मुनिः प्रोचे नमस्ते सत्त्वशालिने । नमस्ते सत्यसन्धाय नमस्ते धैर्यसद्मने ॥ २७३ ॥
कालदण्डोऽपि तद्वाचं प्रपन्नः साक्षिणं मुनिम् । कृत्वा सह नृपेणासौ श्मशानमगमद् निजम् ॥ २७४ ॥ इतश्च पुर्यामेतस्या-
मकस्मादपि देहिनाम् । जीवितव्यं हरन् मृत्युरुपतस्थे खलो यथा ॥ २७५ ॥ ततश्च परितः प्रोद्यदाक्रन्दध्वनिभिर्जितः ।
निलीयाऽस्थादिव क्वापि नगरे मङ्गलध्वनिः ॥ २७६ ॥ मृत्योर्भीता जना रक्षां विदधत्यात्मनो यथा । तथा प्रेरितवन्मृ-
त्युस्तान् गृह्णाति सहस्रशः ॥ २७७ ॥ श्रुत्वाऽथ दुःसहलोकाऽऽक्रन्दं मरणजं पुरे । आह्वत् सत्यवसुं भूपो मन्त्रिणं चन्द्र-
शेखरः ॥ २७८ ॥ राजादेशात् समायान्तं मन्त्रिणं कोऽपि पूरुषः । अन्तरा मिलितोऽनंसीत् कीरपञ्जरपाणिकः ॥ २७९ ॥

कलहंस! त्वया कीरो लब्धोऽयं क्वेति मन्त्रिणा। पृष्टे स प्राह चम्पाया वने देवैनमाप्नुवम् ? ॥ २८० ॥ चन्द्रशेखर भूपाय सदाप्रियविपश्चिते। सर्वशास्त्रनदीष्णत्वादिहाऽऽनैषं शुकोत्तमम् ॥ २८१ ॥ इति तद्वचनं शृण्वंस्तेनैव सह मन्त्रि-राट्। ययावुपनृपं नत्वा यथास्थानमुपाविशत् ॥ २८२ ॥ सखेदं प्राह भूपालो मन्त्रिन्! पश्य पुरीजनः। संकोचितायु-र्दैवेन याति वातेन दीपवत् ॥ २८३ ॥ न वयं दुर्नया नाऽपि श्लथधर्मः पुरीजनः। नृणामकालमृत्युश्च तदन्वेषय कारणम् ॥ २८४ ॥ ततश्च कुट्टिनी काचित् पुत्रीमरणविह्वला। उरस्ताडं समागत्य साक्षेपं नृपमब्रवीत् ॥ २८५ ॥ सदैवाऽन्यायकारी त्वं सदा पीडयसि प्रजाः। सदाऽपि पापनिष्ठोऽसि तेनाऽयं म्रियते जनः ॥ २८६ ॥ मत्पुत्री नामतोऽनङ्गसुन्दरी स्मरमञ्जरी। प्रकीड्य सुखशय्यायां सुप्ताऽकस्माद् मृताऽस्ति हा! ॥ २८७ ॥ अहो! कर्कशता ह्यस्या अहो! निर्लज्जता गिराम्। इति ध्यायन्नृपेणोक्ते मन्त्री किं क्रियतामिति ? ॥२८८॥ मन्त्र्याह स्वामिन्नत्रार्थे प्रगल्भन्ते हि मान्त्रिकाः। राजा प्राहाऽऽगतोऽ-स्तीहोज्जयिन्या मान्त्रिको महान् ॥ २८९ ॥ तत आकार्यतामेष इत्युक्तो मन्त्रिणा नृपः। आजूहवत् तदैवैनं सोऽप्यागत्य समाविशत् ॥ २९० ॥ राजोचे मान्त्रिकं किं नः पुर्यां मारिविजृम्भितम् ?। सोऽप्याह नाटयन् ध्यानं राक्षसीललितं ह्यदः ॥ २९१ ॥ वृद्धवेश्याऽऽह साऽऽश्वासं पुत्रिका मम मान्त्रिक!। मृताधुनैव स प्राह जीवयिष्यामि तां खलु ॥ २९२ ॥ सा वस्त्राञ्चलमादाय भ्रमयित्वा शिरस्यधात्। मदाशिषः प्रभावेन चिरं त्वं जीव मान्त्रिक! ॥ २९३ ॥ ततो दासी समागत्य कुट्टिन्यै समचीकथत्। मातस्त्वं वर्धसे दिष्ट्या यतो जीवति ते स्वसा ॥ २९४ ॥ ततः प्रत्ययतो राजा सादरं प्राह मान्त्रिकम्। आनेतुं प्रभवस्येनां राक्षसीमथ सोऽब्रवीत् ॥ २९५ ॥ किमेवं कथ्यते देव! मन्त्रेणाऽऽकृष्य वासुकिम्। पातालाद् वासवं

म्रगाद्, अब्धेर्लङ्कामिहानये ॥ २९६ ॥ यद्यस्ति कौतुकं तत् त्वं सामग्रीमुपढौकय । माष-सर्षप-लवणान्युत्खन्नानष्ट पूरुषान्
॥ २९७ ॥ क्षणात् तथाकृते राज्ञा मान्त्रिको मण्डलं व्यधात् । तदन्तरुपविश्याथ किञ्चिद् ध्यानमनाटयत् ॥ २९८ ॥ दिक्-
पालाह्वानमर्चानां मन्त्रानुच्चैरथोच्चरन् । मान्त्रिको राक्षसी मन्त्रैराचकर्ष विहायसा ॥ २९९ ॥ आयान्ती साऽनुगान् प्राह रे !
ग्रासः क्वचिदीक्ष्यताम् । येनाऽस्मि सुचिराद् बाढं क्षमाकुक्षिर्बुभुक्षया ॥ ३०० ॥ मण्डले मन्त्रशक्त्याथ सनिर्घातं पपात सा ।
सर्वेऽप्यबिभयुस्तस्या विडाल्या इव मूषिकाः ॥ ३०१ ॥ सविस्मयं नृपः प्राह मन्त्रोत्कर्षावधिस्त्वयम् । य एनां राक्षसीं
मन्त्रैरानैषीत् पश्यतां हि नः ॥ ३०२ ॥ मान्त्रिकः प्राह कर्त्तव्यमस्माभिः कृतमेव हि । उचितं यत् कुरु त्वं तन्निग्रहे त्वमसि
प्रभुः ॥३०३॥ साक्षेपमादिशद् राजा मन्त्रिन् ! श्वपचमाह्वय । कलहंसं तमाह्वातुमादिक्षत् सचिवस्ततः ॥ ३०४ ॥ कलहंसोऽपि
तत्रैव विमुच्य शुकपञ्जरम् । जगामाऽथ नृपोऽवादीद् मन्त्रिन् ! किं त्वस्ति पञ्जरे ? ॥ ३०५ ॥ मन्त्रिणोचे महाराज ! शुकराजो-
ऽस्ति सर्ववित् । उपश्लोकय राजानमित्युक्तश्च शुकोऽपठत् ॥ ३०६ ॥ सद्धर्म ! जय काशीन्द्र ! यस्याऽऽकृष्टा गुणैर्भृशम् ।
नयन्ति मार्गणा लक्ष्मीमेकेऽन्ये त्वानयन्ति ताम् ॥ ३०७ ॥ राज्ञा किं पठितोऽसीति पृष्टोऽसावाख्यदात्मनः । तर्क–लक्षण–
साहित्य–गणितस्मृतिकौशलम् ॥ ३०८ ॥ मान्त्रिकः प्राह भो राजन् ! राक्षसी वोऽन्यचेतसाम् । प्रभविष्यति तत् कोऽयं
विलम्बोऽस्या विनिग्रहे ? ॥ ३०९ ॥ ततश्चागात् सचण्डालो हरिश्चन्द्रसमन्वितः । हरिश्चन्द्रं शुको दृष्ट्वाऽभूदुत्फुल्लाक्षमानसः
॥ ३१० ॥ प्राह च स्वस्ति ते नाथ ! भरतान्वयभूपते ! । हरिश्चन्द्र ! नमद् भूपमौलिरत्नाङ्कितक्रम ! ॥ ३११ ॥ सरोषं प्राह
राजा किमसम्बद्धं प्रभाषसे ? क्व साकेतपतिर्ह्यत्र कीर ! त्वं विह्वलोऽसि किम् ? ॥ ३१२ ॥ अथाह श्वपचं मन्त्री कुर्वऽना-

च्छादनामिमाम् । तेनाऽपि हरिरादिष्टस्तां कृत्वाऽनवगुण्ठनाम् ॥ ३१३ ॥ प्रत्यभ्यज्ञासीत् किं नाम सुतारा देव्यसौ हहा ! ? । किमेतेन हि दैवेन हन्तव्या वयमेव हा ? ॥ ३१४ ॥ नास्मिन् कर्मणि देव्येषा करणं स्यात् कथञ्चन । किन्तु मे कोऽपि दुष्कर्मप्रेरितः कुरुते ह्यदः ॥ ३१५ ॥ प्रविश्याऽग्निं ततो देव्या दोषमुत्सारयाम्यहम् । अथवाऽरिसभायां मे नात्मा योग्यः प्रकाशितुम् ॥ ३१६ ॥ मुनिभ्यः पृथिवी दत्ता विक्रीता ससुता प्रिया । यत् करिष्यति दैवं तद् हरिश्चन्द्रः सहिष्यते ॥ ३१७ ॥ दृष्ट्वा तां बाह्यनेपथ्यैरदूपितवपुर्लताम् । मन्त्रिणे पृथिवीनाथः स्ववितर्कं न्यवेदयत् ॥ ३१८ ॥ चन्द्रकान्तं मुखं यस्याः सुवर्णं वपुरेव हि । पद्मरागौ करावेव किमस्या मण्डनान्तरैः ? ॥ ३१९ ॥ उपलक्ष्य शुकोऽथैनां ननाम नतमस्तकः । उशीनरसुते ! देवि ! सुतारे ! स्वस्ति ते सति ! ॥ ३२० ॥ राज्ञोचे किं मुहुः कीर ! प्रलपस्येवमुच्चकैः । क्व साऽत्रोशीनरसुता ? किं त्वं कीरोऽसि मद्यपः ? ॥ ३२१ ॥ सावष्टम्भं शुकः प्राह हरिश्चन्द्रनृपो ह्ययम् । अस्य पत्नीयमित्यर्थोऽन्यथा स्यात् प्रलयेऽपि न ॥ ३२२ ॥ राज्ञा पृष्टो हरिर्ब्रूते हरिश्चन्द्रो नृपोऽस्मि न । किन्त्वहं श्वपचस्याऽस्य द्रव्यक्रीतोऽस्मि कर्मकृत् ॥ ३२३ ॥ राज्ञा पृष्टाऽङ्गना प्राह न सुताराऽस्मि राज्यहम् । किन्तु द्विजन्मनो वज्रहृदयाख्यस्य दासिका ॥ ३२४ ॥ अरे ! विप्लावयस्यस्मानित्युक्ते भूभुजा शुकः । प्राह किं स्वं हरिश्चन्द्रः प्रकाशयति ते पुरः ? ॥ ३२५ ॥ यतः—सतो वाऽप्यसतो वाऽपि स्वान् स्वयं कीर्तयन् गुणान् । ब्रह्मापि हास्यतां याति किं पुनः प्राकृतो जनः ? ॥ ३२६ ॥ हरिं प्रत्याह राजा भो मा भैषीः सत्यमुच्यताम् । ननु यद्यप्यहं वैरी त्राताऽऽपदि तथाऽपि ते ॥ ३२७ ॥ हरिश्चन्द्रोऽब्रवीद् देव ! वचसा पक्षिणोऽस्य किम् । पुनरायस्यते स्वं यद् दासोऽस्याऽस्मीत्यवोचत ? ॥ ३२८ ॥

॥ ३२९ ॥ मन्त्री प्राहाऽऽकृतावस्यां रूप-लावण्य-धैर्यादिगुणविस्मितचेतसा। राज्ञा पृष्टा पुनर्नारी तदेवोत्तरमाख्यत ॥ ३३० ॥ पृष्टश्च श्वपचो राज्ञा प्राहाऽयं राक्षसी कर्म किं भवेत् ?। ततो विचार्य कर्तव्यं स्वामिना यद्यथोचितम् ॥ ३३१ ॥ तेनाऽप्युक्तो हरिश्चन्द्रस्तत्र रासभमानयत् । मम कर्मकृत् । इति निश्चित्य राजामुं रासभानयनेऽब्रवीत् ॥ ३३२ ॥ विचार्य कार्यमाचर्यमिति मन्त्रि-शुकादिभिः । वार्यमाणोऽपि शक्तोऽपीशोऽपि किं कुर्यान्नरः परवशः खलु ? ॥ ३३३ ॥ अहो ! अक्षत्रमक्षत्रमित्याक्रन्दन् शुकोऽब्रवीत् । राजन् ! विज्ञापनामेकां शृणु तां राजा खरमारोपयद् द्रुतम् ॥ ३३४ ॥ राज्ञोचे ब्रूहि रे ! स्वैरं कीरः प्रोवाच यद्यसौ । सुतारा राक्षसी स्यात् तद् विशाम्यग्निं पुरस्तव नीत्यनुयागिनीम् ॥ ३३५ ॥ मदैन्यं प्राह सर्वोऽपि सभालोकः शुकस्य गीः । अस्तु प्रमाणमामेति राज्ञाऽप्यूचेऽनुरोधतः ॥ ३३६ ॥ सोत्साहं प्राह कीरोऽपि मन्त्रिन् ! कारय तच्चिताम् । तथा तेन कृते कीरः स्नात्वाऽगच्छच्चितां प्रति ॥ ३३७ ॥ ततो दिग्नायकानाह यद्येषा राक्षसान्वया । भवेद् नृपसुता तन्मां प्रदहत्वाशु हव्यवाट् ॥ ३३८ ॥ इत्युक्त्वा पश्यतामेव तेषां गतभयः शुकः । झम्पामदाच्च विध्यातोऽग्निश्चास्थादक्षतः शुकः ॥ ३३९ ॥ आश्चर्यमिदमाश्चर्यमित्यूचाना जनाः स्फुटम् । सतीयं राक्षसी न स्यादित्यदुः शुद्धितालिकाम् ॥ ३४० ॥ मन्त्र्यूचे नाथ ! मन्येऽहं मान्त्रिकस्य विजृम्भितम् । तत् केनाऽप्य-पदेशेन मान्त्रिकोऽयं विसृज्यताम् ॥ ३४१ ॥ तथेमां रासभादाशु समुत्तारय सम्प्रति । इत्युक्तो मन्त्रिणा भूपः सवि-स्मयमदोऽवदत् ॥ ३४२ ॥ किं कुर्मः किमु जानीमः कस्येदं कैतवं महत् । संदिग्धेऽर्थे किलैतस्मिन् विचारं कुर्महे च किम् ? ॥ ३४३ ॥ इति विकल्प-कोपाभ्यां संश्लिष्टो नृपतिः स्वयम् । व्यसृजद् मान्त्रिकं, कीरं पञ्जरेऽथ न्यधापयत्

॥ ३४४ ॥ उदतारयदेनां च रासभाद् वनितां ततः । इति सर्वं विसृज्याऽथ नृपः पल्यङ्कमासदत् ॥ ३४५ ॥ हरिश्चन्द्रोऽपि सूर्येऽस्ते चाण्डालस्य नियोगतः । व्रजन् श्मशानं दध्यौ भोः ! कीदृग् दुर्दैवनाटकम् ? ॥ ३४६ ॥ देव्याः कर्मकरीत्वेन स्थिताया विप्रसद्मनि । राक्षसीवचनं कीरो दैवदत्तं न्यवर्तयत् ॥ ३४७ ॥ दैवमेव ततो मन्ये बलवन्नापरः पुनः । यत् तेन विहिता ह्यापत् तेनैव हि निवर्त्यते ॥ ३४८ ॥ तमस्यसूचीभेद्येऽपि प्रविशन्निर्भयो हरिः । ददर्श भीषणाकारं श्मशानं निशि सर्वतः ॥३४९॥ क्वचित् फेरण्डफेत्कारं क्वचिद् राक्षसडम्बरम् । क्वचिद् बिभीषिकोद्द्योतं क्वचित् कौशिकवासितम् ॥३५०॥ क्वचित् प्रेतपरित्रस्तशवसंस्कारकूज्जनम् । क्वचिच्च डाकिनीमुच्यमानोत्किलकिलारवम् ॥३५१॥ क्वचित् कापालिकैर्गृह्यमाण-सत्पुण्यमस्तकम् । सर्वतोऽपि च दुर्गन्धपूरपुरितनासिकम् ॥ ३५२ ॥ उपर्युपरि पर्यस्तमुण्डतुण्डस्खलद्गमम् । इतस्ततः श्मशानं स पश्यत् शुश्राव दुर्ध्वनिम् ॥ ३५३ ॥ अहो ! आर्त्तध्वनिः सैषा मृतपत्याः स्त्रियाः खलु । रुदतीं वारयाम्येनामित्यगात् तत्पुरो नृप ! ॥३५४॥ उवाच च शुभे ! किं ते कारणं परिदेवने ? । साऽऽह पश्याऽग्रतो गत्वा न्यग्रोधे कारणं मम ॥३५५॥ हरिर्गत्वा ततोऽपश्यत् पुमांसं पूर्णलक्षणम् । ऊर्ध्वपादमधोवक्त्रं वटशाखानियन्त्रितम् ॥ ३५६ ॥ सोढाऽहं पुरुषः कान्ते ! त्वं पुनर्भाविनी कथम् ? । तत्प्रलापमिति श्रुत्वा दध्यौ राजाऽस्य सा प्रिया ॥३५७॥ अस्योपकारं कुर्वे यद् दत्ता भूर्मुनये मया । मुनिकन्याधनोपाये विक्रीतौ दयितासुतौ ॥ ३५८ ॥ जीवितस्याऽस्य निर्विण्णः स्वयमेव पुराऽस्म्यहम् । कृत्वा परार्थं चेद् यामि तत् किं नाप्तं फलं मया ? ॥ ३५९ ॥ इति ध्यात्वा हरिः प्रोचे तमुद्बद्धं नरं मृदु । अहो ! कस्त्वं कथं चेयमवस्था ते सुदुःसहा ? ॥३६०॥ जानन्नस्मीति यद् वक्तुमुद्बद्धेन न शक्यते । परं त्वदाकृतिः पुण्या प्रयुङ्क्ते प्रष्टुमत्र माम् ॥ ३६१ ॥

तदाख्याहि न शक्तोऽस्मि द्रष्टुं ते दुस्सहां दशाम् । इति तत् प्रणयं दृष्ट्वा प्रोवाचोद्बद्धपूरुषः ॥ ३६२ ॥ नाहमेतां दशां दीनां कस्याऽपि हि निवेदये । तच्छ्रोता वेत्ति किं मत्तो यत् परित्राणमीहते ? ॥ ३६३ ॥ परन्त्वन्यभवस्नेहानुबन्धादथवो तमात् । उपकारपरत्वात् ते पृच्छते कथयामि भोः ! ॥ ३६४ ॥ महासेनोऽस्मि काशीन्द्रचन्द्रशेखरनन्दनः । विद्याधर्याऽत्र पल्यङ्कादानीतः प्रियया युतः ॥ ३६५ ॥ किमर्थमिति तेनोक्ते नरः प्राहाऽत्र सम्प्रति । मन्मांसेन महाहोमं सा करिष्यति खेचरी ॥ ३६६ ॥ क्व गता साऽधुना विद्याधरीति हरिणोदिते । स्नातुं गङ्गां नदीं व्योम्ना जगामेत्यवदद् नरः ॥ ३६७ ॥ ततो दध्यौ नृपो हर्षाद् गत्वरैश्चेन्ममाङ्गकैः । विद्याधर्या भवेत् सिद्धिर्जीवितं चाऽस्य चारु तत् ॥ ३६८ ॥ तमुवाच हरिश्चन्द्रः प्रार्थये त्वां किमप्यहो ! । स प्राहैवंविधावस्थं किं त्वं प्रार्थयसेऽत्र माम् ॥ ३६९ ॥ राज्ञोचे यदलं दातुं प्रार्थ्यसे त्वं तदेव हि । स प्राह तर्हि याचस्व यदभीष्टं नरोत्तम ! ॥ ३७० ॥ हरिः प्राह प्रयाहि त्वं स्वं राज्यं स्वीकुरु क्षणात् । यत् कार्यं तत् करिष्यामि विद्याधर्याः स्ववर्ष्मणा ॥ ३७१ ॥ पुरुषः प्राह किं ब्रूवे नात्मनीनमिदं खलु । अधमः कः स्वयं स्वार्थे परप्राणान् व्ययिष्यते ? ॥ ३७२ ॥ किञ्च स्वं मे यथाभीष्टं यथा मे मृत्युभीरुता । यथैषा दयिता मेऽस्ति तवाऽप्येवं तथाऽस्ति भोः ! ॥ ३७३ ॥ तद् याहि त्वमतः स्थानादधुनैष्यति खेचरी । तेनेत्युक्ते हरिश्चन्द्रः सदैन्यमिव तं जगौ ॥ ३७४ ॥ मा मा मे प्रार्थनां व्यर्थां कुरुष्व पुरुषोत्तम ! । स्वेऽनाप्यहं महाकष्टान्मर्तुकामोऽस्मि तत् यदि ॥ ३७५ ॥ त्वादृशस्योपकृत्याऽथ म्रिये स्यां सफलस्तदा । उपकारः परो धर्म इत्याख्यान्ति बहुश्रुताः ॥ ३७६ ॥ न जातु जनिष्येते द्वाविमौ पुरुषौ भुवि । अर्थितो यः करोत्येव यश्च नाऽर्थयते परम् ॥ ३७७ ॥ इत्येवं बहुशोऽभ्यर्थ्य स्वयमुन्मोच्य

बन्धनात् । याहीति प्रेषितस्तेन स जगाम प्रियायुतः ॥ ३७८ ॥ नूपुरक्वाण-कल्पद्रुपुष्पस्त्रक्सौरभादिभिः । ज्ञात्वा विद्याधरीं आरादायान्तीं नृपतिः क्षणात् ॥ ३७९ ॥ बद्ध्वा न्यग्रोधशाखायां स आत्मानमधोमुखम् । गतमृत्युभयं तस्थौ रोमाश्चकवचाश्चितः ॥ ३८० ॥ ततो विद्याधरी व्योम्नोऽवततारार्द्रचीवरा । अग्निकुण्डत्रये वह्निमुज्ज्वलं समचिस्करत् ॥ ३८१ ॥ सज्जीकृत्य च पूजादि विद्याधर्याह पार्श्वगान् । चित्राङ्गद ! समीक्षस्व किं लक्षणधरो नरः ॥ ३८२ ॥ चित्राङ्गदोऽप्युपागत्य हरिश्चन्द्राङ्गलक्षणम् । वीक्ष्योचे देवि ! मोदस्व येनाऽयं चक्रिलक्षणः ॥ ३८३ ॥ हुत्वा कुण्डत्रये मांसमस्य प्रान्ताहुतीकृते । शीर्षे विश्ववशीकारविद्याऽऽविर्भविता स्वयम् ॥ ३८४ ॥ इत्यूचाना मुदोत्थायाऽऽनर्च सर्वाङ्गमप्यमुम् । ऊचे च स्मर किञ्चित् त्वं देवं यत्राऽसि भक्तिमान् ॥ ३८५ ॥ भवेश्च सात्त्विको येन, विद्या सिध्यति मेऽधुना । यत् त्वन्मांसैर्हुतैः सा स्यात् प्रीता च वरदा च मे ॥ ३८६ ॥ हरिश्चन्द्रस्ततोऽवादीद् ध्वस्तसंसारवैशसम् । स्मरामि निष्ठितक्लेशं देवं नाभिसमुद्भवम् ॥ ३८७ ॥ इदानीं मा विलम्बस्व होमः स्याद् बहुविघ्नभूः स्वेनैवोत्कृत्य मांसं स्वं यच्छाम्येष गृहाण तत् ॥ ३८८ ॥ सा प्राह सिद्धिर्मन्त्रस्य जातैवं त्वं यदुत्तमः । मत्तोऽप्युत्साहवानीदृक् समवायो हि पुण्यतः ॥ ३८९ ॥ ततः प्रवृत्ता कुण्डेषु ज्वलज्ज्वालाऽऽकुलेषु सा । हरिश्चन्द्रार्पितं मांसं प्रक्षेप्तुं मन्त्रपूर्वकम् ॥ ३९० ॥ ऊचे च परितः खड्गहस्तान् विद्याधरोत्तमान् मादत्ताऽत्र प्रवेशं भोः श्वापदस्य नरस्य वा कियत्यपि कृते होमेऽभूदाविर्देवतामुखम् । मध्यकुण्डात् ततो जातौ सोत्साहौ तावुभौ मुदा ॥ ३९२ ॥ अथ गोमायुरटितं कुण्डानि परितोऽभवत् । विषादार्त्ता ततो विद्याधर्यूचेऽयं निवर्त्यताम् ॥ ३९३ ॥ यद्यस्य घोरफेत्कारैर्निद्रां त्यक्ष्यति तापसः । होमध्वंसं तदागत्य स करिष्यति निश्चितम् ॥ ३९४ ॥ सर्वैः स नाश्यमानोऽपि

प्रत्युताऽऽगात् समीपगः । जजागार ततश्चाऽऽरादाश्रमे तापसः क्षणात् ॥ ३९५ ॥ किञ्चित् किञ्चित् ततो विद्यामुखं नीचै-
र्ममज्ज च । खेचर्युवाचाऽपर्याप्तहोमा हा ! हा ! हतास्म्यहम् ॥ ३९६ ॥ सावष्टम्भं हरिः प्राह मा विषीद गृहाण मे । छित्त्वा
शिरोऽपि पर्यन्ताहुतिहोमं समापय ॥३९७॥ ऊचे विद्याधरी होमः क्रमात् स्यान्नतु नाऽक्रमात् । क्रमं च क्षमते नैष तापसः
क्रोधमावहन् ॥३९८॥ अरे ! किमिदमारब्धमस्मदाश्रमभूमिषु । इत्याक्रोशन् विवेशोच्चैरुद्धतस्तत्र तापसः ॥ ३९९ ॥ ममज्ज
तन्मुखं देव्या मध्ये कुण्डाग्नि सत्वरम् । भीता विद्याधरी साऽथ क्वाऽप्यगात् सपरिच्छदा ॥ ४०० ॥ ततः क्रोधात्
परिभ्राम्य तापसस्तत्र जग्मिवान् । यत्राऽऽस्ते कृत्तसर्वाङ्गः शाखाबद्धो हरिः श्वसन् ॥४०१॥ क्षणेन तापसः किञ्चिदुप-
लक्ष्याऽऽह विस्मयात् अरे ! भवान् हरिश्चन्द्रः सोऽप्याख्यदोमिति स्फुटम् ॥ ४०२ ॥ तमाह तापसः क्रुद्धः स्वर्णं कुल-
पतेरदाः ? ! नृपः प्राह दिनैः कैश्चित् प्रभो ! पूर्णीभविष्यति ॥ ४०३ ॥ उपलक्ष्यसि त्वं मे प्रोक्तस्तेन नृपोऽवदत् ।
कौटिल्यस्त्वं महीदाने साक्षी कुलपतेरसि ॥ ४०४ ॥ अरे ! कुलपतेः स्वर्णमनापूर्येति किं त्वया । आरब्धमित्युचानेऽस्मिन्
राड् ह्रियाऽधोमुखोऽभवत् ॥ ४०५ ॥ ततो मा भून्मुनेः स्वर्णहानिरस्मिन् मृते त्विति । औषध्या व्रणरोहिण्या स्वेनालिम्पत्
स तद्वपुः ॥ ४०६ ॥ अभूच्च तत्क्षणादेवाऽरूढव्रणवपुर्नृपः । ययौ च तापसः स्थाने स्वे दध्यौ हरिरप्यथ ॥४०७॥ नाऽपूर्णं
मेऽभवत् किञ्चित् सर्वस्वं ददतो मुनेः । विद्याधर्या न यत् सिद्धिः संजाता तद् दुनोति माम् ॥४०८॥ अरे ! क्व त्वं गतो-
ऽसीति प्राऽऽहूतः श्वपचेन सः ? । उपसृत्याह कर्तव्यं मम स्वामिन् ! समादिश ॥४०९॥ स प्राहैष मृतः कोऽपि समायाति
ततो भवान् वस्त्रं गृह्णातु गत्वेति प्रेरितोऽगाद् नृपस्ततः ॥४१०॥ अशृणोच्छब्दमेकस्याः करुणार्त्तं सुतव्ययात् । हा ! पुत्र !

क्व गतोऽसीति मूर्च्छन्त्याश्च मुहुः स्त्रियाः ॥ ४११ ॥ अहो दैवेन निर्मुक्तकरुणेन किलाऽङ्गजम् । व्यापादयता निर्भाग्याऽभीष्टाऽपत्या त्वसौ हता ॥ ४१२ ॥ अहो ! असारः संसारो मर्त्यवाचामगोचरः । यदिष्टं देहिनां तत् तु ग्राहयत्येव यो यमात् ॥ ४१३ ॥ कथं चाऽहं ग्रहीष्यामि बालस्योर्ध्वाद् किलाम्बरम् ? । इति मन्दपदः प्रोक्तः श्वपचेनाशु गच्छ रे ! ॥ ४१४ ॥ सभयं परिचक्राम हरिश्चन्द्रः सुतं स्मरन् । न शुध्येद् यदि देवी मे तदा वत्सो म्रियेत सः ॥ ४१५ ॥ ततः शुश्राव करुणं रुदतीं वनितामिति । निर्भाग्यशेखराया मे मृतो वत्सो हताऽस्मि हा ! ॥ ४१६ ॥ वत्सो मृत इमां वाचं प्रतिघ्नन् मङ्गलोक्तिभिः । वामाक्षिस्पन्दनेनाऽथ बभूवाऽऽशङ्किमानसः ॥ ४१७ ॥ सर्वस्वं मुनये दत्तं विक्रीतौ दयिता–सुतौ चण्डालकर्मकर्ताऽहं किं मे वा भाव्यतः परम् ? ॥४१८॥ इति चिन्तातुरो यावद् मार्गे याति नृपस्ततः । चाण्डालपतिना प्रोक्तो व्याघुट्येति व्यजिज्ञपत् ॥ ४१९ ॥ आगतोऽस्ति मृतो बाल इति वस्त्राऽऽहृतौ त्रपा । स प्राह का त्रपाऽस्माकमाचारोऽयं गृहाण तत् ॥४२०॥ निवृत्त्याऽथ हरिर्दध्यौ धिग् लोभं यद्वशाज्जनः । वेत्ति कृत्यमकृत्यं वा नैव दैवहतो हहा ! ॥४२१॥ यदादिशति मे स्वामी तत् कर्तव्यं मया खलु । विचारो युज्यते नैव स्वाम्यादिष्टेऽनुजीविनाम् ॥ ४२२ ॥ स गच्छन्निति शुश्राव स्त्रीविलापं तमुच्चकैः । हा ! हा ! पुत्र ! त्वमेको मे तन्मे मृत्युस्त्वया सह ॥ ४२३ ॥ त्वं ममैवाऽसि कुपितो रे ! दैव ! यत् पतिर्मम । बभूव कर्मकृन्नीचगेहेऽहमपि तादृशी ॥४२४॥ परमस्य स्वपुत्रस्य भरतान्वयशालिनः । आलम्बेन जीवन्त्या भविता काऽद्य मे गतिः ? ॥ ४२५ ॥ हरिश्चन्द्रोऽपि विज्ञाय सुतारां त्वरितो व्रजन् । मुञ्चन्नश्रूण्यथोऽवादीद् निन्दन्नात्मानमात्मना ॥ ४२६ ॥ निर्भाग्यशेखरे ! देवि ! वज्रघातः क एष नौ ? । वनिता वीक्ष्य भर्तारं तारं तारं रुरोद सा ॥ ४२७ ॥ हरिश्चन्द्रोऽप्यरोदीच्च

धैर्यं कस्य सुतव्यये ?। रोहिताश्वं हरिर्मोहादाश्लिष्यत् किल पूर्ववत् ॥ ४२८ ॥ सुतारां प्राह देवि ! त्वं किं रोदिषि तथा कथम् ?। वत्सो मां भाषते नैव भवत्या रोषितः किमु ? ॥ ४२९ ॥ किं त्वया मोदकं नास्मै दत्तः किं परिधापितः ?। नाऽद्य रत्नाङ्कितं हारं किं हस्ती नाऽर्पितो मया ? ॥ ४३० ॥ क्षमस्व वत्सलो हि त्वं स्वेच्छया यत् तु रोचते। इति स्वं सान्त्वयन् पुत्रं देव्याऽसौ परिदेवितः ॥ ४३१ ॥ किं न पश्यसि मूढ ! त्वं गतासुं तनयं निजम् । गतासुश्च कथं पश्येदाश्लिष्येन्निगदेदथ ? ॥ ४३२ ॥ किमारब्धं त्वया सार्धं नार्या किं नेपि सत्वरम् ?। इत्युक्तः श्वपचेनाऽसौ भयाच्चैतन्यमासदत् ॥ ४३३ ॥ अज्ञामीत मृतं पुत्रं चेष्टाऽथाश्रुलोचनः। सुतारां पुत्रवृत्तान्तमप्राक्षीत् साऽप्यचीकथत् ॥ ४३४ ॥ अद्याऽयं प्रातरेवाऽगाः समित्पुष्पकृते वने । विप्रेण प्रेषितो मन्दभाग्यो दष्टोऽहिना प्रिय ! ॥ ४३५ ॥ विनाऽऽत्मीयान्न कोऽप्यस्य त्रिपस्योत्तारणं व्यधात् । विना बन्धुं जगच्छून्यं जीवो धर्मं विना यथा ॥ ४३६ ॥ हरिश्चन्द्र स्ततो दध्यौ धिग् मां व्यसनपातिनम् । एकत्र श्वपचः क्रुद्धोऽन्यत्र पुत्रव्ययक्लमः ॥ ४३७ ॥ प्रवासोऽरिपुरीवासो नीचदास्यं सुतव्ययम् । हरिश्चन्द्रोऽखिलं सोढा देवी त्वेकसुता हता ॥ ४३८ ॥ किञ्च मे वक्ष्यतो हस्तौ पुत्रवस्त्राहृतौ कथम् ?। स्वाम्यादेशमकर्तुं च नैवोजस्वि मनो मम ॥४३९॥ अथवा पुत्रमृत्यौ को मे विचारो यदस्म्यहम् । श्वपचाधीनदेहस्तत् स यद् ब्रूते करोमि तत् ॥४४०॥ अन्यथा स्यां प्रतिज्ञातभ्रष्टः सत्त्वकलङ्कितः। सत्त्वैकतानवृत्तीनां नाऽपत्याद्यनुरागिता ॥ ४४१ ॥ व्यापन्नस्य सुतस्याऽस्य न गृह्णाम्यम्बरं यदि । निर्वाहयामि नो गन्धां लज्जते तरणिस्तदा ॥ ४४२ ॥ इति सत्त्वानिलोद्धूताऽपत्यबन्धः स सात्त्विकः । भूत्वा पराङ्मुखोऽशक्तो याचितुं स्फुटया गिरा ॥ ४३३ ॥ अर्पयाऽऽच्छादनमिति संज्ञया प्रतिपादयन् । हस्तं प्रसारयामास हरिश्चन्द्रः प्रियां प्रति

॥ ४४४ ॥ सुताराऽपि च तदभिप्रायं स्फुटमजानती । उच्चिक्षेप करे दातुं रोहिताश्वं मुहुर्मुहुः ॥ ४४५ ॥ अगृह्णति हरिश्चन्द्रे पुत्रं साऽऽह ब्रवीषि किम् ? । न जानामि तवैतां हि संज्ञां ब्रूहि ततः स्फुटम् ॥ ४४६ ॥ धैर्यसंदंशकाकृष्टवचनः सात्त्विकोऽवदत् । देवि ! तिष्ठतु वत्सोऽयं वत्साऽऽच्छादनमर्पय ॥ ४४७ ॥ यावदेवं हरिश्चन्द्रो वदत्यात्मप्रियां प्रति । तावत् तस्य शिरस्याशु पुष्पवृष्टिरभूद् दिवः ॥ ४४८ ॥ अहो ! सत्त्वमहो ! धैर्यं हरिश्चन्द्रमहीपतेः । एवमुद्घोषणापूर्वं दुन्दुभिध्वनिरत्यभूत् ॥ ४४९ ॥ राजाऽप्यपश्यदात्मानमयोध्यायां निजौकसि । अलङ्कृतमहासिंहासनं स्वसदसि स्थितम् ॥ ४५० ॥ रोहिताश्वमपश्यच्च क्रोडे क्रीडन्तमात्मनः । अश्रान्तकान्तिरत्नाङ्कहारस्फारश्रियं मुदा ॥ ४५१ ॥ वसुभूतिं महामात्यं कुन्तलाख्यं च सेवकम् । द्वावप्येतौ स्वस्वरूपौ पुरोऽद्राक्षीत् कृताञ्जली ॥ ४५२ ॥ यवनिकान्तरे चैव द्रष्टुं नाटकमागताम् । सुतारां भाषमाणां च सख्या शुश्राव भूपतिः ॥ ४५३ ॥ पुरतश्च सुसङ्गीतरसनिर्मग्नचेतसाम् । नृपा-ऽमात्यप्रभृतीनामपश्यत् संसदं निजाम् ॥ ४५४ ॥ प्रतिमन्दिर-मैक्षिष्ट क्रियमाणं च नागरैः । नृत्यत्पुरन्ध्रिविश्राण्यमानदानमहोत्सवम् ॥ ४५५ ॥ प्रतीहारमुखप्राप्तान् विजिज्ञपयिषून् जनान् । दूरतो नमतः प्रेक्ष्य किमित्येतदचिन्तयत् ॥ ४५६ ॥ किं नु स्वप्नो मया दृष्टः किं वा मे मनसो भ्रमः । किं वा कस्याऽपि देवस्य-चित्रमेतद् विजृम्भितम् ॥ ४५७ ॥ ततश्च प्रकटीभूय चन्द्रचूड-मणिप्रभौ । पुरः स्थित्वा सुरौ राज्ञः सहर्षमिदमूचतुः ॥ ४५८ ॥ त्रिशङ्कुनन्दन ! श्रीमदिक्ष्वाकुकुलमण्डन ! भरतान्वयभूपाल ! हरिश्चन्द्र ! चिरं जय ॥ ४५९ ॥ धन्यः सुग्राह्यनामा त्वं यस्य वास्तोष्पतिः स्वयम् । सत्त्वं स्तवीति मूर्धानं धुनानो द्युसदां पुरः ॥ ४६० ॥ यादृशः कथितो राजन्नचाल्यो द्युसदा-मपि । शक्रेण, तादृगेवाऽसि सात्त्विकेषु शिरोमणिः ॥ ४६१ ॥ माहात्म्येन तवैवेदं पुना राज्यं तथैव हि । अढौकत निज-

स्फीत्या निर्जिताऽमर-दानवम् ॥ ४६२ ॥ वसुभूतिः स एवाऽयं मन्त्री मित्रं च ते नृप ! । शुकरूपः प्रविश्याऽग्नौ यो देव्याः शुद्धिमातनोत् ॥ ४६३ ॥ कुन्तलश्चैष ते सेवां करोति रचिताञ्जलिः । जम्बूकीभूय ते होमसङ्कटे यस्तदारटत् ॥ ४६४ ॥ शूकरो दन्तमारभ्य यावदद्य नरेन्द्र ! यत् । अनुभूतं त्वया विद्धि तदस्मत्कूटनाटकम् ॥ ४६५॥ एतत् सर्वं भवत्सत्त्वपरीक्षारसिकैः खलु । अस्माभिर्विहितं तत् ते क्षन्तव्यं महतां गुरो ! ॥ ४४६ ॥ चित्रं परोपकाराय मर्त्यत्वेऽपि भवादृशाम् । अवतारः परोत्पन्यै स्वर्गेऽप्यस्मादृशां पुनः ॥ ४६७ ॥ किंवा कोऽपि गुणोऽस्माकमपि ते सत्त्वदीपनात् । सुवर्णस्य कथं रेखा कषपट्टं विना भवेत् ? ॥ ४६८ ॥ तव सत्त्वेन सत्येन हरिश्चन्द्र ! महानृप ! । जलदो वर्षति स्फीतशस्या भूर्मुदितो जनः ॥ ४६९ ॥ स्वस्यैव सुकृतेनेदं राज्यमापि पुनस्त्वया । अस्मत्तः परितुष्टेभ्यः किञ्चिद् याचस्व साम्प्रतम् ॥ ४७० ॥ लज्जितत्रिदशोपज्ञवर्णना-कर्णनाद् नृपः । उवाच न कदाऽप्यस्मि शिक्षितो याचितुं परम् ॥ ४७१ ॥ किञ्च सत्त्वं न मुक्तं स्वं सूर्यवंशो न लज्जितः । सत्यवाचः कृतश्चेन्द्रः किमतः परमर्थये ? ॥ ४७२ ॥ पुनरप्यूचतु देवौ नृप ! तन्वन् यशः सितम् । दिव्यशक्तिः श्रियां पात्रं सदाऽऽनन्दमयो भव ॥ ४७३ ॥ प्रभावमिति तौ तत्र न्यस्य स्वास्पदमीयतुः । इन्द्रोऽपि परमां प्रीतिमवाप ससुरासुरः ॥ ४७४ ॥ राजाऽथ श्रीहरिश्चन्द्रस्तत्प्रभृति विशेषतः । दयालुर्जगदानन्दस्त्यक्तव्यसनकौतुकः ॥ ४७५ ॥ शक्रावतार-तीर्थस्य सर्वज्ञस्य कृपानिधेः । श्रीवृषध्वजदेवस्य पर्युपास्तिपरायणः ॥ ४७६ ॥ दिव्यशक्तिप्रभावेण गगनक्रीडनादिकम् । महर्द्धिं दर्शयन् लोके पालयामास काश्यपीम् ॥ ४७७॥ (त्रिभिर्विशेषकम्)



अन्यत्रोद्धृतोपसंहारः—

अन्येद्युर्बहिरुद्याने, गतः क्षोणिपतिः स्वयम् । तीर्थं शक्रावताराख्यं, जीर्णं शीर्णं व्यलोकयत् ॥ १ ॥ वसुभूतिरुवाचाथ, ज्ञात्वा चेतो महीभुजः । इङ्गिताकारतत्त्वज्ञा, मन्त्रिणः सर्ववेदिनः ॥ २ ॥ वृषभस्वामिनो बिम्बं, भासुरं शक्रनिर्मितम् । इदं शक्रावताराख्यं महातीर्थं महीतले ॥ ३ ॥ कालक्रमादिदं जीर्णं, बभूव क्षितिनायक ! । उद्धारकारिणो यस्मात्, प्रभवन्ति भवादृशाः ॥४॥ भवानप्यादिमजिन–सन्ताने समजायत । कुरुष्वेदं नवं तीर्थं, देहिनं रसवेदिवत् ॥५॥ भरतेशादित्ययशः–प्रभृतीनां महीभुजाम् । स्वपूर्वजानामाख्याभिः ख्याताः स प्रतिमा व्यधात् ॥ ६ ॥ अमारिपूर्वकं भूरि, दानसंप्रीणितार्थी च । प्रतिष्ठां कारयामास, चैत्योद्धारमकारयत् ॥७॥ सम्यक्त्वं निर्मलं बिभ्रद्, विदधानः प्रभावनाम् । कालक्रमेण शुद्धात्मा, देवभूयमगादयम् ॥ ८ ॥

इति सत्त्वोपरि सत्यवादिहरिश्चन्द्रकथानकम् ।

श्री नेमि विज्ञान ग्रन्थमाला रत्न=१०

सिरि जिणविजय लिहियं

# सिरिजंबूसामिचरित्तं ( प्राकृतम् )

शासनसम्राट् पूज्यपादाचार्य श्रीमद् विजयनेमिसूरीश्वर महाराज पट्टालङ्कार–शान्तमूर्ति–
पन्नाचार्यश्री विजयविज्ञानसूरिवर महाराज पट्टधर–प्राकृतविद्विशारदाचार्य श्री–
विजयकस्तूरसूरि महाराज विनेयरत्न मुनिवर्यश्री यशोभद्रविजयजिन्महाराजा–
न्तिपदभ्यासि मुनिवर श्री शुभङ्करविजय महाराज सविधे संशोध्य सम्पाद्य च
नसारीनगरवास्तव्य झवेरीत्युपपद रामचन्द्रतनूजन्मना झवेरचन्द्रेण प्रकाशितम्

श्री. वी नि. सं. २४७४ मूल्यम् १–४–० श्री. वि. सं. २००४

मुद्रक : मं लाल छगनलाल शाह, धी नवप्रभात प्रीन्टींग प्रेस, घीकांटा रोड, नोवेल्टी सीनेमा पासे–अमदावाद

अन्यत्रोद्धृतोपसंहारः—

अन्येद्युर्बहिरुद्याने, गतः क्षोणिपतिः स्वयम् । तीर्थं शक्रावताराख्यं, जीर्णं शीर्णं व्यलोकयत् ॥ १ ॥ वसुभूतिरुवाचाथ, ज्ञात्वा चेतो महीभुजः । इङ्गिताकारतत्त्वज्ञा, मन्त्रिणः सर्ववेदिनः ॥ २ ॥ वृषभस्वामिनो बिम्बं, भासुरं शक्रनिर्मितम् । इदं शक्रावताराख्यं महातीर्थं महीतले ॥ ३ ॥ कालक्रमादिदं जीर्णं, बभूव क्षितिनायक ! । उद्धारकारिणो यस्मात्, प्रभवन्ति भवादृशाः ॥ ४ ॥ भवानप्यादिमजिन–सन्ताने समजायत । कुरुष्वेदं नवं तीर्थं, देहिनं रसवेदिवत् ॥ ५ ॥ भरतेशादित्ययशः–प्रभृतीनां महीभुजाम् । स्वपूर्वजानामाख्याभिः ख्याताः स प्रतिमा व्यधात् ॥ ६ ॥ अमारिपूर्वकं भूरि, दानसंप्रीणितार्थी च । प्रतिष्ठां कारयामास, चैत्योद्धारमकारयत् ॥ ७ ॥ सम्यक्त्वं निर्मलं बिभ्रद्, विदधानः प्रभावनाम् । कालक्रमेण शुद्धात्मा, देवभूयमगादयम् ॥ ८ ॥

इति सत्त्वोपरि सत्यवादिहरिश्चन्द्रकथानकम् ।

भो स्वामिनन्नकीट कस्य प्रशंसा कथं क्रियते किं देवैरपि चाल्यमानो न चलति अहं तत्रगत्वा चालया-मि सोऽहं कृतिँ कृत्वा देवलोकाच्चचालक्षणमात्रेण मनुष्यलोकेऽक्लापुरी समीप मागत्यपरीकरणायसिंहरूपं कृत्वा घन गर्जित तुल्यातिभययुक्तसिंहनादं कृतवान् तस्य गर्जनां श्रुत्वा पशस्तुहतधियोऽग्रेपदमपिधर्तु-न्नशक्नुवन्तिस्म तथा वहिस्थामनुष्याऽपि भयभीत प्राणरक्षार्थं मितस्ततः धावन्तिस्म एक मनुष्येणागत्य पुरजन रक्षार्थंन्नगरीप्रतोलीकपाटौदत्तौ पश्चात्तेनैव पुरुषेण राजसभायां गत्वा राजाविज्ञापितः भोस्वामिन्नगरी वहिः सिंह आगत अनेक जीवानां वधंकरिष्यति यथा जीववधोनस्यात् तथा क्रियतां इति श्रुत्वा राजा विचारयति अहो प्रजा कंटकस्य जीववधकारकंरणे जित्वा प्रजादुःखं दुरीकरोमि नीतावपि क-थितमस्ति यतः--

श्लोकः ।

सशस्त्रवृत्तिःसमरेरिपुःस्या द्यःकंटको वा निजमण्डलस्य अस्त्राणितत्रैव नृपाःक्षिपन्ति
नदीनकानां नसुजाशयेषु ॥ १ ॥

इति विदित्वा तं जेतुं जिगमिष्यति तस्मिनेव समये देवेन प्रेरितो राजपुत्र एवमवादीत भोतातसिंह जयार्थं अहं गच्छामि नवतात्रैवस्थी यतां अहमेक एव जायिस्यामि एवं कथयित्वा पितु राज्ञामादाय काञ्चिच्चम् गृहीत्वा पुर्याबहिरा गत्यकुंत तमरादि शस्त्रैः सिंहशरीर माळायामास सिंहोऽपि राजपुत्र मतिनिकटं मागतं दृष्टा (तस्थानान्) पलायितस्तदा राजपुत्रोऽपि तत्पृष्टे तुरंगं प्रेरयतिस्म तस्याश्ववेगेन सर्व सेनिका बह्वन्तराजाता स्ततो राजपुत्रा दर्शनादन्यमार्गे त्रिलग्ना राजपुत्रस्तु सिंहपृष्ठे लग्नःसन अतिभयंकर वने प्रविष्ट तदासिंहस्तु लुप्तोऽभूत पश्चाद्योगिवेशं कृत्वा स्वासनोपारिराजपुत्रं मृतवत्कृत्वाऽश्थापयदनन्तरं यत्र राजदास्यो जलमाने तु मागच्छन्ति तस्याऽक्लापुरीबाह्यारामवापिकायाउपरिस्थित्वा विचारयति राज्ञश्रेटिका आगमिष्यंति तदैवं कथयिष्यामि तस्तश्रेटिका समागतयोगी उवाच ।

श्लोकः ।

विचित्रवार्ताङ्कथयामिचेव्यः । शृवन्तु विज्ञापनमस्ति भद्राः ॥ राज्ञःसुतोऽसौ हरिणाहतस्तत् । कायंवने क्लिसमहंतुखिन्नः ॥ १ ॥

एवं श्रुत्वादास्यो वदन्ति ( श्लोक )

वयन्नकस्यापि न दासताङ्गताः । स्वामीन कोप्यस्ति मनुष्यलोके ॥ जलस्य योगात्प्रचल-
न्ति पोताः । संसारवद्ः खलु तादृगेषुः ॥ २ ॥

एवं श्रुत्वा योगीचिन्तयति किं दास्यापि मोहोजितः किन्त्वेवं न संभवति दास्य खलु कुत्रजाताः कस्मात्यानादागता एवं विधादास्यः कदापिमोहन्नजयन्ति किन्तु स्वार्थिन्यो दास्यः सन्ति परञ्चशार्दुलस्य मातुःपार्श्वे गच्छामि मातुःपुत्रोपर्यतीव मोहं करिष्यति तेन तत्रगत्वा कथयामि क्रमेण सयोगी तस्य माता यस्मिन् गवाक्षे स्थितास्ति तस्य नीच्चैर्गत्वेव मुवाच ।

( श्लोक )

दुःखस्य वार्ताङ्कथयामि मात । सुतो हतस्ते हरिणामहार्यः ॥
नोज्यन्न जत्त्वा करुणा परोऽहम समागतः कारण मस्ति नान्यात् ॥ ३ ॥

तस्य मातोत्तरन्ददाति ( श्लोक )

जाता जनाये मरणं गतास्ते, जातस्य मृत्य ध्रुवता मुपेतः ।
रक्षन्ति के कं भवतोहि भावी, त्यक्त्वा तपः किं भ्रमणं करोषि ॥ ४ ॥

नीतावप्युक्तम् यतः

पाताल माविशतु यातु सुरेन्द्रलोके, मारोहतु क्षित धरादि पतिं च मेरुम् ।
मन्त्रौषध प्रहरणैश्च करोतु रक्षाम्, यद्भावितद्भवति नात्र विचार हेतु ॥ १ ॥

एवं श्रुत्वाश्चर्यं कृत्वा पुनश्चिन्तयाति किजातं पूर्वन्त्वहं हास्यः स्वार्थाः ज्ञात्वाऽत्रागतः किन्तु मात्रापि मोहो न कृत मन्येहं तावत्पर्यन्तं मोहो विद्यत मातुर्यावत् सःस्तनपानं करोति पश्चात् कस्य माता कस्य पुत्र अधुना किं जातं तस्य स्त्री पार्श्वे गमिष्यामि सात्ववश्यमेव भर्तुरुपरि मोहं करिष्यति भर्तुरेवा धारो यत इति ध्यात्वा तस्य स्त्रिया हर्म्यस्य नीच्चैर्गत्वा एव मुवाच ।

( श्लोक )

लावण्य युक्ते बहुसौख्य कारी, रतेःसमाने गुणयुक्तनारी ।
वदामि भर्ता तव नात्र शङ्का, शार्दूल नाम्ना हरिणा हतो यत् ॥ ५ ॥

तस्य स्त्री उत्तर न्ददाति ( श्लोक )

तरा वने केतु खगाः मिलन्ति, निशात्यये धर्म करो दये च।
गच्छन्ति ते ते स्वनिवास देशम्। संगास्तथैवेह मिलन्ति योगिन् ॥ ६ ॥

पुनश्चास्मिन्नसारे संसारे किं कस्यनित्यमस्ति तथाचोक्तम् ।

कतिन २ वारान् नृपातिर्भूरिभूतिः । कतिन २ वारांश्चात्रजातोस्मिकीटः ॥
नियतमिहनकस्याप्यस्ति सौख्यन्नदुःखम् । जगति तरलरूपे किं मुदा किं शुचा वा ॥१॥

एवं श्रुत्वा विपणगामन् चिन्तयाति किजातं पूर्वन्तु मया विचारितं तस्यस्त्री तु मोहं करिष्यत्येव परन्त्व-

नयापि न कृतः किं मत् प्रतिज्ञा भग्ना भविष्यति नहि २ इय मप्यन्यस्थानादागता तर्हि कथं ज्ञायते ऽनया मोहोजितः अस्तु यद्भावितद्भवतु अधुना तु राजानमेव कथयामि सत्वश्यमेव मोहं करिष्यति राज भारं वोढं समर्थः एक एव पुत्रोऽस्ति यत इति ध्यात्वा ततस्थानात् क्रमेण गच्छन् सन् राज सभायामागता राज्ञे आशीर्वादं दत्वा एव मुवाच ।

( श्लोक )

वार्ता हिराजङ्कथयाम्यवाच्याम् । रोषावहां सत्यतया क्षमस्व ॥
शार्दुलनामातव दक्षपुत्रः । सिंहान्मृतः कोपि न दूषणीयः ॥ ७ ॥

ईदृग्वचः योगिनः श्रुत्वा मोहजित राजामनसिविचारं करोति " अहोऽनेन दुष्टमोहनीय कर्मणा योगिनोऽपि स्वपासतो बध्वायत्ता कृता " एवं विचारं कृत्वा संबोधनसाहितं मोहनीय कर्मणेधिक्कारं ददातिः—" हे दुष्टत्वया स्वजाल मेवं विस्तरेण किं विस्तारितं किं त्वं न ज्ञायसे महद्भिः शूरवीरैत्वं तृणसदृशं ज्ञात्वा भस्मीकृतं तथा पि त्वया कुटिसस्वभावो न त्यक्तःगुणिता र–

ज्जु अग्नीमध्ये क्षिप्तापि गुणितत्स्वभावं न त्यजति अस्तु तेनैव प्रकारेण तव स्वभावोऽस्ति रेद्युप्रत्वं अतिवृद्धापिभिरपि न त्यक्त; किन्तु मय्यत्र तव सदृशदुष्टस्या गमनस्थानमेवनाऽस्ति ” एवं विचारयित्वा योगितं सरलस्वभावेनोत्तरं ददाति ।

( श्लोक )

योगेन साध्यो ममतानरिक्ता । इतस्ततः किं भ्रमणङ्करोषि ॥
तपोमलिनो भवतश्च जातम् । तस्यैव दुःखं मम नाऽस्तिचान्यत् ॥ ८ ॥

एवं कथनानन्तरं पुनरपि शिक्षा वचनं कथयति भोयोगीश्वर यदा भवता योगो ग्रहीतः तर्हि किं निरर्थकं मोहनीय कर्मवशादितस्ततः भ्रमण करोषि पुनश्च श्रूयतां यद्यपि व्यवहारात् मम पुत्रोऽभूत् तथापि मम तस्यमरणे कोऽपि शोको नास्ति यतः—

यस्मिन्देशे यदाकाले । यन्मूहूर्त्ते च यद्दिने ॥
हानिर्वृद्धिर्यशो लाभो । यत्तथा तद्भवचान्यथा ॥ १ ॥

पुनरस्मिन् जगति प्रतिदिनं केऽप्युत्पद्यन्ते केऽपि म्रियन्ते एव मनित्य संसारोऽस्ति परन्त्वे वं ज्ञायते नवता योगः पूर्णतया न साधितः इत्यादि शिक्षा वचनं कथयित्वा विरराम ।

ईदृक् वचः श्रुत्वा इमामवस्थां च दृष्ट्वा विचारयति हाहामया किं चिन्तितं किं जातं मदवस्था कमल कोशगत भ्रमरस्य यथाः—

( श्लोक )

**रात्रिर्गमिष्यति भविष्यति सुप्रभातं । भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः ॥**
**एवं विचिन्तयति कोषगते द्विरेके ॥ हाहंत हन्त नलिनी गज उज्जहार ॥ १ ॥**

इति अवस्थाजाता तथा बभूव मया तु विचारितमन्नकीटः किं न चलिष्यति किन्तु प्रत्युतान्युपदेवं जातं इत्यादि विचारं कृत्वेन्द्र महाराजस्य मत्यं वचमत्वा योगिवेशं त्यक्त्वा स्वस्वरूपं प्रकटं कृत्वा तुष्टाव तावत् सलीलया भ्रमन् सन् शार्दूलपुत्रोऽप्यागत्य राज्ञः पार्श्वेऽतिष्ठत् सदेवोवक्ति ।

हे पृथ्वी नाथ ! या प्रशंसेन्द्र महाराजस्य मुख्यात् श्रुतातस्मादप्यधिकं भवतस्तेजः प्रतापयोमर्मानुभ-

भवतोऽयं शुद्धव्यवहारः प्रतिदिनं वृद्धिं यातु यथाद्य योजानः अहं सर्वज्ञप्रज्ञो इमामेव प्रार्थनाङ्करोमि भवतोऽयं शुद्धव्यवहारः प्रतिदिनं वृद्धिं यातु यथाद्य नवनदर्निशं जिनेश्वरस्याज्ञायां वर्तसे तथेयं प्रवृत्तिः नवतःचिरकाल पर्यन्तं भवतु, अयं किं करः यदा कदापि कार्ये स्मरणीयः एवं विधं शुन्नाशीर्वादं दत्वा सदेवः स्वस्थानं प्रतिचचाल यदा सदेव इन्द्र महाराजस्य पार्श्वे प्राप्तः तदा सर्वं वृत्तान्तः कथयामास सदेवस्तु देवलोके सुखेन निवसति सराजाऽपि संसार निगमलालसमतिः स्वकालं निनाय ।

एकस्मिन्समये धर्मघोषाचार्यस्य नगरी बाह्यवने पदार्पणोऽभूत् तदा तपश्चर्यादिप्रभावात् सर्वं वनमा-श्चर्यकारिजातम् यतः ।

( श्लोक )

शुष्का शोककदंब आम वकुला, खर्जूरिका दाडिमा जाताः पुष्पफलप्रपल्लवयुता' शाखा-प्रशाखान्विताः ॥ शुष्कां नोजलवापिकाप्रभृतयोर्जाताः पयः पूरिताः । क्रीडान्तीहसुराज हंस शिखिनश्चक्रुः स्वरं कोकिलाः ॥ १ ॥

जातिश्चंपकपारिजातकजपा सत्केतकी मल्लीका । पद्मिनीप्रमुखाः क्षणाद्विकासिता प्रापुर्मधूपास्ततः ॥ कुर्वन्तो मधुरस्वरं सुललितं तद्गन्धमाघ्रायते ॥ गायन्तो बहुगायनं स्वरपरैः जातीदृशं तद्वनं ॥ २ ॥

एतादृशं आश्चर्यं दृष्ट्वा वनपालकेनागत्यैवं कथितं भो पृथ्वीनाथ ! अद्यतवपुण्योदयेनउद्यानेशान्तमुद्राधारकः, भव्यात्मतारकः, विशालबुद्धेर्धारकः, चन्द्रवत्सौम्यः, सूर्यवत तेजस्वी, सागरवत् गंभीरः, अनेक मुनिगणयुक्तः ज्ञानी गुरुरागतः एतद्श्रुत्वा रोमांच कंचुकित शरीरोद्विगुणीभूतगात्रभूषणः राजचिह्नं त्यक्त्वा सर्ववस्त्रा भूषणानि वनपालायादात् ।

पश्चादानन्द भेरी रव परिपूरित दिगंतराल चतुरङ्गबलेन गुरोर्वन्दनार्थं चचाल क्रमेण तत्र गत्वा यथाविधवन्दनां विधाय यथो चितस्थाने उपविष्ठः पश्चादेवं गुरोस्तुतीं चकार ।

हे भगवन् ! अद्याहो भाग्यं ममाऽभवत् भवादृशः गुरोर्दर्शनं जातं पुन अद्य त्रैलोक्य तिलको प्रतिभामि पुन अयं संसार समुद्रः चुलुकप्रमाणः प्रतिभाषते इत्याद्यनेकधा स्तुति विधाय विरराम ।

शुनावसरं ज्ञात्वाचार्यौधर्मोपदेशं ददाति। भो भव्यप्राणिन् इदं मनुष्य भवं दशभिर्दृष्टान्तैर्दुर्लभ मस्ति कदाचिद् पुण्योदयने मनुष्यजन्मं प्राप्यप्रमादनिद्राकपायादिवशेन समुद्देपातयाति स इह परत्रचाति दुःख भोक्ता भवति यतः।

( श्लोक )

अर्थापादरजः समागिरिनदी वेगोपमं यौवनं। मानुष्यं जलबिन्दुलोलचपलं फेनोपमं जीवितम् ॥ धर्मं योनकरोति निश्चलमतिः स्वर्गार्गलोद्घाटनं। पश्चातापहतो जरा परिणतः शोकाग्निना दह्यते ॥ १ ॥

पुनरस्मादपारसंसारसमुद्रात्पारप्राप्तिरतिकठिनास्ति यावत् पट्टफलकरूपसम्यक्त्वाधारो न मिलति तावत् तटे प्राप्तिकाठिनाऽस्ति कदाचित् शुभकर्मोदयेन सम्यक्त्वाधारं लब्धं पश्चादपि कर्मनानाप्रकारेण भ्रामयति अस्यामवस्थायामात्मनउद्धारः कथं स्यात्।



॥१५॥

अस्योपरिउत्तमोउत्तमदृष्टान्तः प्रोच्यते ।

कस्मिंश्चिदपारंसमुद्रे एको मनुष्यो भयभ्रान्तो इतस्ततः भ्रमति तीरेप्राप्त्यर्थं कश्चिद्वस्तु मृगयति तस्मिन्प्रस्तावे शुभकर्मोदयेनैकं पट्टफलकं लब्धं तस्य सहाय्येन शनै २ स्तरति तस्मिंसमये किं जातं एकः प्रचण्डवायोः पुनर्जलप्रवेशोऽभवत् पुनरपि महता कष्टेन पट्टफलकसहाय्यात् बहिरागत्य तराति तस्मिन्समये तटी मनुष्य एवं कथयति रे भव्यजीव ! धैर्यमवलंब्येमां तवाग्रे चलमानां नाव मारुह्य क्रमेण वहमानः सन् तटे लगमानां शृंखलां गृहीत्वा तटे आगच्छ तदावामस्मिं नगरे याव तदैव बहुसुखभाग् भवाव इति आनन्द प्रदवचनं श्रुत्वा नावमारुह्य यत्नेन तटे पाप्त्यर्थं नावं वाहयति क्रमेण तट समीपे आगत्य तटी मनुष्येन दर्शितां शृंखलां गृहीत्वा तटी मनुष्यं प्रति एवं कथयति भोसमुद्रतारका धुनात्वाति श्रमेण दुःखितोऽस्मितटे आगमन सामर्थ्यं नाऽस्ति तदा तटी मनुष्यः अनेक धोपदेशं धैर्यं च दत्वा पुनरपि कथित मधुनैवागमिष्यसि कश्चिदेवश्रमोऽस्ति तेन प्रयत्नं कुरु प्रयत्नं कुरु एवं धैर्यावलंबनादि वचनं श्रुत्वा बहुधाश्रमेण तटं प्राप्तः पश्चात् तौ द्वौ संमील्यतस्मिन्निकटवर्ति नगरे गत्वा सानन्दन्निवसतः ।

प्रकृते दृष्टान्त इत्थं संघटते—

संसार एव समुद्रे जीवः दुःखेन पीडितो तरणार्थं किंचित् मृगयते शुभकर्मोदयेन सम्यक्त्वरूप पट्टफल-कं लब्धं तदावहिरागत्य तरति तस्मिन्समये मोहरूपवायुलगनात् पुनः संसाररूप समुद्रेऽपतत् तेन-संसारमध्ये घोर कष्टं सहमानः प्रयत्नात् सम्यक्त्वरूपपट्टफलकेन पुनर्बहिरागत्यतराति तदा केवलज्ञानरूप तटपरिस्थितः मनुष्यरूप अरिहन्तदेव एवं कथयति भो भव्यजीव ! इदं द्वादशव्रतरूपनावमङ्गीकुरुक्रमे-ण शृंखलारूपसंयमं गृहीत्वा केवलज्ञानरूपतटोपरिआगच्छ ( अर्थाच्चतुर्घातिकर्म विनाश्य केवलज्ञानं साधयन् केवलज्ञानरूपतटो परिआगत्य शेषं कर्मक्षयं कृत्वा अनन्त सुखमयसिद्धिपुरीं प्राप्तः । ध्रियताम् ) तेन मोक्षरूपनगरे गत्वा नन्तसुखभाग् भवावः स पुरुषोऽपि पूर्वं कथितेन महता कष्टेन सा-

दृष्टान्त कथन प्रयोजन मिदमेवाऽस्ति यः जीवः घोर दुःख दातारं गृहस्थाश्रमं त्यक्त्वा श्रमणपदंनाङ्गी करोति तावत् शुद्ध परिणाम रूपश्रेण्यु परिआगे ह्ये दुःसाध्यः ( कठिनोऽस्ति ) तस्मात्करणात् भो भव्यप्राणिन् यथा शक्ति देश वृत्तिसर्ववृत्ति ( श्रावकवृत्तं साधुवृत्तं ) अंगीकृत्वा मनुष्य भवं सार्थं कुरु तस्मादग्रे भवे सुखभाग् भविष्यथ इत्याद्यनेक धोपदेशं दत्वाविराम ।

गच्छोऽस्तिनः खर्तरनामको यत् । सुखाब्धिनामागुणसंघयुक्तः ॥ एषांहि संघेनिवसामि त्र
व्याः । पूर्णाब्धि नामागुरुरास्ति गुण्यः ॥ ३ ॥

इदं चरित्रं रचितं यथा धि । त्रव्यात्मबोधाययथात्मशक्तेः ॥ गीर्वाण वाणीं प्रतिबोधना-
य । क्षेमाब्धिनाम्ना श्रमणानुगेन ॥ ४ ॥

बुद्धिमद्भ्यः वहुविस्तरेणालम् ।

शुभेच्छु—

क्षेमसागर

KHEMSAGAR.

नोट–इस ग्रन्थको पाली ( मारवाड़ ) निवासी सूजी वाई ने प्रकट करवाया.

आनन्ददायिकां भवनाशिका मेव विधादशनां श्रुत्वा केचनभव्यप्राणिनो देशावृत्तं केचनपंचमहावृत्तं म-ङ्गीचक्रुः नवनीरू मोहजीत राजोऽपि संसार पाश सदृशं मत्वा शार्दूलनाम्ने स्वपुत्राय राज्यं दत्वा ।

( श्लोक )

चारित्र रत्नान्न परं हि रत्नम् । चारित्र वित्तान्न परं हि वित्तम् ॥ चारित्र लाभान्न परो हि लाभ । श्चारित्र योगा न्न परो हि योगः ॥ १ ॥

इति लक्षण सम्पन्न चारित्रं जग्राह ।

( श्लोक )

दीक्षा गृहीता दिनमेकमेव । येनोग्र चित्तेन शिवं सयाति ॥ नतद् करदाचित्तदवश्य-मेव । वैमानिकः स्यात्त्रिदशप्रधानः ॥ २ ॥

इति चारित्र महात्म्यं ज्ञात्वा क्रमेण गीतार्थोऽभूत् तदा गुरोराज्ञा गृहीत्वा ग्रामानुग्राम विहृत्य भव्यजीवान् प्रतिबोधयित्वा जैन धर्मस्यालौकिकं प्रभावं दर्शयित्वान्ते ।

( श्लोक )

तपस्तीव्र घरट्टोऽयम् । क्षमामर्कटि कान्वितः ॥ धृतिहस्तोमनःकीलः । कर्मध्यान्यानि-चूर्ययेत् ॥ १ ॥

इति लक्षितस्तपस्प्त्वा समाधिना पञ्चत्वं प्राप्य सद् गाति भाग् बभूव ।

इति ।

( श्लोकानि )

नवाधिक त्रिंशति वीरवत्सरे । शुभेचतुर्विंशति संख्यया धिके ॥ कोटाभिधाने शुभपत्तने यथा । मतिः कृतं मोहजितस्य वृत्तम् ॥ १ ॥

त्रैलोक्यसिंघुर्गणनायकश्च । तस्यैव राज्ये सुख शान्ति पूर्वम् ॥ ऊर्जेऽत्र मासे शुभशुक्लपक्षे । ग्रन्थं समाप्तं शिव पूर्णिमायाम् ॥ २ ॥

गच्छोऽस्तिनः खर्तरनामको यत् ।सुखाब्धिनामागुणसंघयुक्तः ॥ एषांहि संघेनिवसामि न
व्याः । पूर्णाब्धि नामागुरुरास्ति गुण्यः ॥ ३ ॥

इदं चरित्रं रचितं यथा धि । नव्यात्मबोधाययथात्मशक्तेः ॥ गीर्वाण वाणीं प्रतिबोधना-
य । क्षेमाब्धिनाम्ना श्रमणानुगेन ॥ ४ ॥

बुद्धिमद्भ्यः वहुविस्तरेणालम् ।

शुभेच्छु—

क्षेमसागर

KHEMSAGAR

नोट—इस ग्रन्थको पाली ( मारवाड़ ) निवासी सूजी बाई ने प्रकट करवाया.

॥ इति श्रीमोहजीत—चरित्र समाप्तम् ॥

मिलने का पता—

शेरसिंह रावत कोठानाला [illegible]

रतलाम ( मालवा )

॥ इति श्रीनमस्कारमाहात्म्य—योगप्रदीपौ समाप्तौ ॥

## ॥ इति श्रीमोहजीत-चरित्र समाप्तम् ॥

मिलने का पता—

शेरसिंह रतन कोठारी डंडा

रतलाम ( भारत )

न किंचिद्भावनाकारं । तद् ब्रह्म परमं पदं ॥ ४३ ॥ इति योगप्रदीपः समाप्तः ॥श्रीरस्तु॥
आ ग्रंथ श्री जामनगरनिवासी पंमित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे पोताना श्रीजैनभास्करोदय छापखानामां गपी प्रसिद्ध कर्यो ने.

॥ समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात ॥

---

न किंचिद्भावनाकारं । तद् ब्रह्म परमं पदं ॥ ४३ ॥ इति योगप्रदीपः समाप्तः ॥श्रीरस्तु॥

आ ग्रंथ श्री जामनगरनिवासी पंमित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे पोताना श्रीजैनभास्करोदय छापखानामां छापी प्रसिद्ध कर्यो छे.

॥ समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात ॥

---

समुत्पाद्य च । पापान्मुक्तिपदं सदा सुखमयं क्षीणाष्टकर्मा क्रमात् ॥ ३४ ॥
अहिंसा सत्यमस्तेयं । ब्रह्मचर्यमसंगता ॥ इत्येतानि व्रतान्यत्र । संयमः पंचधा
स्मृतः ॥ ३५ ॥ शौचं तपश्च संतोषः । स्वाध्यायो देवतास्मृतिः ॥ नियमः पंचधा ज्ञे-
यः । करणं पुनरासनं ॥३६॥ श्वासप्रश्वासयोः स्थैर्यं । प्राणयामो भवेत्पुनः ॥ प्रत्याहा-
रो विषयेभ्य । इंद्रियाणां समाहितं ॥ ३७ ॥ समाधिर्भवहंतॄणां । वाक्यानामर्थचिंतनं ॥
स्थैर्यहेतोर्भवेद्ध्येयो । धारणा चित्तयोजना ॥ ३८ ॥ स्थूले वा यदिवा सूक्ष्मे । सा-
कारे वा निराकृतौ ॥ ध्यानं ध्यायेत स्थिरं चित्तं । एकं प्रत्ययमंगते ॥ ३९ ॥ एवं यो-
गो भवेद्योगै–रष्टधा संयमादिभिः ॥ सर्वातिशयसंपन्नं । ध्यानं कल्याणकारणं ॥ ४० ॥
दिवि भूमौ तथाकाशे । बहिरंतश्च यो विभुः ॥ यो विभात्येव भासात्मा । तस्मै सर्वा-
त्मने नमः ॥ ४१ ॥ नाहं बद्धो विमुक्तश्च । इति यस्यास्ति निश्चयः ॥ नात्यंततद्ज्ञो
नो मूर्खः । सोऽस्मिन् शास्त्रेऽधिकारवान् ॥ ४२ ॥ सर्वसंकल्पसन्न्यस्त–मेकांतघनवासनं ॥

सकलं त्यक्त्वा । ब्रह्मद्वारे स्थिरं मनः ॥ क्रियते यदि तत्सूक्ष्मं । निराकारमिहोच्यते ॥
॥ २७ ॥ ध्याने त्वनाहते शुद्धे । नित्याभ्यासप्रयोगतः ॥ द्वादशांते निराकारे । मनो
योगं निवेशयेत् ॥ २८ ॥ बाह्यमाभ्यंतरं योगी । त्यक्त्वात्मानं द्विधापि च ॥ ब्रह्मद्वारं
निराकारं । परमात्मपदं श्रयेत ॥ २९ ॥ एकांगुलपरीमाणं । सुवृत्तं व्योमसन्निभं ॥ यो-
गींद्रः प्रथमं यावद् । द्वादशांतं विचिंतयेत् ॥ ३० ॥ नेत्रमंमध्यसंस्थायी । द्वादशात्मा
निगद्यते ॥ तस्मादप्यूर्ध्वगं ब्रह्म । द्वादशांते तथा स्मृतं ॥ ३१ ॥ नादबिंदुकलातीतं ।
परमात्मकायुतं ॥ द्वादशांगं सदा ध्यायेत । सदानंदैकमंदिरं ॥ ३२ ॥ रुध्वा योगी क-
षायप्रसरमविचलानिंद्रियान् स्वान्नियम्य । त्यक्त्वा वामांगमन्यं परमपदसुखप्राप्तये बद्ध-
बुद्धिः ॥ कृत्वा चित्तं स्थिरं स्वं शमरसकलितं सत्वमालंब्य बाढं । ध्यानं ध्यातुं यतेत
प्रतिदिनममलं शुद्धधर्मा वितंद्रः ॥ ३३ ॥ भित्वा संसृतिपाशमंतरबलं जित्वाथ मोहादिकं
। दीक्षां मोक्षकरीं प्रपद्य स बुधः पार्श्वे प्रनोरुद्यतः ॥ ब्रह्मज्ञानलयेन केवलमतो ज्ञानं

॥ १७ ॥ घंटानादो यथा प्रांते । प्रशाम्यन्मधुरो भवेत् ॥ अनाहतोऽपि नादोऽथ । तथा शांतो विभाव्यतां ॥ १८ ॥ नदत्यव्यक्तरूपेण । सर्वभूतहृदि स्थितः ॥ स नादोऽनाहतस्तेन । न नादो व्यक्तिसंभवः ॥ १९ ॥ स नादः सर्वदेहस्थो । नाशाग्रे तु व्यवस्थितः ॥ प्रत्यक्षः सर्वभूतानां । दृश्यते नैव लक्ष्यते ॥ २० ॥

अक्षरध्वनिनिर्मुक्तं । निस्तरंगं समे स्थितं ॥ यच्चित्तं सहजावस्थं । स नादस्तेन भिद्यते ॥ २१ ॥ तावदेवेंद्रियाणि स्युः । कषायास्तावदेव हि ॥ अनाहते मनो नादे । यावल्लीनंन योगिनः ॥२२॥ सौख्यं वैषयिकं तावत् । सुरम्यं प्रतिभासते ॥ अनाहतलयोत्पन्नं । सुखं यावन्न लभ्यते ॥ २३ ॥ जन्मलक्षार्जितं कर्म । ध्यानेनानेन योगिनः ॥ तमः सूर्योदयेनेव । तत्सर्वं नश्यति क्षणात् ॥ २४ ॥ स्थूलं सूक्ष्मं च साकारं । शुभध्यानमिति स्फुटं ॥ रूपातीतं समाख्यातं । निराकारमथोच्यते ॥ २५ ॥ निराकारमपि ध्यानं । रूपातीतसमुज्ज्वलं ॥ स्थूलसूक्ष्मविभेदेन । द्विविधं परिकीर्तितं ॥ २६ ॥ शरीरं

क्षीयंते यानि कालेन । किं तैः कर्त्तव्यमक्षरैः ॥ यावन्नोऽनक्षरं प्राप्तं । तावन्मो-
क्षसुखं कुतः ॥ ९ ॥ ध्यानकल्पतरुर्लोके । ज्ञानपुष्पैः स पुष्पितः ॥ मोक्षामृतफलै-
र्नित्यं । फलितोऽयं सुखप्रदैः ॥ १० ॥ तथा कुरु यथा शुक्ल-ध्यानवृक्षसमाश्रितः ॥ चि-
न्वानो ज्ञानपुष्पाणि । लभेन्मोक्षफलं बुधः ॥ ११ ॥ अस्मिन्नेव भवे सौम्य-व्योमरूपः
सनातनः ॥ शुक्लध्यानात्सदानंदो । योगी मुक्तिपदं व्रजेत ॥ १२ ॥ ज्ञानदर्शनचारित्र-
रूपरत्नत्रयात्मकः ॥ योगो मुक्तिपदप्राप्ता-वुपायः परिकीर्तितः ॥ १३ ॥ व्यापारच्छिन्नसं-
सारः । संयोगो मुक्तियोजकः ॥ विभक्तः संयमाद्यंगैः । सोऽपि स्यादष्टधा पुनः ॥ १४ ॥
मणिहुतवहतारासोमसूर्यादयोऽपि । क्षितिविषयमिहाल्पं बाह्यमुद्योतयंति ॥ सहजभ्रय-
समुत्थं द्योतयेज्ज्योतिरंत-स्त्रिभुवनमपि सूक्ष्मस्थूलभेदं सदैव ॥ १५ ॥ परमानंदास्पदं
सूक्ष्मं । लक्ष्यं स्वानुभवात्परं ॥ अधस्ताद् द्वादशांतस्य । ध्यायेन्नादमनाहतं ॥ १६ ॥ तै-
लधारामिवाच्छिन्नं । दीर्घघंटानिनादवत् ॥ लयं प्रणवनादस्य । यस्तं वेत्ति स योगवित् ॥

॥ ९९ ॥ निरालंबे निराकारे । सदानंदास्पदे शुभे ॥ सतां ध्यानमये सौधे । सत्वं स्तंभो दृढो मतः ॥ १०० ॥ यथा वह्निलवेनापि । दह्यंते दारुसंचयाः ॥ कर्मैधनानि दह्यंते । तथा ध्यानलवेन तु ॥ १ ॥ यथा वा मेघसंघाता । प्रलीयंतेऽनिलाहताः ॥ शुक्लध्यानेन कर्माणि । क्षीयंते योगिनां तथा ॥ २ ॥ यः सदा स्नाति योगींद्रो । ध्यानस्त्रब्रमहाजले ॥ लक्षमेकं कथं तिष्टेत् । तस्मिन् कर्मरजोमलः ॥ ३ ॥ न लगेत्पद्मिनीपत्रे । यथा तोयं स्वभावतः ॥ पाषाणो भिद्यते नैव । जलमध्ये स्थितो यथा ॥ ४ ॥ स्फटिको मलिनो न स्यात् । रजसाच्छादितो यथा ॥ न लिप्यते तथा पापै-रात्मा सद्ध्यानमाश्रितः ॥ ५ ॥ शुक्लध्यानसमायोगाद् । ब्रह्मविद् ब्रह्मणि स्थितः ॥ भूमिस्थोऽपि भजेद्योगी । शाखाग्रफलमुत्तमं ॥ ६ ॥ मुक्तिश्रीपरमानंद-ध्यानेनानेन योगिना ॥ रूपातीतं निराकारं । ध्यानं ध्येयं ततोऽनिशं ॥ ७ ॥ ग्रंथानभ्यस्य तत्वार्थं । तत्वज्ञाने पुनः सुधीः ॥ पलालमिव ध्यानार्थी । त्यजेद् ग्रंथानशेषतः ॥ ८ ॥

मानसं ॥ तं सामायिकमित्याहु-र्निर्वातस्थानदीपवत् ॥ ८० ॥ निःसंगं यन्निराभासं ।
निराकारं निराश्रयं ॥ पुण्यपापविनिर्मुक्तं । मनः सामायिकं स्मृतं ॥ ८१ ॥ गते शो-
को न यस्यास्ति । न च हर्षः समागते ॥ शत्रुमित्रसमचित्तं । सामायिकमिहोच्यते ॥
॥ ८२ ॥ यत्प्रसर्पति लोकेऽस्मिन् । शास्त्रे कुकविभिः कृतं ॥ अविद्या वा विनिर्दिष्टा ।
समताभ्रमकारणं ॥ ८३ ॥ यथा रात्रौ तमोमूढा । नैव पश्यंति जंतवः ॥ नैवेदंते न-
था तत्व-मविद्यातमसावृताः ॥ ८४ ॥ मोहमायामयी दुष्टा । साधूनां मोक्षकांक्षिणां ॥
मुक्तिमार्गार्गला नित्य-मविद्या निर्मिता भुवि ॥ ८५ ॥ इति ज्ञात्वा बुधैर्नित्यं । स्वात्म-
नो हितवांछया ॥ अविद्या दूरतस्त्याज्या । न श्रोतव्या कदाचन ॥ ८६ ॥ सर्वज्ञोक्ता
तु सद्विद्या । भवविच्छेदकारणं ॥ सैव सेव्या सदा सद्भि-र्मोक्षमार्गप्रदायिका ॥ ८७ ॥
स त्वं रजस्तमश्चेति । शरीरांतर्गुणत्रयं ॥ रजस्तमश्च संत्यज्य । सत्वमेकं समाश्रयेत् ॥८८॥
सत्वं सर्वगुणाधारं । सत्वं धर्मधुरंधरं ॥ संसारनाशनं सत्वं । सत्वं स्वर्गापवर्गदं ॥

न्ये शून्यं भवेत्पुनः ॥ ८० ॥ कृताभ्यासो यथा धन्वी । लक्ष्यं विध्यति तन्मनाः ॥ ए-
कचित्तस्तथा योगी । वांछितं कर्म साधयेत् ॥ ८१ ॥ तस्मादप्युत्तमं सारं । पवित्रं कर्म-
नाशनं ॥ सर्वधर्मोत्तरं चित्तं । कार्यं शमरसात्मकं ॥ ८२ ॥ जन्मलक्षैर्व्रतैरुग्रै—र्यन्नैव
क्षीयते क्वचित् ॥ मनःशमरसे मग्नं । तत्कर्म क्षपयेत् क्षणात् ॥ ८३ ॥ सर्वारंभपरित्या
गात् । चित्तेऽत्रामरसंगते ॥ सा सिद्धिः स्यात्सतां या नो । सर्वतीर्थावगाहने ॥ ८४ ॥
विद्यमाने परे मूढा । योगे शमरसात्मके ॥ योगं योगं प्रकुर्वाणाः । संभ्राम्यंति दिशो-
दिशं ॥ ८५ ॥ तावद्वर्णविशेषोऽस्ति । यावद्ब्रह्म न विंदति ॥ संप्राप्ता परमं ब्रह्म । सर्वे
वर्णा द्विजातयः ॥ ८६ ॥ धर्ममार्गा घनाः संति । दर्शनानां विभेदत. ॥ मोक्षार्थं समतां
यांति । समुद्रं सरितो यथा ॥ ८७ ॥ गवामनेकवर्णाना—मेकवर्णं यथा पयः ॥ षड्द-
र्शनमार्गाणां । मोक्षमार्गस्तथा मतः ॥ ८८ ॥ संकल्पकल्पनामुक्तं । रागद्वेषविवर्जितं
सदानंदलये लीनं । मनः समरसं स्मृतं ॥ ८९ ॥ अतीतं च भविष्यच्च । यत्र शोचति

कल्पवर्जितं चित्तं । परं ब्रह्म निगद्यते ॥ ७१ ॥ परब्रह्मैव तद्ज्ञेयं । सिद्ध्यर्थं विबुधैः म
दा ॥ स्पष्टार्थः कथितः प्राज्ञ—योगयुक्त्या तवाग्रतः ॥ ७२ ॥
न किंचिच्चिंतयेच्चित्त—मुन्मनीभावसंगतं ॥ निराकारं महासूक्ष्मं । महाध्यानं तदु-
च्यते ॥ ७३ ॥ पिंडपदरूपभेदाः । शुक्लध्यानस्य ये पुरा ॥ उक्तास्तस्यैव रोहार्थं । प्रा-
सादे पदिकं यथा ॥ ७४ ॥ कीदृशोऽस्मि क्व गंतास्मि । किं करोमि स्मरामि किं ॥ इ-
ति योगी न जानाति । लये लीनो निरंजने ॥ ७५ ॥ आच्छादिते ज्ञाननेत्रे । विषयैः
पटलोपमैः ॥ ध्यानं सिद्धिपुरीद्वारं । नैव पश्यंति जंतवः ॥ ७६ ॥ पंचभिश्चंचलैरिंद्रि—
पृथक्विषयनामभिः ॥ अनिरुद्धैरिंद्रियाद्यै—र्ध्यानी व्यावर्त्तते मनः ॥ ७७ ॥ शमं नीते-
पु तेष्वत्र । कषायेष्विंद्रियेष्वपि ॥ ध्यानस्थैर्यकृते चित्तं । कार्यं संकल्पवर्जितं ॥ ७८ ॥
ध्यानं मनःसमायुक्तं । मनस्तत्र चलाचलं ॥ वश्यं येन कृतं तस्य । भवेद्वश्यं जगत्त्र-
यं ॥ ७९ ॥ यच्छुभं कर्मकर्त्तृत्वं । तत्कुर्यान्मनसा सह ॥ मनस्तुल्यं फलं यस्मात् । शु-

नं ॥ ६१ ॥ पवनो म्रियते यत्र । मनो यत्र विलीयते ॥ विज्ञेयं सहजं स्थानं । तत्सू-
क्ष्ममजरामरं ॥ ६२ ॥ मनोव्यापारनिर्मुक्तं । सदैवाभ्यासयोगतः ॥ उन्मनीभावमायातं ।
लभते तत्पदं क्रमात् ॥ ६३ ॥ विमुक्तविषयासंगं । सन्निरुद्धं मनो हृदि ॥ यदायात्युन्म-
नीभावं । तदा तत्परमं पदं ॥ ६४ ॥ ध्यातृध्यानोभयाभावे । ध्येयेनैक्यं यदा व्रजे-
त् ॥ सोऽयं समरसीभाव-स्तदेकीकरणं मतं ॥ ६५ ॥ शुक्लध्यानस्य सूक्ष्मस्य । निराका-
रस्य किंचन ॥ अथातः प्रोच्यते तत्वं । दुर्ज्ञेयं महतामपि ॥ ६६ ॥ रात्रौ सुप्तेन मूकेन
। लब्धः स्वप्नोऽत्र केनचित् ॥ न ब्रूते सोऽपि मूकस्तु । तेन स्वप्नो न बुध्यते ॥ ६७ ॥
यो मूको यादृशी रात्रिः । स्वप्नोऽपि प्राज्ञ यादृशः ॥ फलं च यादृशं तस्य । शृणु सौ-
म्य तदादरात् ॥ ६८ ॥ अविद्यारात्रिसुप्तेन । चित्तमूकेन योगिना ॥ स्वप्नो भावमयो ल-
ब्ध-स्तस्यैवानंददायकः ॥ ६९ ॥ कृतस्तेन तिरोभावः । परब्रह्मणि योगिना ॥ परब्रह्म-
गतो भाव-स्तस्य मुक्तिफलो भवेत् ॥ ७० ॥ सोमसूर्यद्वयातीतं । वायुसंचारवर्जितं ॥ मं-

त्त्ये स्यादसौ सतां ॥ ५२ ॥ तत्कर्म तद्व्रतं ध्यानं । तत्तपो योग एव सः ॥ स एव
हि पदारोहे । न यत्र क्लिश्यते मनः ॥ ५३ ॥ संकल्पेन विकल्पेन । हीने हेतुविवर्जि-
ते ॥ धारणाध्येयनिर्युक्ते । निर्मलस्थानके ध्रुवे ॥ ५४ ॥ नियुंजीत सदा चित्तं । म-
भावं भावनां कुरु ॥ पदे तत्र गतो योगी । न पुनर्जन्मतां व्रजेत ॥ ५५ ॥ ज्ञेयं मर्वं
पदातीतं । ज्ञानं च मन उच्यते ॥ ज्ञानं ज्ञेयं समं कुर्या-न्नान्यो मोक्षपथः पुनः ॥
॥ ५६ ॥ भ्रुवोपरि मनो नीत्वा । तत्परं चावलोक्यते ॥ परात्परतरं तच्च । तत्सूक्ष्मं त-
न्निरंजनं ॥ ५७ ॥ पूर्वमार्गे न मोक्षोऽस्ति । पश्चिमेऽपि न विद्यते ॥ उन्मार्गं उन्मनी-
भावे । मुक्तिः स्याद्वर्गवर्जिता ॥ ५८ ॥ भवभ्रांतिपरित्यागा-दानंदैकरसात्मिका ॥ सद्-
जावस्थितिः साधो-रयं मोक्षपथः स्मृतः ॥ ५९ ॥ मनो यत्कायरहितं । श्वासोच्छ्वास
विवर्जितं ॥ गमागमपथातीतं । सर्वव्यापारवर्जितं ॥ ६० ॥
निराश्रयं निराधारं । सर्वाधारमहोदयं ॥ पराचीनं पदं ज्ञेयं । योगिभिस्तन्निरंज-

श्यं कृत्वा स्थिरं मनः ॥ निक्षिप्य परमानंद–स्नेहपूरं सुधादिकं ॥ ४३ ॥ दीपश्रेणीमुदितां च । प्रबोध्य ज्ञानतेजसा ॥ उत्तारयेत प्रभोः पुण्य–मारात्रिकमिति क्रमात ॥४४॥ सदैव विधिनानेन । देवेशस्य प्रभोरहं ॥ भवेयं भावतः पूजा—कारकश्चेति चिंतयेत् ॥ ॥४५॥ स्वहंसमंतरात्मानं । विरूपं परमात्मनि ॥ योजयन् परमे हंसे । निर्वाणपदमश्नुते ॥ ४६ ॥ द्वाभ्यामेकं विधायाथ । शुक्लध्यानेन योगवित् ॥ परमात्मस्वरूपं तं । स्वमात्मानं विचिंतयेत ॥ ४७ ॥ सुलब्धानंदसाम्राज्य–केवलज्ञानभास्करः ॥ परमात्मस्वरूपोऽहं । जातस्त्यक्तभवार्णवः ॥ ४८ ॥ अहं निरंजनो देवः । सर्वलोकाग्रमाश्रितः ॥ इति ध्यानं सदा ध्याये–दक्षयस्थानकारणं ॥ ४९ ॥ आत्मनो ध्यानलीनस्य । दृष्टे देवे निरंजने ॥ आनंदाश्रुप्रपातः स्या–द्रोमांचश्चेति लक्षणं ॥ ५० ॥

स यमो नियमश्चैव । करणं च तृतीयकं ॥ प्राणायामप्रत्याहारौ–समाधिर्धारणा तथा ॥ ५१ ॥ ध्यानं चेतीह योगस्य । ज्ञेयमष्टांगकं बुधैः ॥ पूर्णांगं क्रियमाणस्तु । सु-

निर्दिष्ट । एष एव निरंजनः ॥ ३३ ॥ जिनेंद्रो जल्प्यते जैनै-र्बुधः कृत्वा च सौगतैः ॥
कौलिकैः कौल आख्यातः । स एवायं सनातनः ॥ ३४ ॥ स्फटिको बहुरूपः स्या-द्यथ-
वोपाधिवर्जितः ॥ स तथा दर्शनैः षड्भिः । ख्यात एकोऽप्यनेकधा ॥ ३५ ॥ यथाप्यनेक-
रूपं स्या-ज्जलं भूवर्णभेदतः ॥ तथा भावविभेदेन । नानारूपः स गीयते ॥ ३६ ॥ भा-
वभेदान्न गच्छंति । दर्शनान्येकवर्त्मना ॥ तकत्रापि स्थिताः काये । पंचैते विषया यथा
॥ ३७ ॥ निष्कलो निर्ममः शांतः । सर्वज्ञः सुखदः प्रभुः ॥ स एव भगवानेको । देवो
ज्ञेयो निरंजनः ॥ ३८ ॥ व्योमरूपो जगन्नाथः । क्रियाकालगुणोत्तरः ॥ संसारसृष्टिनि-
र्मुक्तः । सर्वतेजोविलक्षणः ॥ ३९ ॥ केवलज्ञानसंपूर्णः । केवलानंदसंश्रितः ॥ केव-
लज्ञानगम्यश्च । देवेशोऽयमिहोच्यते ॥ ४० ॥ इत्यनंतगुणाकीर्ण-मनंतं सुखशालिनं
॥ ध्यायेन्मुक्तिपदारूढं । देवेशमपुनर्भवं ॥ ४१ ॥ शमरसस्वच्छगंगा-जलेन स्नापयेत्सदा
॥ पूजयेत्तं ततो योगी । भावपुष्पैः सुगंधिभिः ॥ ४२ ॥ भक्तिस्थाले विशाले च । व-

एव प्रभुः शांतो । निर्वाणस्थो विलोक्यते ॥ २४ ॥ सुरासुरनराधीश–पूजितो जगतां हितः ॥ सर्वदोषविनिर्मुक्तो । देवेशः परिकीर्तितः ॥ २५ ॥ पुण्यापुण्यपथातीतो । भववल्लीविनाशनः ॥ अव्यक्तो व्यक्तरूपश्च । सर्वज्ञः सर्वदर्शनः ॥ २६ ॥ निराकारो निराभासो । निःप्रपंचो निरंजनः ॥ सदानंदमयो देवः । सिद्धो बुद्धो निरामयः ॥ २७ ॥ अनंतः केवलो नित्यो । व्योमरूपः सनातनः ॥ देवाधिदेवो विश्वात्मा । विश्वव्यापी पुरातनः ॥ २८ ॥ कृत्स्नकर्मकलातीतः । सकलो निष्कलोऽपि च ॥ परमात्मा परं ज्योतिः । परं ब्रह्म परात्परः ॥ २९ ॥ गुणत्रयविनिर्मुक्तो । गंधस्पर्शविवर्जितः ॥ अछेद्यश्चाप्यभेद्यश्च । निर्लेपो निर्मलः प्रभुः ॥ ३० ॥

सगुणो निर्गुणः शांतः । संसारार्णवतारकः ॥ दुर्लक्ष्यो लक्ष्यमापन्नः । सुवर्णावर्णवर्जितः ॥ ३१ ॥ एकोऽप्यनेकरूपश्च । स्थूलः सूक्ष्मो लघुर्गुरुः ॥ निर्वाणपदमारूढो । देवेशोऽयमिहोच्यते ॥ ३२ ॥ ब्राह्मणैर्लक्ष्यते ब्रह्मा । विष्णुः पीतांबरैस्तथा ॥ रुद्रस्तपस्वि-

एवायं । ध्याने रूपविवर्जिते ॥ १५ ॥ एवमभ्यासयोगेन । ध्यानेनानेन योगिभिः ॥
शरीरांतःस्थितः स्वात्मा । यथावस्थोऽवलोक्यते ॥ १६ ॥ न ज्ञातः पुरुषो येन । गुण-
प्रकृतिवर्जितः ॥ तेनैव तीर्थयज्ञादि । सेवनीयं न योगिभिः ॥ १७ ॥ आत्मज्ञानं परं
तीर्थं । न जलं तीर्थमुच्यते ॥ स्वात्मज्ञानेन यच्छौचं । तच्छौचं परमं स्मृतं ॥ १८ ॥ आ-
त्मज्ञानं परो धर्मः । सर्वेषां धर्मकर्मणां ॥ प्रधानं सर्वविद्यानां । प्राप्यते ह्यमृतं ततः ॥
॥ १९ ॥ तपोभिर्दुस्तपैस्तस्तै-र्व्रतैस्तैस्तैश्च दुष्करैः ॥ आत्मज्ञानं विना मोक्षो । न भवे-
द्योगिनामपि ॥ २० ॥ सर्वधर्ममयः श्रीमान् । सर्ववर्णविवर्जितः ॥ आत्माऽयं ज्ञायते ये-
न । तस्य जन्म न विद्यते ॥ २१ ॥

एवं ध्यात्वा स्वमात्मानं । स्वकाये कायवर्जितं ॥ ध्येयः परपदारूढः । परमात्मा
निरंजनः ॥ २२ ॥ स्वप्नदृष्टिसमां तत्र । दृष्टिमुन्मील्य योगवित् ॥ पश्येत् परपदारूढं ।
देवेशं मुक्तिहेतवे ॥ २३ ॥ शंकरो वा जिनेशो वा । यो यस्याभिमतः सदा ॥ एक

लोक्यते चौरो । गते स्वल्पेऽपि वस्तुनि ॥ सत्वस्वहरमात्मानं । मनः पश्यंति नो जडाः
॥ ६ ॥ तत्सामायिकदीपेन । कायदुर्गसमाश्रितः ॥ अज्ञानाछादितः स्वात्मा । निरी-
क्ष्यो योगिभिः सदा ॥ ७ ॥ आत्मैव सुप्रसन्नोऽत्र । सुगतिः परिकीर्त्तितः ॥ अप्रसन्नः पु-
नरयं । दुर्गतिः स्यादसंशयं ॥ ८ ॥ तीर्थं तीर्थं कुर्वंतीह । यस्य दर्शनवांछया ॥ वसन्न-
त्रैव देहेऽसौ । देवो दृष्टुं न शक्यते ॥ ९ ॥ स्थाने स्थाने भ्रमंतीह । देवदर्शनहे-
तवे ॥ शरीरस्थं न पश्यंति । देवमज्ञानबुद्धयः ॥ १० ॥ सर्वधातुविनिर्मुक्तो । ज्ञानरू-
पो निरंजनः ॥ आत्मैव कर्मनिर्मुक्तो । ध्यातव्यो मोक्षकांक्षिभिः ॥ ११ ॥ संतोषामृत-
निर्मग्नः । शत्रुमित्रसमः सदा ॥ सुखदुःखापरिज्ञाता । रागद्वेषपराङ्मुखः ॥ १२ ॥ प्र-
भाराशिरिव श्रीमान् । सर्वविश्वोपकारकः ॥ सदानंदसुखापूर्णः । स्वात्मा ध्यातव्य ईदृ-
शः ॥१३॥ शुद्धस्फटिकसंकाशः । सर्वज्ञगुणभूषितः ॥ परमात्मा कलायुक्तो । ध्येयः स्वा-
त्मा मनीषिभिः ॥ १४ ॥ पट्टचतुरपीठादि । सर्वं त्यक्त्वा मुमुक्षुभिः ॥ आत्मा ध्यातव्य

जैनभास्करोदयछापखानामां छापी प्रसिद्ध कर्यो छे.

॥ समासोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥

---

॥ अथ श्रीयोगप्रदीपः आरभ्यते ॥

( श्लोकबद्धः )

यावन्न ग्रस्यते रोगै-र्यावन्नाभ्येति ते जरा ॥ यावन्न क्षीयते चायु-स्तावत्कल्याण माचर ॥ १ ॥ कुतोऽस्मि क गमिष्यामि । कुत्रायातोऽस्मि सांप्रतं ॥ को बंधुर्मम कस्याह-मित्यात्मानं विचिंतयेत ॥ २ ॥ पुरुपास्तीर्थमिच्छंति । किं तीर्थैः क्लेशकारणैः ॥ धर्मतीर्थं शरीरस्थं । सर्वतीर्थाधिकं मतं ॥ ३ ॥ इदं तीर्थमिदं तीर्थ-मिति ज्ञात्वा भ्रमंति ये ॥ ज्ञानध्यानविहीनास्ते । सतां तीर्थं स्वमेव हि ॥ ४ ॥ आजन्मोपार्जितं सर्वं । नदयन्न कायसंस्थितः ॥ केनापि दृश्यते नैव । स्वात्मायं पश्यतोदरः ॥ ५ ॥ लोकोर्ध्व·

वतत्वसुधाकुंड—गर्त्तो गांभीर्यमंदिरं ॥ अयं सर्वज्ञसिद्धांतः—पातालं प्रतिभाति मे ॥ १० ॥ सर्वज्योतिष्मतां मान्यो । मध्यस्थपदमाश्रितः ॥ रत्नाकरावृतोऽनंता—लोकः श्रीमान्न जिनागमः ॥ ११ ॥

स्थानं सुमनसामेकं । स्थाणु लोकद्वयोपरि ॥ विनिद्रशाश्वतज्योति—र्भाति गौः परमेष्ठिनः ॥ १२ ॥ श्रीधर्मभूमीश्वरराजधानी । दुष्कर्मपाथोजवनीहिमानी ॥ संदेहसंदोहलताकृपाणी । श्रेयांसि पुष्णातु जिनेंद्रवाणी ॥ १३ ॥ एवं नमस्कृतिध्यान—सिंधुमग्नांतरात्मनः ॥ आमम्नृकुंभवत्सर्व—कर्मग्रंथिर्विलीयते ॥ १४ ॥ श्रीह्रीधृतिकीर्तिबुद्धि—लक्ष्मीलीलाप्रकाशकः ॥ जीयात पंचनमस्कारः । स्वःसाम्राज्यशिवप्रदः ॥ १५ ॥ सिद्धसेनसरस्वत्या । सरस्वत्यापगातटे ॥ श्रीसिद्धचक्रमाहात्म्यं । गीतं श्रीसिद्धपत्तने ॥ १६ ॥ इति श्रीसिद्धसेनाचार्यविरचिते श्रीनमस्कारमाहात्म्येऽष्टमः प्रकाशः समाप्तः ॥ आ ग्रंथ श्रीजामनगरनिवासि पंडित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे पोताना श्री-

॥ अथाष्टमः प्रकाशः प्रारभ्यते ॥

अर्हतामपि मान्यानां । परिक्षीणाष्टकर्मणां ॥ संतः पंचदशभिदां । सिद्धानां न स्मरंति के ॥ १ ॥ निरंजनाश्चिदानंद–रूपा रूपादिवर्जिताः ॥ स्वभावभासलोकाग्राः । सिद्धानंतचतुष्टयाः ॥ २ ॥ साद्यनंतस्थितिजुषो । गुणैकत्रिंशतान्विताः ॥ परमेशाः परात्मानः । सिद्धा मे शरणं सदा ॥ ३ ॥ शरणं मे गणधराः । षट्त्रिंशद्गुणरूपिताः ॥ सर्वसूत्रोपदेष्टारो । वाचकाः शरणं मम ॥ ४ ॥ लीना दशविधे धर्मे । सदा सामायिके स्थिराः ॥ रत्नत्रयधराधीराः । शरणं मेऽस्तु साधवः ॥ ५ ॥ भवस्थितिध्वंसकृतां । शंकृनामिव नांतरं ॥ सूरिवाचकसाधूनां । तत्वतो दृष्टमागमे ॥ ६ ॥ धर्मो मे केवलज्ञानिपणीतः शरणं परं ॥ चराचरस्य जगतो । य आधारः प्रकीर्त्तितः ॥ ७ ॥ ज्ञानदर्शनचारित्र–त्रयीत्रिपथगोर्मिभिः ॥ भुवनत्रयपावित्र्य–करो धर्मो हिमालयः ॥ ८ ॥ नानादृष्टांतहेतूक्ति–विचारभरबंधुरे ॥ स्याद्वादतत्वे लीनोऽहं । भग्नैकांतमतस्थितौ ॥ ९ ॥ न·

॥३९॥ संज्ञारजस्तमःसत्वा-भासोद्भा अतिकोटयः ॥ अनंते भवबासेऽस्मिन् । मादृशाम-
पि जज्ञिरे ॥ ४० ॥ अपि नामसहस्रेण । मूढो हृष्टः स्वदैवते ॥ बदरेणापि हि भवेत् ।
शृगालस्य महो महान् ॥ ४१ ॥ सिद्धानंतगुणत्वेना-नंतनाम्नो जिनेशितुः ॥ निर्गुण-
त्वादनाम्नो वा । नामसंख्यां करोतु कः ॥ ४२ ॥ रजस्तमो बहिः सत्वा-तीतस्य परमे-
ष्टिनः ॥ प्रभावेण तमःपंके । विश्वमेतन्न मज्जति ॥ ४३ ॥ मन्येऽत्र लोकनाथेन । लो-
काग्रं गच्छतार्हता ॥ मुक्तं पापाज्जगत्त्रातुं । पुण्यवद्धामप्यहो ॥ ४४ ॥ पापं नष्टं भवा-
रण्ये । समितिप्रयतात प्रभोः ॥ तद्ध्वंसाय ततः पुण्यं । सर्वं सैन्यमिवान्वगात् ॥ ४५ ॥
पुण्यपापविनिर्मुक्त-स्तेनासौ भगवान् जिनः ॥ लोकाग्रं सौधमारूढो । रमते मुक्तिकां-
तया ॥ ४६ ॥ जिनो दाता जिनो भोक्ता । जिनः सर्वमिदं जगत् ॥ जिनो जयति स-
र्वत्र । यो जिनः सोऽयमेव च ॥ ४७ ॥ इति ध्यानरसावेषात् । तन्मयीभावमीयुषः ॥
परत्रेह च निर्विघ्नं । वृणुते सकलाः श्रियः ॥ ४८ ॥ इति सप्तमः प्रकाशः समाप्तः ॥

नमस्कार· महात्म्यं० ॥ २२ ॥

जिनध्यानवशंवदः ॥ ३० ॥ सुलभास्त्रीजगल्लक्ष्म्यः । सुलभाः सिद्धयोऽष्ट ताः ॥ जिनां
हिनीरजरजः—कणिकास्त्वतिदुर्लभाः ॥ ३१ ॥ अहो कष्टमहो कष्टं । जिनं प्राप्यापि य
ज्जनाः ॥ केचिन्मिथ्यादृशो बाढं । दिनेशमिव कौशिकाः ॥ ३२ ॥ जिन एव महादेवः
। स्वयंभूः पुरुषोत्तमः ॥ परात्मा सुगतोऽलद्यो । भूर्भुवः स्वःसुरेश्वरः ॥ ३३ ॥ त्रैगुण्य
गोचरा संज्ञा । बुद्धेशानादिषु स्थिताः ॥ या लोकोत्तरसत्वोत्था । सा सर्वापि परं जिने
॥ ३४ ॥ रोहणाद्रेरिवादाय । जिनेंद्रात्परमात्मनः ॥ नानाविधानि रत्नानि । विदग्धैर्ध्यवहा·
रिभिः ॥ ३५ ॥ सुवर्णभूषणान्याशु । कृत्वा स्वस्वमतेष्वथ ॥ तत्तद्देवेष्वाहितानि । का
लात्तन्नामतामगुः ॥ ३६ ॥ यद्वा—अमृतानि यथाब्दस्य । तडागादिषु पाततः ॥ तज्जा·
न्मानि जनाः प्राहु—र्नामान्येवं तथार्हतः ॥ ३७ ॥ लोकाग्रमधिरूढस्य । निर्लीनानि हृ·
रादिषु ॥ तेषां सत्कानि गीयंते । लोकैः प्रायो बहिर्मुखैः ॥ ३८ ॥ युग्मं ॥ किंच ता·
न्येव नामानि । विद्धि योगींद्रवल्लभं ॥ यानि लोकोत्तरं सत्वं । ख्यापयंति प्रमाणतः ॥

॥ जिनपादप्रसादानां । लीलायितलवो हि सः ॥ २१ ॥ नृलोके चक्रवर्त्याद्याः । शक्राद्याः सुरसद्मनि ॥ पाताले धरणेंद्राद्या । जयंति जिनभक्तितः ॥ २२ ॥ मुकुटीकृतजैनाज्ञा । रुद्रा एकादशाप्यहो ॥ केचित्तीर्णास्तरिष्यंति । परे संसारसागरं ॥ २३ ॥ वह्निज्वाला इव जले । विषोर्मय इवामृते ॥ जिनसाम्ये विलीयंते । हरादीनां कथाप्रथाः ॥ २४ ॥ तानि जैनेंद्रवृत्तानि । सम्यग् विमृशतां सतां ॥ अत्राप्यानंदमग्नानां । युक्तं मोक्षेऽपि न स्पृहा ॥२५॥ यथा तोयेन शाम्यंति । तृषोऽन्नेन क्षुधो यथा ॥ जिनदर्शनमात्रेण । तथैकेन भवार्त्तयः ॥ २६ ॥ अतिकोटीःसमाः सम्यग् । समाधीन् समुपासतां ॥ नार्हदाज्ञां विना यांति । तथापि शमिनः शिवं ॥ २७ ॥ न दानेनाऽनिदानेन । न शीलैः परिशीलितैः ॥ न शस्याभिस्तपस्याभि-र्जैनानां परं पदं ॥ २८ ॥

भास्वता वासर इव । पूर्णिमेवामृतांशुना ॥ सुभिक्षमिव मेघेन । जिनेनैवाव्ययं महः ॥ २९ ॥ अक्षायत्तं यथा द्यूतं । मेघाधीना यथा कृषिः ॥ तथा शिवपुरे वासो ।

सात्विकमूर्द्धन्यो । वज्रकर्णो महीपतिः ॥ सर्वनाशेऽपि योऽन्यस्मै । न ननाम जिनं वि-
ना ॥ १३ ॥ देवतत्वे गुरुतत्वे । धर्मतत्वे स्थिरात्मनः ॥ वालिनो वानरेंद्रस्य । मह-
नीयमहो महः ॥ १४ ॥ सुलसाया महासत्या । भूयांसमवधारणं ॥ संज्ञात्रयति कल्या-
ण—वार्त्तायां श्रीजगद्गुरुः ॥ १५ ॥ श्रीवीरं वंदितुं यावा—चलितौ दर्दुरावपि ॥ मृ-
त्वा सौधर्मकल्पांत—र्जातौ शक्रसमौ सुरौ ॥ १६ ॥

हासाप्रहासापतिराज्ञियोग्य—दुःकर्मनिर्विण्णमनाः सुरोऽपि ॥ देवाधिदेवप्रतिमां द-
मायां । प्राकाशयत्स्वात्मविमोचनाय ॥ १७ ॥ जिनांह्रिसेवाहतपापताप—स्त्रैलोक्यपङ्कादि-
भरिसत्प्रतापः ॥ श्रीचेटको नाम महाक्ष्मापः । सुरेंद्रचित्तेष्वपि वासमाप ॥ १८ ॥ अ-
ष्टाह्निकापर्व सुपर्वनाथाः । कुर्वंति सर्वे जिनमंदिरेषु ॥ नित्येषु नंदीश्वरमुख्यतीर्था—स्वं-
कारभूतेषु भवाब्धिभूत्यै ॥ १९ ॥ श्रूयते चरमांभोधौ । जिनबिंबाकृतेस्तिमेः ॥ नमस्कृ-
तिपरो मीनो । जातस्मृतिर्दिवं ययौ ॥ २० ॥ नृसुरासुरसाम्राज्यं । भुज्यते यदशंकितं

ष्वपि विदेहेषु । भरतैरावतेषु च ॥ ४ ॥ ते केवलज्ञानविकाशभासुरा । निराकृताष्टादशदोषविप्लवाः ॥ असंख्यवास्तोःपतिवंदितांह्रयः । सत्प्रातिहार्यातिशयैः समाश्रिताः ॥५॥ जगत्त्रयीबोधिदपंचसंयुत–त्रिंशद्गुणालंकृतदेशनागिरः ॥ अनुत्तरस्वर्गिगणैः सदा स्मृता । अनन्यदेयाक्षरमार्गदायिनः ॥ ६ ॥ दुरितं दूरतो याति । साधिव्याधिः प्रणश्यति ॥ दारिद्र्यमुद्रा विद्राति । सम्यग्दृष्टे जिनेश्वरे ॥ ७ ॥

निंद्येन मांसखंडेन । किं तया जीव्हया नृणां ॥ माहात्म्यं या जिनेंद्राणां । न स्तवीति क्षणे क्षणे ॥ ८ ॥ अर्हच्चरित्रमाधुर्य–सुधास्वादाऽनभिज्ञयोः ॥ कर्णयोश्छिद्रयोर्वापि । स्वल्पमप्यस्ति नांतरं ॥ ९ ॥ सर्वातिशयसंपन्नां । ये जिनार्चां न पश्यतः ॥ न ते विलोचने किंतु । वदनालयजालके ॥ १० ॥ अनार्येऽपि वसन् देशे । श्रीमानार्द्रकुमारकः ॥ अर्हतः प्रतिमां दृष्ट्वा । जज्ञे संसारपारगः ॥ ११ ॥ जिनबिंबे क्षणाद् ज्ञात—तत्वः शय्यंभवद्विजः ॥ निषेव्य सुगुरोः पादा—नुत्तमार्थमसाधयत ॥ १२ ॥ अहो

प्रशमो देवगुर्वाज्ञा-पालनं नियमस्तपः ॥ अद्य मे
धेः । श्रुत्वा पंचनमस्कृतिं ॥ ४७ ॥ स्वर्णस्येवाग्निसंतापो । दिष्ट्या मे विपदप्य-
सफलं जन्म । श्रुतपंचनमस्कृतेः ॥ ४९ ॥ एवं शमरसोल्लास-पूर्वं श्रुत्वा
भूत् ॥ यत्क्षणेऽद्य महानर्घ्यं । परमेष्टिमयं महः ॥ ५० ॥ उत्पद्योत्तमदेवेषु
नमस्कृतिं ॥ निहत्य क्लिष्टकर्माणि । सुधीः श्रयति सद्गतिं ॥ ५१ ॥ इति
। विपुलेषु कुलेष्वपि ॥ अंतर्भवाष्टकं सिद्धः । स्यान्नमस्कारभक्तिभाक् ॥ ५२ ॥
षष्टः प्रकाशः समाप्तः ॥ श्रीरस्तु ॥

॥ अथ सप्तमः प्रकाशः प्रारभ्यते ॥

सदा नामाकृतिद्रव्य-भावैस्त्रैलोक्यपावनाः ॥ क्षेत्रे काले च सर्वत्र । शरणं मे जि-
नेश्वराः ॥ १ ॥ तेऽतीताः केवलज्ञानि-प्रमुखाः ऋषभादयः ॥ वर्त्तमाना भविष्यंतः । प-
द्मनाभादयो जिनाः ॥ २ ॥ सीमंधराद्या अर्हंतो । विहरंतोऽथ शाश्वताः ॥ चंद्राननवा-
रिषेण-वर्द्धमानर्षभाश्च ते ॥ ३ ॥ संख्यातास्ते वर्त्तमाना । अनंतातीतभाविनः ॥ सर्वे-

उच्चरेयुः स्वयं सम्यग् । पूर्णां पंचनमस्कृतिं ॥ उत्सर्गतो विधिरयं । ग्लान्या चैते न
चेत्क्षमाः ॥ ३९ ॥ असिआउसेति मंत्रं । तन्नामाद्याक्षरांतिकं ॥ स्मरंतो जंतवोऽनंता ।
मुच्यंतेंतकबंधनात् ॥ ४० ॥ अर्हदरुपाचार्योपा–ध्यायमुन्यादीमाक्षरैः ॥ संधिप्रयोगसं-
श्लिष्टै–रोंकारं वा विदुर्जिनाः ॥ ४१ ॥ व्यक्ता मुक्तामनां शुक्ति—र्मोहस्तंबेरमांकुशः ॥
प्रणीतः प्रणवः प्राज्ञै—र्भवार्तिछेदकर्त्तरी ॥ ४२ ॥ ॐमिति ध्यायतां तत्वं । स्वर्गार्गल-
ककुंचिकं ॥ जीविते मरणे वापि । भुक्तिर्मुक्तिर्महात्मनां ॥ ४३ ॥ सर्वथाप्यक्षमो दैवा–
द्यद्यंते धर्मबांधवात् ॥ शृण्वन् मंत्रममुं चित्ते । धर्मात्मा भावयेदिति ॥ ४४ ॥ अमृतैः
किमहं सिक्तः । सर्वांगं यदिवा कृतः ॥ सर्वानंदमयोऽकांडे । केनाऽप्यनघबंधुना ॥४५॥
परं पुण्यं परं श्रेयः । परं मंगलकारणं ॥ यदिदानीं श्रावितोऽहं । पंचनाथनमस्कृतिं ॥
॥ ४६ ॥ अहो दुर्लभलाभो मे । ममाहो प्रियसंगमः ॥ अहो तत्वप्रकाशो मे । सार-
मुष्टिरहो मम ॥ ४७ ॥ अद्य कष्टानि नष्टानि । दुरितं दूरतो ययौ ॥ प्राप्तं पारं भवांभो-

धर्मबांधवनिश्छद्म । पुनरुक्तं त्वमर्थ्यसे ॥ संसारार्णवबोहित्थे । मा ऽत्र मंत्रे श्लथो भव ॥२९॥
अवश्यं यदसौ भाव-नमस्कारपरं महः ॥ स्वर्गापवर्गसन्मार्गो । दुर्गतिप्रलयानलः
॥ ३० ॥ शिवतातिः सदा सम्यक् । पठितो गुणितः श्रुतः ॥ समनुप्रेक्षितो भव्यै-र्वि·
शिष्याराधनाक्षणे ॥ ३१ ॥ प्रदीप्ते भुवने यद्वत् । शेषं मुक्त्वा गृही सुधीः ॥ गृह्णात्येकं
महारत्न-मापन्निस्तारणक्षमं ॥ ३२ ॥ अकालिकरणोत्पाते । यद्वा कोऽपि महाभटः ॥
अमोघमस्त्रमादत्ते । सारं दंभोलिदंभवत् ॥ ३३ ॥ एवं नाशक्षणे सर्व-श्रुतस्कंधस्य चिंत
ने ॥ प्रायेण न क्षमोजीव-स्तस्मात्तद्गतमानसः ॥ ३४ ॥ द्वादशांगोपनिषदं । परमेष्ठिन
मस्कृतिं ॥ धीरधीः सल्लसल्लेश्यः । कोऽपि स्मरति सात्विकः ॥ ३५ ॥ समुद्रादिव पीयूषं ।
चंदनं मलयादिव ॥ नवनीतं यथा दध्नो । वज्रं वा रोहणादिव ॥ ३६ ॥ आगमादुद्धृ
तं सर्व-सारं कल्याणसेवधिं ॥ परमेष्ठिनमस्कारं । धन्याः केचिदुपासते ॥ ३७ ॥ संवि·
ग्नमानसाः स्पष्ट-गंभीरमधुरस्वराः ॥ योगमुद्राधरकराः । शुचयः कमलासना ॥ ३८ ॥

निरपायं ये । नमस्कारमहारथं ॥ १९ ॥ यदि तावदसौ मंत्रः । शिवं दत्ते सुदुर्लभं ॥ ततस्तदनुषंगोत्थे । गणना का फलांतरे ॥ २० ॥ जपंति ये नमस्कार-लक्षं पूर्णं त्रिशुद्धितः ॥ जिनसंघपूजितैस्तै-स्तीर्थकृत्कर्म बध्यते ॥ २१ ॥ किं तपःश्रुतचारित्रै-श्चिरमाचरितैरपि ॥ सखे यदि नमस्कारे । मनो लीयते न ते ॥ २२ ॥ योऽसंख्यदुःखक्षयकारणस्मृतो । य ऐहिकामुष्मिकसौख्यकामधुक् ॥ यो दुष्षमायामपि कल्पपादपो । मंत्राधिराजः स कथं न जप्यते ॥ २३ ॥ न यद्दीपेन सूर्येण । चंद्रेणाप्यपरेण वा ॥ तमस्तदपि निर्नाम । स्यान्नमस्कारतेजसा ॥ २४ ॥ कृष्णसांबादिवद्भाव-नमस्कारपरो भव ॥ मा वीरपालकन्याव-न्मुधात्मानं विडंबय ॥ २५ ॥ यथा नक्षत्रमालायां । स्वामी पीयूषदीधितिः ॥ तथा भावनमस्कारः । सर्वस्यां पुण्यसंहतौ ॥ २६ ॥ जीवेनाकृतकृत्यानि । विना भावनमस्कृतिं ॥ गृहीतानि विमुक्तानि । द्रव्यलिंगान्यनंतशः ॥ २७ ॥ अष्टावष्टौ शतान्यष्टौ । सहस्राण्यष्टकोटयः ॥ विधिध्याता नमस्काराः । सिद्ध्येतन्भवत्रयं ॥ २८ ॥

॥ ९ ॥ जलस्थलस्मशानादि-दुर्गेष्वन्येष्वपि ध्रुवं ॥ नमस्कारैकचित्ताना-मपायाः प्रो-
त्सवा इव ॥ १० ॥ पुण्यानुबंधिपुण्यो यः । परमेष्ठिनमस्कृतिं ॥ यथाविधि ध्यायति स ।
स्यान्न तिर्यग् न नारकः ॥ ११ ॥ चक्रिविष्णुप्रतिविष्णु-बलाद्यैश्वर्यसंपदः ॥ नमस्कारप्र
भावाब्धे-स्तटमुक्तादिसन्निभाः ॥ १२ ॥ वश्यविद्वेषणक्षोभ-स्तंभमोहादिकर्मसु ॥ यथा-
विधि प्रयुक्तोऽयं । मंत्रः सिद्धिं प्रयच्छति ॥ १३ ॥ छेदं परविद्यानां । निमेषाद्विकरो
त्यसौ ॥ क्षुद्रात्मनां परावृत्ति-र्वेधं च विधिना स्मृतः ॥ १४ ॥ नृर्भुवःस्वस्त्रयीरंगे । यः
कोऽप्यतिशयः किल ॥ द्रव्यक्षेत्रकालभावा-पेक्षया चित्रकारकः ॥ १५ ॥ कश्चित्कथं-
चित्कस्यापि । श्रूयते दृश्यतेंगिनः ॥ स सर्वोऽपि नमस्कारा-राधमाहात्म्यमंत्रतः ॥१६॥
तिर्यग्लोके चंद्रमुख्याः । पाताले चमरादयः ॥ सौधर्मादिषु शक्राद्या-स्तदग्रेऽपि च ये
सुराः ॥ १७ ॥ तेषां सर्वाः श्रियः पंच-परमेष्ठिमरुत्तरोः ॥ अंकुरा वा पल्लवा वा । क-
लिका वा सुमानि वा ॥ १८ ॥ ते गतास्ते गमिष्यंति । ते गच्छंति परं पदं ॥ आस्तां

॥ अथ षष्टः प्रकाशः प्रारभ्यते ॥

एष पंचनमस्कारः । सर्वपापप्रणाशनः ॥ मंगलानां च सर्वेषां । मुख्यं भवति मंगलं ॥ १ ॥ समितिप्रयतः सम्यक् । गुप्तित्रयपवित्रितः ॥ अमुं पंचनमस्कारं । यः स्मरत्युपवैणवं ॥ २ ॥ शत्रुर्मित्रायते चित्रं । विषमप्यमृतायते ॥ अशरण्याप्यरण्यानी । तस्य वासगृहायते ॥ ३ ॥ ग्रहाः सानुग्रहास्तस्य । तस्कराश्च यशस्कराः ॥ समस्तं दुर्निमित्ताद्य—मपि स्वस्तिफलेग्रहि ॥ ४ ॥ न मंत्रतंत्रयंत्राद्या—स्तंप्रति प्रन्नविष्णवः ॥ सर्वापि शाकिनी द्रोहः—जननी जननीव न ॥ ५ ॥ व्यालास्तस्य मृणालंति । गुंजापुंजंति वह्नयः ॥ मृगेंद्रा मृगधूर्तंति । मृगंति च मतंगजाः ॥ ६ ॥ तस्य रक्षोऽपि रक्षायै । भूतवर्गोऽपि नूतये ॥ प्रेतोऽपि प्रीतये प्राय—श्चेटत्वायैव चेटकः ॥ ७ ॥ धनाय तस्य प्रधनं । रोगो भोगाय जायते ॥ विपत्तिरपि संपत्त्यै । सर्वं दुःखं सुखायते ॥ ८ ॥ कुलकं ॥

बंधनैर्मुच्यते सर्वैः । सर्पैश्चंदनवज्ञानः ॥ श्रुत्वा धीरं ध्वनिं पंच—नमस्कारगरुत्मनः

य एभिरक्षितः सम्यग् । सजनेऽपि स एककः ॥ जनाऽपूर्णेऽपि नगरे । यथा वैदेशि-
कः पुमान् ॥ ३४ ॥ एभिस्तु सहितो योगी । सुधैकाकित्वमश्नुते ॥ वंढः शठश्चरश्चौरः ।
किमु भ्राम्यति नैककः ॥ ३५ ॥ पुण्यपापक्षयान्मुक्ते । केवले परमात्मनि ॥ अनाहार
त्ववन्नित्यं । सत्यमैक्यं प्रतिष्ठितं ॥ ३६ ॥ यद्वा श्रुतेऽत्र नाऽनुज्ञा । निषेधो वाऽस्ति स-
र्वथा ॥ सम्यगायव्ययौ ज्ञात्वा । यतंते यतिसत्तमाः ॥ ३७ ॥ हूयते न दीयते न । न
तप्यते न जप्यते ॥ निष्क्रियैः साधुभिरहो । साध्यते परमं पदं ॥ ३८ ॥ हृद्गीतैर
पि सुधा–रसैर्मंदारसौरभैः ॥ दिव्यतल्पसुखस्पर्शैः । खुरीकृपैर्न ये हृताः ॥ ३९ ॥ तत्किं
ते तरवो यद्वा । शिशवो यदिवा मृगाः ॥ न ते न ते न ते किंतु । मुनयस्ते निरंज-
नाः ॥ ४० ॥ ॐकारोऽयं भणत्येवं । त्रिरेखो बिंदुशेखरः ॥ गुप्तित्रये लब्धरेखाः । स-
हृत्ताः स्युर्महर्षयः ॥ ४१ ॥ नयभेदजीवरक्षा–सुधाकुंडसमाकृतिः ॥ दत्तां नवाक्षरीयं मे ।
धर्मं भावं नवं नवं ॥ ४२ ॥ इति पंचमः प्रकाशः संपूर्णः ॥ श्रीरस्तु ॥

धूर्त्तवद् द्वयं ॥ त्रयो रक्षंति विश्वासं । वृंदं नरवरायते ॥ २४ ॥ जिनप्रत्येकबुद्धादि–दृष्टांतान्नैकतां श्रयेत् ॥ न चर्मचक्षुषा युक्तं । स्पर्द्धितुं ज्ञानदृष्टिभिः ॥ २५ ॥ चातुर्गतिकसंसारे । भ्राम्यतां सर्वजन्मिनां ॥ पुण्यपापसहायत्वा—न्नैकत्वं घटतेऽथवा ॥ २६ ॥ संज्ञाकुलेश्याविकथा—श्चर्चिका इव चापलं ॥ यस्यांतर्धाम कुर्वंति । स एकाकी कथं भवेत् ॥ २७ ॥ शाकिनीवदविरति–रथानार्या प्रिया सदा ॥ ग्रासाय यतते यस्य । स एकाकी कथं भवेत् ॥ २८ ॥ पंचाग्निवदसंतुष्टं । यस्येंद्रियकुटुंबकं ॥ देहं दहत्यसंदेहं । स एकाकी कथं भवेत् ॥ २९ ॥ क्षीरं क्षीरं नीरं नीरं । दीपो दीपं सुधा सुधां ॥ यथा संगत्य लभते । तथैकत्वं मुनिर्मुनिं ॥ ३० ॥ दायादा इव दुर्दांताः । कषायाः क्षणमप्यहो ॥ यद्विग्रहं न मुंचंति । कथं तस्यैकतासुखं ॥ ३१ ॥ स्वमनोवाग्तनुभ्रानाः । कुव्यापाराः कुपुत्रवत ॥ भ्रंशाय यस्य यास्यंति । कथं तस्यैकतासुखं ॥ ३२ ॥ यस्य प्रमादमिथ्यात्व–रागाद्याश्छलवीक्षिणः ॥ कुप्रातिवेश्मिकीयंते । कथं तस्यैकतासुखं ॥ ३३ ॥

त—तत्त्वलीनांतरात्मनः ॥ ऐक्यं न लक्षमध्येऽपि । निर्ममस्य विनश्यति ॥ १५ ॥ साम्यामृतोर्मितृप्तानां । सारासारविवेकिनां ॥ साधूनां भावसिद्धानां । स्वार्थेऽपि काथवा क्षतिः ॥ १६ ॥ मनःस्थैर्यान्निश्चलानां । वृक्षादिवदकर्मणां ॥ वृंदं ऋपीणामेकत्र । भावनावह्निमंडपः ॥ १७ ॥ मनसा कर्मणा वाचा । चित्रालिखितसैन्यवत ॥ मुनीनां निर्विकाराणां । बहुत्वेऽप्यरतिः कुतः ॥ १८ ॥ निर्जीवेष्विव चैतन्यं । माहसं कातरेष्विव ॥ बहुष्वपि मुनींद्रेषु । कलहो न मनागपि ॥ १९ ॥

पंचषैरपि यो ग्लानिं । मुग्धधीर्गणयिष्यति ॥ एकत्रानंतसिद्धेभ्यः । स कथं स्पृहयिष्यति ॥ २० ॥ रागाद्यपायविषमे । सन्मार्गे चरतां सतां ॥ रत्नत्रयजुषामैक्यं । कुशलाय न जायते ॥ २१ ॥ नैकस्य सुकृतोल्लासो । नैकस्यार्थोऽपि तादृशः ॥ नैकस्य कामसंप्राप्ति—नैंको मोक्षाय कल्पते ॥ २२ ॥ श्लेष्मणे शर्करादानं । सज्वरे स्निग्धभोजनं ॥ एकाकित्वमगीतार्थे । यतावंचति नौचितीं ॥ २३ ॥ एकश्चौरायते प्रायः । शंक्यते

सा समं ॥ मूलोत्तरगुणग्रामा–रामेषु भगवान्मुनिः ॥ ५ ॥ एकत्वं यदिदं साधौ । संवि-
ग्ने श्रुतपारगे ॥ तत्साक्षाद्दक्षिणावर्त्त–शंखे सिद्धसरिज्जलं ॥ ६ ॥ एको न क्रोधविधुरो ।
नैको मानं तनोति वा ॥ एको न दंभसंरंभी । तृष्णामुष्णाति नैककं ॥७॥ एकत्वतत्व-
निर्व्यूढ–सारा राजर्षिकुंजराः ॥ ययुः प्रत्येकबुद्धाः श्री–नेमिप्रभृतयः शिवं ॥ ८ ॥ सर्व-
था ज्ञाततत्वानां । सदा संविग्नचेतसां ॥ सतामेकाकिता सम्यक् । समतामृतसारणिः ॥
॥ ए ॥ ववदैदंयुगीनौ तु । द्वौ द्वौ संघाटकस्थितौ ॥ स्वार्थसंसाधकौ स्यातां । व्रतिनौ
वशिनौ यदि ॥ १० ॥ वसंङ्घयेत्यवतर्क्य–मेतद्यं यद्द्वयोर्द्वयोः ॥ वचोवक्रोवपुर्वृत्त्या । व-
शिनोर्व्रतिनोः शिवं ॥ ११ ॥ निःशंकमैक्यं जनयो–र्वशित्वाद्रुभयोरपि ॥ एकस्यापि स-
ह्रत्वं । दुरंतमवशात्मनः ॥ १२ ॥ नेत्रवत्समसंकोच–विस्तारस्वप्नजागरौ ॥ द्वौ दर्शना-
य कल्प्येते । नैकः संपूर्णकृत्यकृत् ॥ १३ ॥ एको विडंबनापात्र–मेकः स्वार्थाय न क्ष-
मः ॥ एकस्य न हि विश्वासो । लोके लोकोत्तरेऽपि वा ॥ १४ ॥ भावनाध्याननिर्णी-

भाया व्यानशे दिशः ॥ अनित्यैकांतदृग्नित्यै—कांतदृग्जयजन्मनः ॥ ५ ॥ या सप्तनय-
वैदग्धी । या परागमचातुरी ॥ या द्वादशांगीसूत्राप्तिः । सोपाध्यायादृते कुतः ॥ ६ ॥
एंकारोऽत्र दिशत्येवं । त्रिरेखोंबरशेखरः ॥ विनयश्रुतशीलाढ्या । महानंदाय जाग्रति ॥
॥ ७ ॥ सप्तरज्जूर्ध्वलोकाध्वो—द्योतदीपमहोज्ज्वला ॥ सप्ताक्षरी चतुर्थी मे । ह्रियाद्व्यस-
नसप्तकं ॥ ८ ॥ इति चतुर्थः प्रकाशः समाप्तः ॥ श्रीरस्तु ॥

॥ अथ पंचमः प्रकाशः प्रारभ्यते ॥

न व्याधिर्न च दौर्विध्यं । न वियोगः प्रियैः समं ॥ न दुर्भगत्वं नोद्वेगः । साधू-
पास्तिकृतां नृणां ॥ १ ॥ न चतुर्गा दुःखतमो । नराणामांध्यहेतवे ॥ साधुध्यानामृतर-
सां—जनलिप्तमनोदृशां ॥ २ ॥ मोत्कारः सर्वसंगानां । मोघ्याणोंतरवैरिणां ॥ मोदंते मु-
नयः कामं । मोदक्लक्षीकृताद्भिताः ॥ ३ ॥ लोभद्रुमनदीवेगा । लोकोत्तरचरित्रिणः ॥
लोकोत्तमास्तृतीयास्ते । लोपं तन्वंतु पाप्मनां ॥ ४ ॥ एकांते रमते स्वैरं । मृगेण मन-

या काचिदनघा सिद्धि–र्या काचिल्लब्धिरुज्वला ॥ वृणुते सा स्वयं सूरिं । भ्रमरीव सरोरुहं ॥ ६ ॥ एंकारोऽत्र दिशत्येवं । त्रिरेखो व्योमचूलिकः ॥ त्रिवर्गसमतायुक्ताः । स्युः शिरोमणयः सतां ॥ ७ ॥ धर्मार्थकामा यदिवा । मित्रोदासीनशत्रवः ॥ यद्वा रागद्वेषमोहा–स्त्रीवर्गः समुदाहृतः ॥ ८ ॥ सप्ततत्वांबुजवनी–सप्तसप्तिविभानिभा ॥ सप्ताक्षरी तृतीयेऽयं । सप्तावनितमो ह्रियात् ॥ ९ ॥ इति तृतीयः प्रकाशः समाप्तः ॥ श्रीरस्तु ॥

॥ अथ चतुर्थः प्रकाशः प्रारभ्यते ॥

न खंड्यते कुपाखंडै–र्न त्रिदंड्या विमंड्यते ॥ न दंड्यते चंडिमाद्यै–रुपाध्यायं श्रयन् सुधीः ॥ १ ॥ सोमाश्रीह्रीधृतिब्राह्म्यो । मोचलंतु तदंगतः ॥ उपास्ते य उपाध्यायं । सिद्धादेशो महानिति ॥ २ ॥ उदयो मूर्त्तिमान् सम्यग् । दृष्टीनामुत्सवो धियां ॥ उत्तमानां य उत्साह । उपाध्यायः स उच्यते ॥ ३ ॥ वचोवपुर्वयोवृद्धं । वर्जितं वधवार्त्तया ॥ वशगं वेदविद्याना–मुपाध्यायं महस्व तं ॥ ४ ॥ झात्कारो वाचकश्लोक–ज्ञं-

शत्येवं । त्रिरेखः शून्यमालितः ॥ रत्नत्रयमयो ह्यात्मा । याति शून्यस्वभावतां ॥ १९ ॥ शुभाशुभैः परिक्षीणैः । कर्मभिः केवलस्य या ॥ चिद्रूपतात्मनः सिद्धौ । सा हि शून्यस्वभावता ॥ २० ॥ पंचविग्रहसंहंत्री । पंचमीगतिदार्शिनी ॥ रक्ष्यात्पंचाक्षरीयं वः । पंचत्वादिप्रपंचतः ॥ २१ ॥ इति द्वितीयः प्रकाशः समाप्तः ॥ श्रीरस्तु ॥

॥ अथ तृतीयः प्रकाशः प्रारभ्यते ॥

न तमो न रजस्तेषु । न च सत्वं बहिर्मुखं ॥ न मनोवाक्वपुःकष्टं । यैराचार्याः श्रिताः ॥ १ ॥ मोहपाशैर्महच्चित्रं । मोटितानपि जन्मिनः ॥ मोचयत्येव भगवान्नाचार्यः केशिदेववत् ॥ २ ॥ आचारा यत्र रुचिरा । आगमाः शिवसंगमाः ॥ आयोपायागतापाया । आचार्यं तं विदुर्बुधाः ॥ ३ ॥ यथास्थितार्थप्रथको । यतमानो यमादिषु ॥ यजमानः स्वात्मयज्ञं । यतींद्रो मे सदा गतिः ॥ ४ ॥ रिपौ मित्रे सुखे दुःखे । रिष्टे शिष्टे शिवे भवे ॥ रैक्थ्ये नैःस्व्ये समः सम्यग् । स्वामी संयमिनां मतः ॥ ५ ॥

समं निश्चलविस्तारौ । पक्षाविव विहंगमं ॥ ९ ॥ युक्तौ धुर्याविवोत्सर्गा-पवादौ वृषन्ना-
वुभौ ॥ शीलांगरथमारूढं । क्षणात्प्रापयतः शिवं ॥ १० ॥ निश्चयव्यवहारौ द्वौ । सूर्य-
चंद्रमसाविव ॥ इहामुत्र दिवारात्रौ । सदोद्योताय जाग्रतः ॥ ११ ॥

अंतस्तत्वं मनःशुद्धि-र्बहिस्तत्वं च संयमः ॥ कैवल्यं द्वयसंयोगे । तस्माद् द्वितयन्ना-
ग्नव ॥ १२ ॥ नैकचक्रो रथो याति । नैकपक्षो विहंगमः ॥ नैवमेकांतमार्गस्थो । नरो
निर्वाणमृच्छति ॥ १३ ॥ दशकांतर्नवास्तित्व-न्यायादेकांतमप्यहो ॥ अनेकांतसमुद्रेऽपि।
प्रलीनं सिंधुपूरवत् ॥ १४ ॥ एकांते तु न लीयंते । तुच्छेऽनेकांतसंपदः ॥ न दरिद्रगृहे
मांति । सार्वभौमसमृद्धयः ॥ १५ ॥ एकांताभासो यः क्वापि । सोऽनेकांतप्रसत्तिजः ॥
वर्त्तितैलादिसामग्री-जन्मानं पश्य दीपकं ॥ १६ ॥ सत्वासत्वनित्यानित्य-धर्माधर्मादयो
गुणाः ॥ एवं द्वये द्वये श्लिष्टाः । सतां सिद्धिप्रदर्शिनः ॥ १७ ॥ तदेकांतग्रहावेश-मष्ट-
धीगुणमंत्रतः ॥ मुक्त्वा यतध्वं तत्वाय । सिद्धत्वे यदि कामना ॥ १८ ॥ एंकारोऽत्र दि-

॥ अथ द्वितीयः प्रकाशः प्रारभ्यते ॥

न जातिर्न मृतिस्तत्र । न भयं न पराभवः ॥ न जातु क्लेशलेशोऽपि । यत्र सिद्धाः प्रतिष्ठिताः ॥ १ ॥ मोचास्तंभ इवासारः । संसारः क्वैष सर्वथा ॥ क्व च लोकाग्रगं लोक-सारत्वात्सिद्धवैभवं ॥ २ ॥ सितधर्माः सितलेश्याः । सितध्यानाः सिताश्रयाः ॥ मिलश्लोकाश्च ये लोके । सिद्धास्ते संतु सिद्धये ॥ ३ ॥ सतां स्वर्गोदयोदाने । धाने दुर्गतिपाततः ॥ मन्येऽहं युगपद्भक्तिं । सिद्धानां हेतिवर्णतः ॥ ४ ॥ यदिवा—द्विवर्णं सिद्धशब्देऽत्र । संयोगो वर्णयोर्द्वयोः ॥ सकर्णोऽयं सकर्णानां । फलं वक्तीति योगजं ॥ ५ ॥ परस्परं कोऽपि योगः । क्रियाज्ञानविशेषयोः ॥ स्त्रीपुंसयोरिवानंदं । प्रसूते परमात्मजं ॥ ६ ॥ भाग्यं पंगूपमं पुंसां । व्यवसायोंधसन्निभः ॥ यथा सिद्धिस्तयोर्योगे । तथा ज्ञानचरित्रयोः ॥ ७ ॥ खड्गखेटकवद् ज्ञान—चारित्रद्वितयं वहन् ॥ वीरो दर्शनसन्नाहः । कलेः पारं प्रयाति वै ॥ ८ ॥ नयतोऽभीप्सितं स्थानं । प्राणिनं मत्तप-शमौ ॥

निबिडं यैर्विडंबिताः ॥ १५॥ हंसवत्श्लिष्टयोः क्षीर–नीरयोर्जीवकर्मणोः ॥ विवेचनं यः कुरुते । स एको भगवान् जिनः ॥१६॥ स्मृध्यै प्रभृति युग्धातु–वर्णवत्सहजस्थितिः ॥ कर्मात्मश्लेषो ह्यन्येषां । डुर्लंघ्यो महतामपि ॥ १७ ॥ हंतात्मकर्मणोर्बीजां–कुरवत कुर्कुटांडवत् ॥ मिथः संहतयोः पूर्वा–पर्यं नास्त्येव नान्यथा ॥ १८ ॥ तायिनः कर्मपाशेभ्य–स्तारका मज्जतां भवेत् ॥ तात्विकानामधीशा ये । तान् जिनान् प्रणिदध्महे ॥ १९ ॥ एंकारोऽयं दिशत्येवं । त्रिरेखः शून्यचूलिकः ॥ तत्वत्रयपवित्रात्मा । लभते पदमव्ययं ॥ २० ॥ सशिरस्त्रिसरलरेखं । खचूलमित्यक्षरं सदा ब्रूते ॥ भवति त्रिशुध्धिसरल–स्त्रिभुवनमुकुटस्त्रिकालेऽपि ॥ २१ ॥ सप्तक्षेत्रीव सफला । सप्तक्षेत्रीव शाश्वती ॥ सप्ताक्षरीयं प्रथमा । सप्त हंतु भयानि मे ॥ २२ ॥ इति श्रीसिध्धसेनाचार्यविरचिते श्रीनमस्कारमाहात्म्ये प्रथमः प्रकाशः समाप्तः ॥ श्रीरस्तु ॥

---

नतः ॥ मान्यो मे यन्मया लेभे । जिनाज्ञास्यैव संश्रयात् ॥ ६ ॥ भवतु नमोऽर्हत् सि-
द्धा-चार्योपाध्यायसर्वसाधुभ्यः ॥ श्रीजिनशासनमनुज-क्षेत्रांतः पंचमेरुभ्यः ॥ ७ ॥ ये
नमो अरिहंताणं । नमो सिद्धाणमित्यथ ॥ नमो आयरियाणं चो-वज्झायाणं नमोऽग्रगं
॥ ८ ॥ नमो लोए सव्वसाहू-णमेवं पदपंचकं ॥ स्मरंति भावतो भव्याः । कुतस्तेषां भ-
वभ्रमः ॥ ९ ॥ वर्णाः संतु श्रिये पंच-परमेष्ठिनमस्कृतेः ॥ पंचत्रिंशज्जिनवचो-ऽतिश
या इव रूपिणः ॥ १० ॥ तेषामनाद्यनंतानां । श्लोकैस्त्रैलोक्यपावनैः ॥ वितनोत्यात्मनः
शुद्धिं । सिद्धसेनसरस्वतीः ॥ ११ ॥ नरनाथा वशे तेषां । नतास्तेभ्यः सुरेश्वराः ॥ न
ते बिभ्यति नागेभ्यो । येऽर्हंतं शरणं श्रिताः ॥ १२ ॥ मोदस्तंभति न द्रोही । मोदते
स निरंतरं ॥ मोक्षंगमी सोऽचिरेण । भव्यो योऽर्हंतमर्हति ॥ १३ ॥

अर्हंति यं केवलिनः । प्रादक्षिण्येन कर्मणा ॥ अनंतगुणरूपस्य । माहात्म्यं तस्य
वेदकः ॥ १४ ॥ रिपवो रागदोषाद्या । जिनेनैकेन ते हताः ॥ लोकेशकेशवेशाद्या ।

॥ श्रीजिनाय नमः ॥

## ॥ अथ श्रीनमस्कारमाहात्म्यं प्रारभ्यते ॥

( कर्त्ता—श्रीसिद्धसेनसूरिः )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

नमोऽस्तु गुरवे कल्प–तरवे जगतामपि ॥ वृषभस्वामिने मुक्ति–मृगनेत्रैककामिने ॥ १ ॥ तपोज्ञानधनेशाय । महेंद्रप्रणतांह्रये ॥ सिद्धसेनाधिनाथाय । श्रीशांतिस्वामिने नमः ॥ २ ॥ नमोऽस्तु श्रीसुव्रताया–नंतायारिष्टनेमिने ॥ श्रीमत्पार्श्वाय वीराय । सर्वार्हद्भ्यो नमोनमः ॥ ३ ॥ देव्योऽम्बुसांबिकाब्राह्मी–पद्माप्रत्यंगिरादयः ॥ मातरो मे प्रयच्छंतु । पुरुषार्थपरंपरां ॥ ४ ॥ जीयात् पुण्यांगजननी । पालनी शोधनी च मे ॥ हंसविश्रामकमल–श्रीः सदेष्टनमस्कृतिः ॥ ५ ॥ कटुकोऽप्येष संसारो । जन्मसंस्थितिदा-

॥ श्रीजिनाय नमः ॥

# ॥ श्रीनमस्कारमाहात्म्य—योगप्रदीप ॥

( कर्ता श्रीसिद्धसेनसूरिः )

छपावी प्रसिद्ध करनार

पंडित श्रावक हीरालाल हंसराज. ( जामनगरवाळा )

वीरसंवत्—२४३८. विक्रमसंवत्—१९६८. सने १९११

किं रु. ०-१२-०

श्री जिनदत्तसूरिप्राचीन पुस्तकोद्धार फन्ड ( सुरत ) ग्रन्थाङ्क—५९

॥ श्रीजिनाय नमः ॥

श्रीखरतरगच्छालंकार जिनभद्रसूरि शिष्य—सिद्धान्तरुचि वाचकानां शिष्यमुनिसोमगणि विरचितं—

# श्री रणसिंह चरित्रम् ।

( पद्यं )

जैनाचार्य श्रीमज्जिन कृपाचन्द्रसूरीश्वराणां शिष्यरत्नोपाध्यायमुनिसुखसागरोपदेशेन कलकत्ता निवासी बाबू हीरालाल खारड विहितेन द्रव्य साहाय्येन प्रकाशितम् ।

प्रकाशकः—श्रीजिनदत्तसूरि ज्ञानभंडार मु० सुरत

सं० २००४ भेट प्र० ५००

॥ श्रीजिनाय नमः ॥

# ॥ श्रीनमस्कारमाहात्म्य—योगप्रदीप ॥

( कर्ता श्रीसिद्धसेनसूरिः )

छपावी प्रसिद्ध करनार

पंडित श्रावक हीरालाल हंसराज. ( जामनगरवाळा )

वीरसंवत्—२४३७. विक्रमसंवत्—१९६७. सने १९११

किं रु. ०–१२–०

श्री जिनदत्तसूरिप्राचीन पुस्तकोद्धार फन्ड ( सुरत ) ग्रन्थाङ्क—५९

॥ श्रीजिनाय नमः ॥

श्रीखरतरगच्छालंकार जिनभद्रसूरि शिष्य—सिद्धान्तरुचि वाचकानां शिष्यमुनिसोमगणि विरचितं—

# श्री रणसिंह चरित्रम् ।

( पद्यं )

जैनाचार्य श्रीमज्जिन कृपाचन्द्रसूरीश्वराणां शिष्यरत्नोपाध्यायमुनिसुखसागरोपदेशेन कलकत्ता निवासी बाबू हीरालाल खारड विहितेन द्रव्य साहाय्येन प्रकाशितम् ।

प्रकाशक—श्रीजिनदत्तसूरि ज्ञानभंडार मु० सुरत

प्र० ५००

भेट

सं० २००४

श्री जिनदत्तसूरि प्राचीन पुस्तकोद्धार फण्ड ( सुरत ) ग्रन्थाङ्क—५९

॥ श्रीजिनाय नमः ॥

श्रीखरतरगच्छालंकार जिनभद्रसूरि शिष्य—सिद्धान्तरुचि वाचकानां शिष्यमुनिसोमगणि विरचितं—

# श्री रणसिंह चरित्रम् ।

( पद्यं )

जैनाचार्य श्रीमज्जिन कृपाचन्द्रसूरीश्वराणां शिष्यरत्नोपाध्यायमुनिसुखसागरोपदेशेन
कलकत्ता निवासी बाबू हीरालाल खारड विहितेन द्रव्य साहाय्येन प्रकाशितम् ।

प्रकाशक—श्रीजिनदत्तसूरि ज्ञानभंडार मु० सुरत

सं० २००८ भेट प्र० ५००

# दो शब्द—

प्रस्तुत "रणसिंह चरित्र" नामक ग्रन्थमें दान, शील, तप और भावका सुचारुरूपसे प्रभावोत्पादक वर्णन है, जो आपके करकमलोंमें विद्यमान है। खरतरगच्छालङ्कार अनेक ज्ञानभण्डार संस्थापक श्रीजिनभद्रसूरिजीके शिष्य सिद्धान्तरुचि, उपाध्यायके शिष्य मुनिसोमगणिने प्रस्तुत ग्रंथका सं० १५४० में निर्माण किया है, इस ग्रंथके अवलोकनसे ही आपलोगोंकी स्वयं ग्रन्थकार की अपूर्व विद्वत्ताका सुपरिचय मिल जायगा।

मूलग्रंथकी एक प्रति बीकानेरसे श्री अगरचन्दजी नाहटाने भेजी थी, उसीके आधारपर इस ग्रन्थका सम्पादन किया गया है।

ग्रन्थ प्रकाशन कार्य कलकत्ता निवासी बाबू हीरालालजी खरडकी दी हुई आर्थिक सहायतासे हो रहा है, आशा है सज्जनगण वाचन श्रवण कर ज्ञानकी अभिवृद्धि करें।

सं० २००४ पौ० शु० ११
कलकत्ता।

मुनि मंगल सागर

कलकत्ता निवासी—श्रीयुत् हीरालालजी खारड



॥ नमो जिनाय ॥

श्रीजिनभद्रसूरिशिष्य-सिद्धान्तरुचि—वाचकाना, शिष्य मुनिसोमगणि विरचितं—

# * श्रीरणसिंह चरित्रम् *

[illegible]—दिनकरकिरणनिरस्तमोहबलम्। प्रकटित भुवनोदरगत, जीवाजीवादि भावौघम्॥ १॥

तं जगदीश्वरमेकं, श्रीवीरं सकलकर्मनिर्मुक्तम्। प्रणिपत्यातिशययुतं, वक्ष्ये रणसिंहचरितलवम्॥ २॥

जम्बूद्वीपाभिधे द्वीपे, जम्बूवृक्षोपलक्षिते। अस्ति श्रीभरतक्षेत्रं, दक्षिणादिग्विभूषणम्॥ ३॥

[illegible]नगरं, विजयाख्यं पुरोत्तमम्। वसुन्धराशिरोरत्नं, स्ववत्सर्वतोऽद्भुतम्॥ ४॥

यत्र श्रीमज्जिनेन्द्राणां, प्रासादाः संपदप्रदाः। क्षेत्रीणां मोक्षसौख्यानि, गच्छन्तो ध्वजहस्ततः॥ ५॥

[illegible] गतशोका, —[illegible]काः सद्धर्मकर्मसु। दानिनो मानिनो भोग, भोगिनो योगिनोऽनिशम्॥ ६॥

सरसाश्छायया युक्ता, विलसत्फलशालिताः । सदा रामा इवाऽऽरामा, राजन्ते रतिरायकाः ॥ ७ ॥
महेभ्याः स्वर्गिरीयन्ते, यत्र दीप्यत्सुदर्शनाः । कल्याणकमलाभाजः सन्नन्दनमनोरमाः ॥ ८ ॥
विपक्षचटकश्रेणीन्, यस्यासि श्येनकोऽचरत् । दीप्यमानः सुतीक्ष्णास्यो, न्यस्खलद्रमनो भुवि ॥ ९ ॥
राजा विजयसेनाख्यो, राजेवात्र व्यराजतः । सच्चकोराक्षिपीयूषं, दक्षजाति प्रमोदकः ॥ १० ॥
तस्यासीदग्रमहिषी, नाम्ना श्रीअजिता जिता । यया सौभाग्यभङ्गीभिः, सावित्री-पार्वतीन्दिराः ॥ ११ ॥
अपरा विजयादेवी, देवीव विजयालया । यां वीक्ष्यानङ्गकान्ताऽपि रूपगर्वं जहात्यहो ! ॥ १२ ॥
संसारसारसौख्यानि, भुजन्ती भूभुजा समम् । लेभे क्रमेण सा गर्भं, शालिः सद्रातनैरदैः ॥ १३ ॥
गतेषु नवमासेषु, सार्द्धाष्टासु दिनेषु च । प्रासूत सा सुतं दिव्यं, पूर्वा सूर्यमिवोत्तमम् ॥ १४ ॥
तदा किश्चाजिता देव्या, पापिष्टा सूतकारिणी । आदिष्टा पूर्वमेवेति, संचार्य मृतमर्भकम् ॥ १५ ॥
तत्सुतो मार्ययो, जीवंस्तथैव विदधे तया । ततो दुष्टाशया देवी, तं बालं दासिपार्श्वतः ॥ १६ ॥
सुण्डे तृणादिभिच्छिन्ने, बालं निक्षिप्य निर्दयम् । दूरतस्त्याजयामास, यथाऽऽर्त्तो म्रियते स्वयम् ॥ १७ ॥

ततश्च विजयाद्दत्ता, सा विश्राम—विधायिनी । संमानिता धनै रत्नैः कनकैः स्तकारिणी ॥ १८ ॥
तथापि तुच्छचित्तत्वा-द्यया स्त्रीस्वभावतः । क्लेसे च तया-ही एवं, गूढं स्त्रीचरित्तं यतः ॥ १९ ॥
“गयचरियं गहचरियं, ताराचरियं च राहुचरियं च। जाणंति बुद्धिमंता, इत्थीचरियं न जाणंति ॥ २० ॥”
इतश्च विजयपुर,-सन्ने सुग्रामनामनि । यत्र वास्तव्यलोकोऽस्ति, विभूत्या निर्जितालकः ॥ २१ ॥
शालिग्रामस्य दधिक्षीर,—मस्तकैवोत्थधान्यकैः । यो न्यक्करोति सद्रङ्ग;-वामिलोककदम्बकान् ॥ २२ ॥युग्मम्॥
तृणार्थमन्यदा गच्छन्, करुणाक्रान्तमानसः । तत् ग्रामवासिकौटुम्बी, सुन्दरः सुन्दरा— कृतिः ॥ २३ ॥
रमन्तं विजनं बालं, तृणवल्लितलस्थितम् । सुन्दरं सुभगाकारं, दीप्तिमन्तं ददर्श सः ॥ २४ ॥
यथा महानिधिं निःस्वः, संवीक्ष्य करसंपुटे । हृष्ट तुष्टश्च जग्राह, तद्वदेनं स्तनन्धयम् ॥ २५ ॥

यत उक्तम्—

अघटित-घटितानि घटयति, सुघटित-घटितानि जर्जरी कुरुते।
विधिरेव तानि घटयति, यानि पुमान्नैव चिन्तयति ॥ २६ ॥

तमादाय निजागारं, समागत्य स सुन्दरः। प्रियाय अर्पयामास, मनोहरमपि स्वयम् ॥ २७ ॥
तामुक्तवांश्चापुत्राभ्यां, वनदेवतया ददे। कल्पद्रुमाङ्कुर इव, पालनीयस्त्वया प्रिये ! ॥ २८ ॥
ताभ्यां हर्षप्रकर्षाभ्यां, चक्रे जन्ममहोत्सवम्। रणसिंहाभिधानं च, तस्य कल्याणवासरे ॥ २९ ॥
धात्रीभिर्लाल्यमानोऽसौ, वर्द्धमानः पदे पदे। कलासु कुशलो जज्ञे, शस्त्रे शास्त्रे विशारदः ॥ ३० ॥
सोऽन्यदा मत्तमातङ्गः—रथाश्वारोहणादिभिः। राजक्रीडाभिरनिशं, क्रीडतिस्म महापथे ॥ ३१ ॥
अथैकदाऽग्याऽवसरं, पुंसा श्रीराज्यमानिना। अवाचि विजयस्याग्रे,-ऽग्रमहिष्य विचेष्टितं ॥ ३२ ॥
तन्मुखान्निखिलं मत्वा, देव्या असमसाहसं। वज्रायुधाहत इव, कस्माज्जातो जनेश्वरः ॥ ३३ ॥
दाध्योचेयं महादुष्टा, पापिष्टा कूटसंकुटी। वंचद्रोहरतामाया, वल्लरीजलसन्निभा ॥ ३४ ॥
चित्ते चिन्तयते याऽन्यद्, रमणे रमते परं। ब्रवीति वचनं चान्यत्, सा कथं ? सुखहेतवे ॥ ३५ ॥
विरक्ता विषवल्लीव, नूनं प्राणापहारिणी। या रक्ता मृतवल्लीव, सर्वाङ्गसुखदायिनी ॥ ३६ ॥
क्षणं सक्ता क्षणं रुष्टा, क्षणं दर्शित-दर्शना। विद्युच्चपल—संचारा, प्रकटं कुटिलालिका ॥ ३७ ॥

दुःसहः—पक्षाघातादि, पुत्रमारण—लक्षणः । यया जगत्त्रये नूनं, तां दृष्ट्वा खिद्यते मनः ॥ ३८ ॥
इत्थं विचिन्तयन्नास्याः, स्वरूपं पृथिवीपतिः । महावैराग्य—फलदं, चित्तक्षेत्रे प्ररूढवान् ॥ ३९ ॥
धृतं मे राज्यभारेण, धृतं कान्ताकदम्बकैः । धृतं मे गृहवासेन, चतुरङ्ग—बलैः धृतं ॥ ४० ॥
किं नाथ मद् गतास्कां, संसाराम्भोधितारिणीं । प्रव्रज्यां प्रतिपत्स्येहं, परमानन्ददायिनीं ॥ ४१ ॥
एवं ध्यात्वा निजे चित्ते, ऽभिषिच्य भव्यवासरे । विशुद्धं स्वीयवंशोत्थं, नरं राज्ये नरेश्वरः ॥ ४२ ॥
दददानं सुपात्रेभ्यो, दीनेभ्योऽतिविशेषतः । अष्टाह्निकामहस्तन्वन्, कुर्वन्निष्क्रमणोत्सवम् ॥ ४३ ॥
राज्ञा विजयसेनाख्यो, विख्यातोऽखिल मण्डले । विजया भार्यया युक्त,— स्तज्जात् सुजयान्वितः ॥ ४४ ॥
प्राणनाथसमीपस्य, पादपद्मं षडङ्घ्रिवत् । विज्ञो विज्ञापयामास, ललाट—घटिताञ्जलिः ॥ ४५ ॥
प्रभो ? प्रसादमाधाय, भवाम्भोधेश्च तारय । दुःखदावानललीढं, मां परिवारसंयुतम् ॥ ४६ ॥
ततः स्वागत हस्तेन, पात्र पात्रोपमेन भोः? । ततो दिदीक्षे देवेन्द्रः, वर्द्धमानेन तायिना ॥ ४७ ॥
तपांस्यपांसि भूयांसि, तीव्राणि दुस्तपान्यहो । प्रोदीप्यदीप्तिभिर्भानु,— र्भानुवद्भासुरस्तराम् ॥ ४८ ॥

शिक्षयन् द्विविधां शिक्षां, दक्षां दक्ष प्रतिज्ञकः। पापठन् श्रीगुरूपान्ते, आगमं रागगञ्जनम् ॥ ४९ ॥
ध्यानं सध्यानसंलीनं, ध्यायन् कर्मेन्धनानिलम्। गोपयन् गोपवद् गुप्तिं, चतुर्गति—पथावरीम् ॥ ५० ॥
आचरंश्चरिताचारं, निरतीचारमन्वहम्। कतिभिर्दिवसैः प्राप, सोऽवधिज्ञानमुज्ज्वलम् ॥ ५१ ॥

श्रीवीरपादाम्बुजचञ्चुरीको, राजर्षि राजो विजयी व्यहार्षीत्।
पवित्रयन् यो निजपादचारै,—स्त्रैलोक्य लोकं विरजीचकार ॥ ५२ ॥

इतश्च रणसिंहाख्यो, यौवनं प्राप्तवान् वयः। शृङ्गाररसकासारं, मानिनीमानमर्दनम् ॥ ५३ ॥
अन्यदा तत्पुराऽसन्न, शालिगोधूम धान्ययोः। क्षेत्रधात्रीमुर्वराभां, ररक्ष क्षेत्रपालवत् ॥ ५४ ॥
विजयात्पुर व प्रान्ते, प्रोत्तुङ्गोऽभ्रंलिहोज्ज्वलः। प्रासादः पार्श्वनाथस्य, त्रिजगज्जीवनौषधम् ॥ ५५ ॥
नानादेवासुरेन्द्राणां, विषादार्त्त्यपनोदकः। पुष्टिस्तत्पुण्यपुण्यस्य, साधूनां शिवसाधकः ॥ ५६ ॥
चिन्तामाण्याख्य यक्षोऽस्ति, सेवाकृत्सेवकोत्तमः। पार्श्वाराधक—लोकानां, मनः कामितपूरकः ॥ ५७ ॥
व्याधेर्व्याधिवतां हन्ता, निर्धनानां धनप्रदः। दुःखिनां दुःखलक्षस्य, क्षयकृत्सुखदः सताम् ॥ ५८ ॥

श्रीमतो विजयपुर—निःशेषो धार्मिको जनः । राजादि प्रमुखस्तीर्थ—यात्रा हेतोः समागमत् ॥ ५९ ॥

केचिन्मात्रं पवित्रं च. सुगन्धिद्रव्यमिश्रितैः । शुद्धोदकैः प्रकुर्वन्ति, तैर्दत्तोऽर्घ जलाञ्जलिः ॥ ६० ॥

कर्पूरमृगनाभिगुरुकुङ्कुमादि,द्रव्यविमिश्र मलयोद्भवचन्दनेन ।
शोभूयते किल जगद्गुरुचारुदेहे, कुर्वन् विलेपनमुदार जनो विलेपः ॥ ६१ ॥

कल्याणाम्बुजपारिजातकुसुमै केतकीपल्लवैः
रक्ताशोक गुलाल वेउललसद्दाङ्गेय—जाति व्रजैः ॥
चञ्चच्चम्पकमालतीभिरनिशं येऽभ्यर्चयन्ति प्रभुम् ।
साम्राज्यं जगतोऽनुभूय शिव मां भुञ्जन्ति ते मानवाः ॥ ६२ ॥

पक्षितंदुल लसत्कलमाद्यैर्दैन जीरगुरुङ्गस्य शालिभि ।
पुञ्जक त्रितयमीशितुः पुरो ये व्यधुः सुगति शालिनस्तके ॥ ६६ ॥

पार्श्वनाथ पुरतो-ननृतुर्यके हावभावनिनदैश्चतुराशयाः ।
अंगहारकरणावलिपूर्वं, स्वर्गि सुन्दरिगणास्तदग्रतः ॥ ६४ ॥

अश्वसेननृपपुत्र, पार्श्वयोर्दीप्रदीपकमणिं वितेनिरे। केवलोत्तमतमं सुकेवलं, ज्ञानमापुरमलं ततः शिवम् ॥ ६५ ॥

किंनरी वेणु वीणा समान स्वनैर्मञ्जुलोदार सारैर्गुणैर्गुम्फितम् ।

भावतो गीत गानं व्यधुर्ये नरास्ते, परत्राप्सरोभिस्तुतास्युर्नराः ॥ ६६ ॥

सर्वोत्कृष्टं सारभूतं रसाढ्यं, पार्श्वस्याग्रे सत्फलं केचनार्याः ।

ढौकन्ते ते सिद्धसीमंतितीनां, वक्षोजाग्रे, लोलुठत्येव शश्वत् ॥ ६७ ॥

नैवेद्यं निरवद्यं मोदकलपन् श्रियावरं सततं। ढौकन्ते केऽपि मुदा, मोक्षपथप्रस्थितं पादम् ॥ ६८ ॥

एवं पार्श्वार्चनं यात्रा,—ऽऽगत्य लोकाः प्रकुर्वते। तदधिष्ठायको यक्षो, दत्ते स्वैरं मनोमतम् ॥ ६९ ॥

अन्यदा रणसिंहोऽपि, क्षेत्र खेदापनुत्तये। क्षेत्रात्तीर्थं समागंसीत्, श्रान्तश्चैत्यतरोस्तले ॥ ७० ॥

देवानालोकयन् याव,—च्चारणश्रमणोत्तमौ। साधु राजौ जिनन्नन्तुं, तावत्खेऽध्वनि संगतौ ॥ ७१ ॥

तपस्तेजोदितध्वान्तौ, सूर्याचन्द्रमसाविव। दर्शनानन्दजनकौ, निःसीम द्युतिसुन्दरौ ॥७२॥युग्मम्॥

नत्वा स्तुत्वा पूजयित्वा, भावपूजाभिरादरात। यावद्यातस्तदा भक्त्या, रणसिंहोऽभ्यवंदत ॥ ७३ ॥

तस्मार्ह राजसिंहान्त—, द्राग्भ्यां लक्षणविद्वरौ। ततो निविश्य भूपीठे, चक्राते धर्मदेशनाम् ॥ ७४ ॥
सर्वेऽपि नरच,—लोचना ज्ञानलोचनः। विनयावनतोऽश्रौषी—ल्ललाट घटिताञ्जलिः ॥ ७५ ॥
दुर्लभं दशदृष्टान्तै—,र्मानुषं जन्म जन्मिनाम्। ततोऽपि चार्यदेशादि, सत्कुलं चाक्षपाटवं ॥ ७६ ॥
दुर्लभः साधु संयोगो—ऽर्हद्धर्मश्रवणं ततः। दान-शील-तपो-भाव,—भेदात्तचतुर्विधम् ॥ ७७ ॥
तत्र पञ्चविधं दानं, निदानं मुक्ति सम्पदः। स्वपरोपकृतौ हेतुः, प्रत्यपादि जिनोत्तमैः ॥ ७८ ॥
शीलं सर्वगुणाधानं, शीलं परमभूषणम्। दुःखागोन्मूलने कीलं, शीलं सद्गति—साधनम् ॥ ७९ ॥
शीलपालनतोऽनेके, राजानो नारदादयः। सिद्धि सीमन्तिनी वक्षः,—स्थले हारंति नित्यशः ॥ ८० ॥
दुष्कर्मानल—कुलिशं, मनोमल—विशोधनम्। मन्त्रतन्त्रौषधी मुक्तं, कार्मणं निर्वृतिश्रियः ॥ ८१ ॥
दुर्जय करणग्राम, नागोग्रविषगारुडम्। सर्वलब्धिलतामूलं, तपो द्वादशधा स्मृतं ॥ ८२ ॥ युग्मम् ॥
निर्मीणं प्रचुरं वित्तं, तप्तं तीव्रं तपोधनम्। बहुधा शीलितं शीलं, निष्फलं भावनोज्झितम् ॥ ८३ ॥
निर्ग्रन्थोऽपि मृगव्याला, भावनातो दिवं गताः। सर्वेभ्यो भावनोत्कृष्टा, प्रख्याता प्रथिताऽर्हतैः ॥८४॥युग्मम्॥

तथा धर्मं द्विधा प्राहु,—रर्हन्तोऽर्हपतिप्रभाः। सर्वतो विरतैरेकं, देशतोविरतैः परम् ॥ ८५ ॥
तयोराद्यं सुसाधूनां, चञ्चत्पञ्च—व्रतात्मकम्। सम्यक्तान्वित पञ्चाणु,—व्रत त्रिगुण सद्व्रतम् ॥ ८६ ॥
चतुःशिक्षाव्रतोपेतं, श्राद्धधर्मं द्वितीयकम्। शाश्वतानन्द दातार—, मन्यं चानुक्रमेण हि ॥ ८७ ॥
धर्माद्राज्यं प्राज्यमरोमारोग्य मायु,—र्दिव्यं रूपं रम्यरामाविलासः।
बुद्धेर्वृद्धिः सर्वकार्येषु सिद्धि, सम्पत्सर्वा ह्यत्र पारत्र्यसिद्धिः ॥ ८८ ॥
इत्येवं देशना प्रान्ते, सिंहः सिहपराक्रमः। भावितः साधु धुर्याभ्यां, सुधादेशीयया गिरा ॥ ८९ ॥
प्रतिपद्यस्व वत्स! त्वं, जिनधर्मं धनावहम्। सिंहोऽवादीदहं कर्तुं, पारयामि न साम्प्रतम् ॥ ९० ॥
सामायकादि षड्विध,—सदनुष्ठाने ह्यवश्यकर्त्तव्ये। नाहमलं त्रिकदशकैः—शुद्धे जिनपूजने शिवदे ॥ ९१ ॥
न तथा तपो विधाने, सिद्धान्तविचारणेऽपि नो बुद्धिः। देवे गुरौ न तत्त्वे, रत्नत्रयपालने शक्तिः ॥ ९२ ॥
पुनरप्यभाणि मुनिना, जिनपूजे कापि कामितं कुर्याः। तस्मात्स्वकीय भक्त्या,—दखण्ड पिण्डी प्रदातव्या ॥ ९३ ॥
एवं नियमविशेषं भूयाः, सविशेष निखिल लाभकरः। पूजामनुभोक्तव्यं, सद्यः सफलो हि दृढनियमः ॥ ९४ ॥

एवं निष्कारणगुण्या, स्वीकृत्याभिग्रहं तदा । हर्षोत्कर्षेण चित्तेन तौ सिंहेनाभिवन्दितौ ॥ ९५ ॥
ततो लब्धिप्रयोगेण, तौ गतौ गगनाङ्गणे । पालयन्नियमं सिंहः, सिंहवत् क्षेत्र मागमत् ॥ ९६ ॥
पुष्प—गन्ध—प्रमुखं, नैवेद्यं पार्श्वनाथवरभवने । प्रतिदिवसं प्रतिदिवसं, वितरति भक्त्यायुतः सिंहः ॥ ९७ ॥
चिन्तामण्याख्य – यक्षेण, तत्परीक्षार्थमान्यदा । दर्शयामास हर्यक्षः, किशोरपिङ्गलाक्षकः ॥ ९८ ॥
नासान्मणिपञ्जर,—दृग्घूर्णोहयुप्रकेसरः । लांगूलास्फालितक्षोणि,—गुञ्जद्गुञ्जारवोद्धरः ॥ ९९ ॥
तस्याऽभिग्रह भङ्गाय, पार्श्वप्रासादमण्डपे । श्रीमण्डप इवात्यन्तं, सश्रीकेलीकृतारके ॥१००॥
एवं वितर्कयामास, तं वीक्ष्य निजचेतसि । सिंहो हि एष क एकाकी, रणसिंहोऽस्म्यहं पुनः ॥१०१॥
तत्करिष्यन्त्यमी किं मे, हक्कित्वेति खराक्षरैः । आक्रम्य पादघातेन, पुरो व्रजति यावता ॥१०२॥
तावता काननाग्रं स, प्रणनाश मृगाधिपः । भृशं गवेश्यमाणोऽपि, नादृश्यत कुत्रचित् ॥१०३॥
कृत्वा नैवेद्य सत्पूजां, क्षेत्रमागत्य यावता । भोक्तुं ह्युपोविशत्तावत्, कुतोऽप्यागान्मुनिद्वयम् ॥१०४॥
लोचनानन्द कन्दालं, ददर्श्माशिपं पुरः । निरीहं निरहङ्कारं, ददर्शे भाग्ययोगतः ॥१०५॥ युग्मम् ॥

प्रतिलाभ्य मुनी यावद्, भक्ताद्यैर्भक्तिपूर्वकम्। उपविष्टः पुनर्भोक्तुं,तावत्पुनरुपागशम् ॥१०६॥
अध्वश्रान्तं क्लिन्नगात्रं, जरया जर्जरीकृतम्। साधुयुग्मं विहायार्यो भक्तं भक्तिभरान्वितः ॥१०७॥
हृदि दध्यौ गते तस्मि,—स्तौ चारणमुनीश्वरौ। मोहध्वान्तदिवानाथौ,क्वापि पश्यामि साम्प्रतम् ॥१०८॥
भक्तशेषं विशेषेण, ताभ्यां यच्छामि तर्यहम्। फलं लामि दुरापस्य हं हो! मानवजन्मनः ॥१०९॥
तृतीयवारमपि श्रद्धा,—भरैः सर्वाशनं मुनेः। ददे अतः सुकृतन्यूहः, सिंहेन समुपापार्ज्यत ॥११०॥

यतः प्रोक्तम्—

सर्वोत्तमं पात्रमधीश्वरौघः, पात्रं द्वितीयं मुनयो गुणाढ्याः।
तृतीयकं पात्रमणुव्रतस्था, स्तुर्यं तु सम्यक्त्वगुणैकधर्त्ता ॥१११॥
चत्वार्यैतानि पात्राणि, प्रोक्तानि परमेश्वरैः। तेषां सदानश्रद्धाने, अर्हच्छासन—भासनम् ॥११२॥
धर्माराधनसामग्री, शुद्धो भावः शुभोदयः। पात्रयोगो महत्पुण्यो,—दयैः प्राणिभिराप्यते ॥११३॥
स्थैर्यं संवीक्ष्य निस्सीमं, तस्याभिग्रह संग्रहे। प्रत्यक्षीभूय यक्षेशश्चलत्कुण्डलयामलः ॥११४॥

सिंहः प्रत्याह भो भद्र !, यानस्य स्मरनीपितम् । सोऽवादीत् दुर्लभं लोके, दर्शनं प्रापि तन्मया ॥११५॥
येनासमाम्बुधेः शोणां, येनारोधि गतिद्वयी । येनापवर्गकामिन्यः संगे दूतायिता ध्रुवम् ॥११६॥ युग्मम् ॥
तथापि किञ्चित यानस्य, न मोघं देवदर्शनम् । तदर्थकिरणैश्छद्धि, निःस्वभूछाय सञ्चयम् ॥११७॥
इत्युक्त नति यक्षणोक्तं श्रीकनकपत्तने । कनककेशरेशस्य, सुता कनकवत्यसि ॥ ११८ ॥
तस्याः स्वयंवरं श्रुत्वा, गन्तव्यं झटिति त्वया । शङ्का काऽपि न कर्त्तव्या, त्वया भक्त्या वशीकृतः ॥ ११९ ॥
यत्र कुत्रापि माहात्म्यं, करिष्यामि स्मृतस्तव । एवमुक्त्वा स यक्षोऽपि, द्रिव्यकस्मात्तिरोदधे ॥ १२० ॥
तर्हीत रणसिंहोऽपि, ततोऽगान्निजवेश्मनि । सोऽपि यक्षेश्वरप्रोक्तं, वृत्तान्तमवदत्प्रियाम् ॥ १२१ ॥
त्वत्प्रियनितानन्दा, साऽब्रवीद्दयितं प्रति । फली धर्मद्रुमो स्वन, चित्तोत्कर्षारापितस्त्वया ॥ १२२ ॥
अत्रान्तरे कतिचिद्दिनैः, स्वयंवरणमण्डपम् । आरब्धं कनकेशेन, सुतायाः जनताऽऽननात् ॥ १२३ ॥
प्रतिदिशां प्रतिदिशां, दूतान् प्रेष्य क्षमाभुजा । आकारिताः समे भूपा—अश्विनीकुमरोपमाः ॥ १२४ युग्मम् ॥
संयोजिताज्ज्वलद्गु,—महोक्षयुगलस्तदा । सिंहोऽपि लाङ्ग-लारुढः, पर्शुपाणिर्मदोद्धुरः ॥ १२५ ॥

प्रतस्थे विशब्दस्थामा, चित्रयंश्चतुरान्नरान् । क्रमेण प्राप कनक— पुरं सुरपुरोपमम् ॥ १२६ ॥
तत्राद्राक्षीत्सुरेन्द्रस्य, क्रीडास्थानमिवाद्भुतम् । दीव्यद्देवगणाकीर्णं, श्रीस्वयंवरमण्डपम् ॥ १२७ ॥
चञ्चच्चन्द्रोदयोद्द्योति,—मुक्तामालाकरालितम् । मञ्चातिमञ्चकलितं, नानासिंहासनान्वितम् ॥ १२८ ॥
स्थाने स्थाने च विन्यस्त,—मौक्तिकस्वस्तिकाङ्कितम् । कर्केतनपुष्पराग— रत्नैर्मण्डितभूतलम् ॥ १२९ ॥
इन्द्रकीलमिवोत्तुङ्गं, वरस्तम्भशतोच्छ्रितम् । द्वारे द्वारे स्वर्णकुम्भो— द्भासितं परितोध्वजम् ॥ १३० ॥
पञ्चवर्णसुमोद्दाम,— दामवन्दनमालिकम् । तोरणश्रेणिभी रम्य—मङ्गुलीदत्तदुर्दरम् ॥ १३१ ॥
स्वर्णसिंहासनासीनं, विस्फुरद्राजमण्डलम् । हाराद्धहारत्रिसर,—केयूराभरणोद्धुरम् ॥ १३२ ॥
वराङ्ग रङ्गन्मुकुटं, सद्भालोद्यद्विशेषकम् । बिभ्राणं दिव्यनेपथ्यं, पाणिनृत्यत्पयोरुहम् ॥ १३३ ॥सप्तभिः कुलकम् ।
इत्थं श्रीमण्डपं वीक्ष्य, प्रदध्याविति चेतसि । किं वा सुरपतेः स्थानं ?, किं वा श्रीपतिमन्दिरम् ? ॥ १३४ ॥
पद्माकेलीगृहं किं वा ?, किं वा तीर्थकृतां सभा ? । इत्याद्यनल्पसंकल्प,—जालैराकुलितोऽभवत् ॥ १३५ ॥
कौतुकार्थी तदा प्रोढो, हलारूढो व्यलोकयत् । रणसिंहोऽपि सकलं, विचित्रं राजमण्डलम् ॥ १३६ ॥

अदर्शितदर्शनातीत, रूपलावण्यसम्पदा । हस्तन्यस्तप्रशस्तश्री,—वरमाला महाशया ॥ १३७ ॥
श्वेतवासाः सभाद्वारात्, तदा कनकवत्यहो ? । मोहयन्ती जगच्चित्तं, लक्ष्मीव पुरुषोत्तमम् ॥ १३८ ॥
या दीपिकेव भूपानां, प्रकाशं कुर्वती पुरः । पश्चाद्वितन्वती ध्वान्तं, चङ्क्रमन्ती नृपाग्रतः ॥ १३९ ॥
निःशेषक्षितिपालानां, नामवंशावलीविदाम् । प्रतीहारीं पुरस्कृत्य, विज्ञातविरुदावलीम् ॥ १४० ॥
यावदङ्गीकृतां कण्ठे, नाक्षिपद्वरमालिकाम् । तावत् व्योमविलक्षास्यां, प्रेच्छयान्ते ते परस्परम् ॥ १४१ ॥
साऽपि श्यामा क्षणं प्रेक्ष्य, मुक्त्वा राजन्यकं तदा । यत्र हालिकसिंहोऽस्ति, प्राचलत्तं प्रतित्वरा ॥ १४२ ॥
सोत्कण्ठं साऽक्षिपत्कण्ठे, वरमालां वरानना । जगज्जनामोददात्रीं, राज्यलक्ष्मीमिवाद्भुताम् ॥ १४३ ॥
क्रोधाध्माता रक्तनेत्रा—भृकुटी भीषणाननाः । श्रीशूरसेनप्रमुखाः, प्रजल्पन्ति परस्परम् ॥ १४४ ॥
किमेषा कुग्रहग्रस्ता ?, किं मूढाऽरूढविभ्रमा ? । राजचक्रं परित्यज्य, हालिकं स्वं वृणोति या ॥ १४५ ॥
यदि श्रीकनकस्यास्य, कुलीनोऽपि हालिकः । अभीष्टः समभूदन्ये, राजानो मीलिताः कथं ? ॥ १४६ ॥
अथ श्रीकनकं प्रोचुः, रुष्टाः क्षितिपाः पुनः । आकार्यैवं पराभूता, सभाध्यक्षं विगोपिताः ॥ १४७ ॥

मूर्खमुख्येन किन्त्वेत–दाजन्मप्रभृति त्वया । प्राणापहारकं वैरं, सर्वैः-सह समर्जितम् ॥ १४८ ॥
भूभृत्सु सत्स्वयं शीरी, कन्यां लात्वा क्व यास्यति ? । यमातिथिं विधायैनं, ग्रहीष्यामो वयं कनीम् ॥ १४९ ॥
तदा च चण्ड सिंहेन, प्रेरिताः सूरभूधवाः । स्वबुद्ध्या क्षिपिता माला, न तु ताताऽऽज्ञया तया ॥ १५० ॥
तत्कथां मूलतो वक्तुं, श्रीकनकेश्वरं प्रति । दूतोऽथ प्रेष्यते दक्षो, मेधावी वाक्पटुः खलु ॥ १५१ ॥
कथाप्यते पुनस्त्वेवं, त्वत्पुत्र्या मूढभावतः । स्वकुलानुचितं चक्रे, लोकहासः स्फुटोऽभवत् ॥ १५२ ॥
पुनः स्वयंवरं कृत्वा, निखिलेष्वपि राजसु । मालाक्षेपेण हे कन्ये !, मनोऽभीष्टं वरं वृणु ॥ १५३ ॥
नो चेत्संग्राम सामग्रीं, कुरुष्वेति ततो नृपः । गत्वा तेनाखिलं तस्मै, नमस्कृत्य निवेदितम् ॥ १५४ ॥
राज्ञाऽवादि त्वया दूत !, गत्वा वाच्यं नृपाग्रतः । नास्त्यत्र दोषलेशो मे, पुत्र्या ह्येतत्स्वयं कृतम् ॥ १५५ ॥
अथ चेत्पुनरप्येतत्, कार्यते वरमण्डपः । अकृत्यादत्यकृत्येना,–ऽयशस्तरं नदत्यहो ॥ १५६ ॥
पुत्र्या वृतः प्रमाणं मे, इति श्रुत्वाऽन्यभूधवाः । वज्राहता इवपेतु,–रमर्षोच्छ्वसिताः पुनः ॥ १५७ ॥
अथ ते भूभुजः प्रष्टुं, प्रवृत्ता दुष्टचेतसः । रे रे हालिक ! पापात्मन् !, किं कुलं ते ? प्रकाश्यताम् ॥ १५८ ॥

[illegible] ! [illegible] साम्प्रतम् । न चैवावमरः कोऽपि, प्रोक्तऽथ प्रत्ययोऽपि न ॥ १५९ ॥
[illegible], [illegible]करिष्यति । यथोदयो दिनेशस्य, ज्ञापयत्यपरः कथम् ? ॥ १६० ॥
[illegible],—योद्धारो योद्धुमाहवे । मुष्टामुष्टि दण्डादण्डि, खड्गाखड्गि तथैव च ॥ १६१ ॥
[illegible] तु, [illegible]ऽपि निश्चितम् । विशेषतस्तं हलिनं, तमुद्दिश्याभिजग्मिरे ॥ १६२ ॥
[illegible], [illegible] समभूद् युधि । मन्यमानस्तृणानीव, राजचक्राणि चेतसि ॥ १६३ ॥
[illegible].— बाणनाराचमुद्गरैः । ते निघ्नन्ति प्रयत्नेन, तस्याङ्गे नो लगत्यहो ! ॥ १६४ ॥
[illegible], सोऽप्यभाविष्ट तान् प्रति । दिशोदिशं प्रणेशुस्ते, लकुटाहतकाकवत् ॥ १६५ ॥
[illegible], [illegible]मदोद्धुरः । एकाक्यप्यहितैः सिंहो, लक्ष्यते लक्षरूपभृत् ॥ १६६ ॥
[illegible], [illegible] तं प्रति । विद्यायुक्तान्यमोघानि, दिव्यशस्त्राणि तत्पुरः ॥ १६७ ॥
[illegible], [illegible] । सिंहप्रयुक्तमस्त्रकं, पर्श्वाख्यं लक्षघातकम् ॥ १६८ ॥
[illegible], [illegible] संनिभान् । वातेरितग्जांसीवा–ऽशीशमत्स हलाम्बुदैः ॥ १६९ ॥

रणे श्रीरणसिंहेन, सिंहेनेव तरस्विना। मदोत्कटाऽखिलक्ष्मापा,—स्त्रासिता मार्गवत्तदा ॥ १७० ॥
तादृशं साहसं तस्य, तादृशं च पराक्रमम्। अद्भुतं चरितं वीक्ष्य, विस्मितः कनकेश्वरः ॥ १७१ ॥

देवो वा दानवो वा किमु रतिरमणः ? किं कुबेरो नलो वा ?,
किं वा विद्याधरोऽसौ ? किमु पवनसुतः ? किं नरो वा हरो वा ?
किं यक्षो राक्षसो वा ? त्रिदशपतिरिपुर्मानवो वा गुहो वा ?,
युद्धक्रीडां प्रकर्तुं दशरथतनयो रावणो वा रणाग्रे ? ॥ १७२ ॥

ततश्च शूरसेनाद्याः, प्रजल्पन्ति परस्परम्। प्रणश्य कुत्र यास्याम,—एतस्मादग्रतो वयम् ॥ १७३ ॥
शून्यभेद्यमपि ध्वान्तं, जगदालोक नाशनम्। उदयाचलचूलायां, प्राप्तेऽर्के कुत्र तिष्ठति ॥ १७४ ॥
ततस्तस्यैव पादाब्जं, शरणी क्रियते यदि। सुखेन स्थीयते तर्हि, सराज्यधनबन्धुभिः ॥ १७५ ॥
सर्वोर्वीशा विमृश्यैवं, प्रणेमुस्तत्पदाम्बुजम्। एवं विज्ञपयामासु.—रक्ष रक्ष भयात् प्रभो ! ॥ १७६ ॥
स्वामिन्नज्ञानभावेन, मानाद्वाऽस्मद्विचेष्टितम्। कृत्वा प्रसादं तत्सर्वं, क्षन्तव्यं क्षेमकारिणा ॥ १७७ ॥

आकृत्या शौर्यवृत्त्या च, ज्ञात्वा जातिकुलादिकम् । चण्डसूराढयः सर्वे, जहृषुः कनकेश्वराः ॥ १७८ ॥
तथापि श्रीपुना राज्ञा, कनकेन कुलादिकम् । दिवि भोगस्तथा चक्रे, यथा यक्षः प्रकट्यभूत् ॥ १७९ ॥
तेन सिंह कथा प्रोक्ता, सर्वा श्रीकनकेशितुः । आजन्मानो यत्र यावत् समानायि मया, विभो ! ॥ १८० ॥
विद्यानां त्वं सुतः श्रीमान्, विजयाविजयसेनयोः । न हालिको ऽजयादेव्या, चेष्टितं च प्रकाशितम् ॥ १८१ ॥
विजया-विजयसेन—राजभ्यां पुत्रवियोगतः । जात वैराग्यरङ्गाभ्यां, जगृहे व्रतमुत्तमम् ॥ १८२ ॥
इत्यादि राजलोकानां, प्रत्यक्षं च प्रकाश्य ताम् । आमूलचूलतो वार्त्तां, यक्षराजस्तिरोदधे ॥ १८३ ॥
ततः समक्षं लोकानां, पुर सेनादिभूभृताम् । चित्तचमत्कार करं, गीतवाद्यजयोदितम् ॥ १८४ ॥
शुभेऽह्नि शुभलग्ने च, तयोर्विवाहमङ्गलम् । समृद्ध्या कारयामास, राजा कनकशेखरः ॥ १८५ ॥ युग्मम् ।
तुरगं यत्र रत्नाढ्य,-मत्तमातङ्ग सम्पदा । राज्यार्द्धं च ददौ तस्मै, प्रस्तावे पाणि पीडने ॥ १८६ ॥
तदा च सर्वे भूपाला,- स्तस्य राज्याभिषेचनम् । सुरेन्द्रस्येव देवौघा,---हर्षोत्कर्षाद्वितेनिरे ॥ १८७ ॥
अद्यतः परमस्माकं, नायको नायको भवान् । शिरोमणिरिवाज्ञां ते, वहामो मूर्ध्नि देववत् ॥ १८८ ॥

दिव्यालङ्कार श्रृङ्गार,—हाराश्वगजराजिभिः । राज्ञा श्रीरणसिंहेन, सर्वे सम्मानिता नृपाः ॥ १८६ ॥
श्वशुरेणापि संमान्य, विसृष्टास्ते नराधिपाः । रणसिंहाज्ञया युक्ताः, स्वस्वस्थानमधिश्रिताः ॥ १९० ॥
सिंहोऽपि कनकवत्या, सार्द्धं वैषयिकं सुखम् । निस्सीममुपभुञ्जानः, सुरेन्द्रो रम्भया यथा ॥ १९१ ॥
उचितानुचितज्ञोऽसौ, श्वशुरप्रत्तनीवृति । रामवन्न्यायधर्मेण, प्राज्यं राज्यमपालयत् ॥ १९२ ॥
वर्जितानार्य सञ्चारं, नयावर्जितसत्प्रजम् । शक्तित्रय समायुक्तं, पापवृत्तिपराङ्मुखम् ॥ १९३ ॥युग्मम् ॥
सुन्दरं सुन्दराकारं, समाकार्यार्यकर्षुकम् । राज्यतृप्तिकरं चक्रे, कृतज्ञो रणसिंहराट् ॥ १९४ ॥
अथा सोमापुरीशस्य, श्रीपुरुषोत्तमेशितुः । रत्नानर्घ्या रत्ननती, पुत्र्यस्ति रतिसंनिभा ॥ १९५ ॥
तया कनकवत्या हि, विवाहाश्चर्यमद्भुतम् । प्रसिद्धं सिद्धलोकेषु, किं पुनर्भूचरेष्वहो ! ॥ १९६ ॥
अश्रावि गुणवत्या हि, ततः सिंहेऽनुरागधीः । प्रोल्लासतरां तस्या,--श्चन्द्रंदृष्टे्व सागरः ॥१९७ ॥
तच्चित्तज्ञेन भूपेन, पुत्र्याः प्रियचिकीर्षुणा । सिंहानयननिमित्तं, प्रेषिता आप्तपूरुषाः ॥ ६६८ ॥
रत्नवत्या विवाहं हि, विधाय त्वं प्रसीद नः । इतीशशिष्टि मादाय, गत्वा सिंहो न्यवेदि तैः ॥ १९९ ॥

संमान्य नान्नगाधीशः, प्रत्युत्तरमणुत्तरम् । ददावेतत्समं मन्त्वा, श्रीमान् कनकशेखरः ॥ २०० ॥
शिक्षाशिषां गृहीत्वा ते, सिंहमानम्य निर्ययुः । प्रापुः कनकभूशक्रं, स्वस्वाम्यर्थ प्रसाधकाः ॥ २०१ ॥
कृत्वा ज्योत्कारमीशस्य, सुखासनमधिश्रिताः । श्रीपुरुषोत्तमादिष्टं, संदेशं ते शशंसिरे ॥ २०२ ॥
ततः कनकराजेन, प्रोक्तं शृणुत मद्वचः । ममापि भागिनेयी सा, तन्मत्कार्यमिदं ध्रुवम् ॥ २०३ ॥
तस्या विवाहमाङ्गल्यं, मया कार्यं विशेषतः । ततः श्रीरणसिंहाय, राजा कनकशेखरः ॥ २०४ ॥
प्राहिणोत्स्वप्रधानान्, गत्वा ते सिंहभूभुजम । नत्वा विज्ञपयामासु,—राज्ञादिष्टं सविस्तरम् ॥ २०५ ॥
ततः सिंहोऽपि तैः सार्द्धं प्रतस्थे गुरुऋद्धिभिः । अविच्छिन्नप्रयाणेन, पाडलीखण्डपत्तने ॥ २०६ ॥
ग्रामापुराभ्यन्तराले, चतुरङ्ग चमूयुतः । कृतसैन्यनिवेशोऽस्था,—द्धर्मकर्मणि कर्मठः ॥ २०७ ॥
रम्यारामे च तत्रारि,—चिन्तामणिपुरोत्तमः । उत्तुङ्ग चङ्ग चैत्यस्थ,—श्चिन्तातीतप्रदो जिनः ॥ २०८ ॥
तं नन्तुं नीतिविन्नेता, प्राप्तपूजोपहारकः । संचचार परीवार,—सारजुष्टोऽन्तरालयम् ॥ २०९ ॥
नमस्कृत्य त्रिधा भक्त्या, चिन्तामण्याह्वयं मुदा । चिन्वीयन् यावदागत्य, मत्तवारणमाश्रितः ॥ २१० ॥

तावत्सुलक्षणं तस्य, दक्षिणाक्षमपोस्फुरीत । तदाऽमन्यत कोऽप्यत्र, मिलिष्यति मम प्रियः ॥ २११ ॥
यक्षराजप्रसादेन, किं किं न स्यात्समी हितम् ? । प्राग्जन्मार्जितपुण्यस्या,--थवा मे सत्फलं समम् ॥ २१२ ॥
इतः पाडलिखण्डस्य, स्वामी कनकसेनराट् । तत्सुता कमलवन्यासीत्, सल्लावण्य गुणालया ॥ २१३ ॥
पञ्चवर्णसुगन्धीनि, पुष्पाण्यादाय सा तदा । दासी सुमङ्गलाजुष्टा, समागाद् यक्षमर्चितुम् ॥ २१४ ॥
कुमारो नेत्रपत्रेण, तां विलोक्य व्यचिन्तयत् । किं लक्ष्मीः ? पार्वती किं वा ?, किं वा सरस्वती सती ? ॥ २१५ ॥
तदङ्गेऽनङ्ग बाणा हि, नाभिन्दन् कोमलेमले । अस्याः कटाक्षबाणास्तु, भेदं वज्राशये ययुः ॥ २१६ ॥
असावस्मन्मान मत्त,---मतङ्गजनियन्त्रणे । वारीयत्यथ विषयाऽहेर्नागदमनीयति ॥ २१७ ॥
कथञ्चित्प्रेक्षितो दिष्टया, कुमारः शिष्टया तया । मानव्यपि विलोक्यैनं, पिबन्त्यनिमिषाऽभवत् ॥ २१८ ॥
परस्परानुरागेणा,--नुविद्धौ तौ बभूवतुः । क्षीरनीरसमस्नेहः, प्रादुर्भूतस्तदा तयोः ॥ २१९ ॥
ततोऽर्चयित्वा त यक्षं, प्रार्थयामास साञ्जसम् । नान्यं कान्तं समीयेऽहं, तद्द्वारस्थं नरं विना ॥ २२० ॥
मयापि पूर्वमेतस्य, कन्या सम्पत् समर्पिते । वरोऽस्तु तेऽप्यसौ यक्ष,--इति तस्यै वरं ददौ ॥ २२१ ॥

ओमिति प्रतिपद्याथ, साऽपि लोचनरज्जुभिः । गाढं नियन्त्र्य प्रमाद् यं, प्रेक्ष्यमाणा मुहुर्मुहुः ॥ २२२ ॥
कारयित्वा तयाऽऽलापं, पटुचेट्या परस्परम् । ज्ञात्वा नामादिकं सर्वं, जगाम निजमन्दिरम् ॥ २२३ ॥
तदादि रणसिंहोऽपि, परीवार युतस्ततः । चिन्तामणेश्च भवनं, शून्यं जानाति तां विना ॥ २२४ ॥
द्वितीय दिवसेऽप्येत्य, वीणां वादयति स्वयम् । कच्छपीं भारती यद्व,--द्देव दानवमोहिनीम् ॥ २२५ ॥
सिंहोऽपि च तयाऽऽकृष्टो, यक्षभक्तिं विधाय च । तदेकाग्र्यमनास्तस्थौ, प्राग्दिनाङ्गीकृतासने ॥ २२६ ॥
तथैवागादि सा कृत्वा, न्यवर्त्तत तदग्रतः । सरागाक्षपरिक्षेपा,--ज्ज्ञापितान्तर्गताशया ॥ २२७ ॥

यतः—

आकारैरिङ्गितैर्गत्या, चेष्टया भाषणेन च । नेत्रवक्त्रविकारैश्च, ज्ञायतेऽन्तर्गतं मनः ॥ २२८ ॥
गृहमेत्य सताऽचिन्ति, तदेकध्यानचेतसा । अयमेव वरो मेऽस्तु, स्वहृत्सन्तोषपोषकृत् ॥ २२९ ॥
नो चेत्समुज्ज्वलज्ज्वाला,--ज्वलने प्रविशाम्यहम् । अथवा जीवितव्याशां, त्यजामि विषभक्षणात ॥ २३० ॥
ततश्चागममापन्नं, प्रस्थानाभिमुखं नृपम् । तं पुरुषोत्तमो मत्वा, तत्प्रधानैर्नरैस्तदा ॥ २३१ ॥

विज्ञप्तोऽद्यापि भूभर्त्रा, विलम्बः क्रियते कथम् ?। ततोऽभाणीन्नृपो ह्यत्र, किञ्चिन्मेऽस्तिप्रयोजनम् ॥ २३१ ॥
तावद् भो ! गच्छत स्वच्छ,--चित्तास्थानमविघ्नतः। ममेप्सिते च संजाते; पुनर्यावि दुपैम्यहम् ॥ २३२ ॥

इतश्च—

तत्रास्ति भीमभूपालो, भीम इव पराक्रमी। कमलसेनभूपस्य, सेवां कर्त्तुं समागमत् ॥ २३४ ॥
उद्वोढुं कमलवतीं, कनीं सोऽपि समीहते। तद्धात्रीं पुष्पताम्बूल,–वस्त्रालङ्कारभूषणैः ॥ २३५ ॥
आवर्जयति सोऽत्यन्तं, विविधैस्तूपचारकैः। साऽप्यथावसरं प्राप्या,--ऽपृच्छत्पुत्रीं सुवाचया ॥ २३६ ॥
त्वामुद्वोढुं च भीमेशो,--हे वत्से ! विश्ववत्सले ?। नितरामीहते वीरः, पार्वतीमिव शङ्करः ॥ २३७ ॥
नैच्छन्नामापि सा तस्य, तस्मै प्रत्युत कुप्यति। यथा शीलवती नारी, नेहते परपूरुषम् ॥ २३८ ॥
तामुपचरितुं चाडु,--वचोभिश्चितुरोक्तिभिः। प्रचक्रमे तथाऽप्येषा, कुशवन्मन्यते समम् ॥ २३९ ॥
तां यक्षसद्मन्यायान्तीं, यान्तीं ज्ञात्वा स भीमराट्। तत्राध्वन्यन्यदाऽतिष्ठत्, समावर्जयितुं भृशम् ॥ २४० ॥
विलासोल्लासहास्यादि,--हावभावावलीं तथा। वीतराग इवाशेषं; तस्यामजनि निष्फलम् ॥ २४१ ॥

अन्यदा पद्मनाले सा, ययौ सुमंगलायुता । भीमस्तद्वारदेशेऽस्थात्, कृतयक्षार्चनाविधिः ॥ २४२ ॥
सुमंगला कुमार्यूचे, आवाभ्यां गम्यते कथम् ? । स धृष्टो दुष्टपापिष्ठः, किमन्याख्यास्यति ध्रुवम् ॥ २४३ ॥
त्वयैतन्निमध्ये सः, चेतसः खेददायकः । प्रविशन् वारणीयोऽयं, रक्ष्यस्तन्नाथवा त्वया ॥ २४४ ॥
श्रुत्वेति तद्वचो धात्र्या, चिन्तां मा कुरु हे सुते ? । तत्रैव व्यजनेऽचिन्त्य,-चिन्तामणिसमप्रभा ॥ २४५ ॥
तस्याः कनकवत्याश्च, सुकर्णे कर्णमूलिका । जज्ञे पुरुषरूपा सा, मृगाक्षी निर्ययौ ततः ॥ २४६ ॥
जानन् देवार्चकं तां चा,-पृच्छदद्यापि सुन्दरी । यक्षगर्भगृहात्किं नो, निरगात्कमलावती ॥ २४७ ॥
तेनोक्तमियमेकाऽस्ति, नापरा काऽप्यदर्शि भोः ! इति प्रोच्य गता गेहं, गोपायति स्म मूलिकाम् ॥ २४८ ॥
ततो यक्षगृहं तेन, प्रविश्यान्तर्द्विशस्त्रिशः । संवीक्ष्याभूद्विलक्षास्यः, शाखाभ्रष्टो यथा कपिः ॥ २४९ ॥
ततो व्याप्तमनस्तापः, संप्राप्तो निजमन्दिरम् । सुमङ्गला कुमार्यन्ते, भीमः संजात कौतुकः ॥ २५० ॥
इत्यपृच्छत्तयोरन्ते, श्रीभीमो युवयोरिह । कथमागमनं जज्ञे, वृत्तान्तस्त्वेष कथ्यताम् ॥ १५१ ॥
ततः सुमङ्गलादिष्टा, शिष्टा कमलवत्यदः । एतद्व्यतिकरं मुलाद्,-वक्तुं प्रववृते तदा ॥ २५२ ॥

श्रूयतां भो महाभाग ! महोषध्याः प्रभावतः । नरीभूयाथ निर्गत्य, त्वत्प्रत्यक्षमिहाऽगमम् ॥ २५३ ॥
अथोत्पत्तिं महोषध्याः, शृणु चिन्तामणेर्गृहम् । अगमाम वयं तत्रा,—न्यदाश्चर्यदिदृक्षया ॥ २५४ ॥
विद्यभृन्मिथुनं तत्र, परिभ्राम्यदितस्ततः । उल्लङ्घनेन यक्षस्य, प्रासादोत्तुङ्गशृङ्गतः ॥ २५५ ॥
खाट्कृत्य पापतद्दृष्टं, शिष्टाचार प्रलोपनात् । पूजोपचार व्यापार,—व्याकुलं यक्षनाकिनः ॥ २५६ ॥ युग्मम् ॥
मैतस्या रूपमालोक्य, मत्प्रियो ह्यनुरागभाक् । अमुष्यां दक्षमुख्यायां, बोभवीतु विहाय माम् ॥ २५७ ॥
इति चिन्ताप्रपञ्चेन, सर्वतो व्याप्तया तया । खेचर्या वर्यया बद्धा, मम कर्णकटोरके ॥ २५८ ॥
विद्याबलेनाऽविज्ञाता, महौषधी तदा मया । तावत्पर्यन्तमज्ञाता, यावत्तन्मिथुनं ययौ ॥ २५९ ॥
ततश्चात्मानमद्राक्षी,—न्नररूपमनुत्तरम् । मुष्टा केनापि दुष्टेन, विलपन्ती मुहुर्मुहुः ॥ २६० ॥
यावत्समग्रमप्यङ्गं, स्वीयं सम्यग् व्यलोकयत् । खेचर्या विस्मृता पश्यत्, कर्णाभ्यर्णे च मूलिका ॥ २६१ ॥
यावदुच्छोटयामास, तावत्स्वाभाविकं पुनः । अजनिष्ट विशिष्टाङ्गं, तद् दृष्ट्वा तुष्टिभागभूत् ॥ २६२ ॥
ज्ञातस्तस्या महोषध्याः, प्रभावोऽयं महाद्भुतः । संगोप्य रत्ननिधिवत्, तदा दध्रेतरां मया ॥ २६३ ॥

विविधोपायनैर्नाना, दानमानप्रदानतः ॥ २६४॥
जातामर्षेण हर्षेण, भीमेन प्रमीतिना । ततो राज्ञः पुरोऽपृच्छि, कन्यावैवाहमङ्गलम् ॥ २६५ ॥
रक्षिता जननी तस्या,-स्तद्दाने प्रगुणीकृता । तत्पुत्र्या विदिता वार्त्ता, तदा चिन्तापराऽजनि ॥ २६६ ॥
गतान्यपानि श्वो लग्नं, तत्सामग्रीं समां कुरु । न च ताम्बूलमादत्ते, सख्यालापं करोति न ॥ २६७ ॥
नो जल्पति न च भुङ्क्ते, नो शेते नैव तिष्ठति । तथा कनकवत्याप, नैव क्वापि क्वचिद्रतिम् ॥ २६८ ॥
यथा भर्त्राऽभिमलिनी,--मानिनी मानखण्डिता । विरुद्धवरदानेन, तत्रैव रजनीभरे ॥ २६९ ॥
येनाहं ध्यानवेलायां, चतुरापि प्रवञ्चिता । प्रकाशयामि स्वाकूत,--मिति चिन्तयति स्म सा ॥ २७० ॥
यक्षभवने गत्वा, यक्षेशमुपलभ्य च । प्रवञ्च्य पितरौ तन्त्रं, सखीलोकं च सोदरान् ॥ २७१ ॥
निशीथसमये जाते, स्वगृहान्निर्ययौ ततः । सुरोत्तमोऽसि धूर्तोऽसि, किं वा त्वमधमाधमः ? ॥ २७२ ॥
प्रयापद् यक्षसदनं, तमुपालब्धुमादधे । हालाहलं खादयित्वा, मत्प्राण—ध्वंसमिच्छसि ॥ २७३ ॥
कारयित्वा सुधापानं, जरामृत्यपहारकम् । दुर्गन्धं मूत्रगण्डूषं, त्वं कारयितुमुद्यतः ॥ २७४ ॥
दिव्यं भोज्यं परमान्नं, भोजयित्वाऽङ्ग पुष्टिदम् ।

तथापि रे बराक ! त्वं, किं करिष्यसि मां प्रति । ममात्मा चेन्मम वशे, दैवो रुष्टोऽपि किङ्करः ॥ २७५ ॥
इत्युक्त्वा सा जगामैवं, रणसिंहनरेशितुः । गुङ्गरासन्नमुद्यानं, नानापादपसङ्कुलम् ॥ २७६ ॥
स्वीयोत्तरीयवस्त्रेण, तत्र प्रोच्चैस्तरे तरौ । निविडं पाशकं बद्धा, मरणाध्यवसायिनी ॥ २७७ ॥
इति वक्तुं प्रवृत्ता सा, भो भोः कानन देवताः ! सर्वाशानां दिशापालाः !, श्रूयतां वचनं मम ॥ २७८ ॥
स्वेच्छया स्वच्छचित्तेन, रणसिंह वरेच्छया । यक्षश्चिन्तामणिर्दक्षः, समाराद्धोऽर्थसिद्धिदः ॥ २७९ ॥
निर्निमित्तेन तेनाहं, वैरिणा प्राणहारिणा । प्रतारिताऽस्म्यतोऽवश्यं, मरिष्याम्यागसो विना ॥ २८० ॥
वल्लभतमस्य दुस्सह,--विरहानलदह्यमानतनुसदना । प्राणान् कथं धरिष्ये, ततः भृतं जीवितव्येन ॥ २८१ ॥
ततश्चासमसत्त्वाया,--ऐहिकामुष्मिके भवे । स एव प्राणनाथोऽस्तु, रणसिंहपतिर्मम ॥ २८२ ॥
इति प्रोच्य निजे कण्ठे, प्रक्षिप्तोऽक्षुब्धचित्तया । निविडः पाशकग्रन्थि,--र्निजात्मानं मुमोचसा ॥ २८३ ॥



अनुमार्गं प्रलग्नाऽथ, समायासीत्सुमङ्गला । पश्यन्ती सर्वमुद्यानं, लम्बमानां निरीक्ष्य ताम् ॥ २८४ ॥
किञ्चित्किञ्चिन्निःश्वसन्तीं, शाखारोपितपाशिकाम् । हाहारवं तदा घोरं, प्रचक्रे करुणस्वनम् ॥ २८५ ॥

रुदमानस्वरं श्रुत्वा, रणसिंहः समागमत् । मा साहसेति जल्पन् स, तस्याः पाशकमच्छिदत् ॥ २८६ ॥
मूर्च्छया मूर्छिताङ्गीं तां, निमीलितविलोचनाम् । ईषच्छ्वसन्तीं संवीक्ष्या,--ऽकार्षीच्छीतोपचारकम् ॥ २८७ ॥
तालवृन्तानिलैर्वातं, सुधादेशीयजीवनैः । गोशीर्षचन्दनोन्मिश्रै,--रभिषिच्य पुनः पुनः ॥ २८८ ॥
ततः सञ्जातचैतन्यां, तां कुमारः स पृष्टवान् । काऽसि त्वं सुभगे ! भद्रे ?, प्रारब्धं किमु साहसम् ॥ २८९ ॥
तदा सुमित्र मित्रश्च, प्रावादीद्वदतां वरः । स्वामिन्नद्यापि नाज्ञायि, केयं नाम्ना विशेषतः ॥ २९० ॥
सुमङ्गलाऽवदद्दीन ?, गद्गदाक्षरपूर्वकम् । किं कुमार ? शुभाकार ?, विसस्मार तवापि भोः ? ॥ २९१ ॥
माता श्रीकमलिन्येयं, प्रत्ता श्रीभीमराजकुमरस्य । कमलवती लग्नदिनं, मत्त्वा विचिचेष्ट शिष्ठेति ॥ २९२ ॥
ततश्चामृतधारिण्या, कृपामन्थरया दृशा । आलुलोके कुमारेण, सा कनी कनकत्विषा ॥ २९३ ॥
किञ्चिद्विचिन्त्य चित्तेऽथ, सुमित्रः कुमरं प्रति । प्रावादीद् वचनं तथ्यं, द्वयोरानन्ददायकम् ॥ २९४ ॥
स्वामिन्नधुनेन मृटेन, किं विलम्बो विधीयते । क्षुत्पीडितेन संप्राप्तं, परमान्नं हि हीयते ? ॥ २९५ ॥
ततः सञ्जातचैतन्या, सिद्धं प्रेक्ष्य कुमारिका । त्रपावनतवक्त्राब्जा, मज्जन्ती प्रीतिसागरे ॥ २९६ ॥

रोमाञ्चितवपुर्यष्टि,–निस्सीमप्रेममञ्जुला । गान्धर्वेण विवाहेन, परिणिन्येऽथ तेन सा ॥ २९७ ॥
सुमित्रमित्रेण समं, त–मेव पितुर्गृहे । जगाम कमलवत्याख्या, पूर्णस्वीयमनोरथा ॥ २९८ ॥
प्रातर्मित्रोदये जाते, कृतवैवाहमङ्गला । उद्वर्त्तनाङ्गरागश्री,–हारनेपथ्य भूषणा ॥ २९९ ॥
जगामेति जगत्कर्म,–साक्षी सूरोऽस्तपर्वतम् । विचिन्त्य मयि सूरेऽपि, भीमो लब्ध्वा विडम्बनाम् ॥ ३०० ॥
काष्ठास्वष्टास्वपि ध्वान्तं, युगपद् व्यानशेतराम् । सप्रकाशे प्रदेशे हि, विवाहे छद्म लक्ष्यते ॥ ३०१ ॥
ततो भीमः कृतस्नानो, विवाहोचितभूषणः । देदीयमानदानौघो, वाद्यमानस्मरध्वजः ॥ ३०२ ॥
हस्तिमल्लोपमप्रौढ,–हस्तिस्कन्धगतस्तदा । ध्रियमाणसितच्छत्रो,–वीज्यमानप्रकीर्णकः ॥ ३०३ ॥
सुराङ्गनोपमस्त्रैण,—गीयमानः पदे पदे । प्रोत्तार्यमाणलवणः, कृतप्रोञ्छनकोत्करः ॥ ३०४ ॥
विन्यस्त तोरणव्रातं, कृतवन्दनमालिकम् । विवाहमण्डपद्वारं, समागाद् भीमभूधवः ॥ ३०५ ॥चतुर्भिः कलापकम् ॥

इतश्च—

तदा सा कुमरी स्वस्य, पाणिग्रहणदीपकम् । वेषं ददौ सुमित्रस्य, पत्युर्मित्रस्य हर्षतः ॥ ३०६ ॥

मंगं तु तस्य नेपथ्यं, परिधाय नृरूपभाक्। सिंहपार्श्वे समासीना, तेनाप्यालिङ्गिता तु सा ॥ ३०७ ॥
तस्या वेषं समर्पित्य, पाणिग्रहणमण्डपे। आजगाम सुमित्रोऽपि, विवाहकृतमङ्गलः ॥ ३०८ ॥
सुमङ्गलापि तस्या,—स्महाकपट नाटिका। कृटनन्यवधूपान्ते, समागाद् वक्रवाक्यवाक्॥ ३०९ ॥
ततो गणकराजेन, वेदोच्चारपुरस्सरम्। तल्लग्नं साधयामास, संमोदभरचेतसा ॥ ३१० ॥
ततो वैवाहिके कृत्ये, निवृत्ते वासवेश्मनि। भोगाङ्गसारे भीमोऽथ, सवधूको ययौ मुदा ॥ ३११ ॥
सस्नेहलैः सुमधुरैः, कोमलैः कामदीपकैः। वचोभिर्भापयामास, तां नवोढां मुहुर्मुहुः ॥ ३१२ ॥
भृशमालप्यमाणा सा, नो किमप्युत्तरं ददौ। यावल्लज्जावनम्राङ्गी, करस्पर्शो न्यधात्ततः ॥ ३१३ ॥
ज्ञातं पुरा एवैपः, प्रश्नश्चक्रे तदा पुनः। कोऽसि त्वं तव कान्ता ऽस्मि,---नन्योद्वाहांशुकाङ्किता ॥ ३१४ ॥
ततः परं मत्पाणि,--स्पर्शाचिन्त्य प्रभावतः। योषिद्वेषाऽपि पुंवेषा, संजाता ह्येतदद्भुतम् ॥ ३१५ ॥
प्राणप्रिय। तदिदं, माहात्म्यं यद्विजृम्भितम्। पाणिग्रहोत्सवव्याजात्, प्रापिता नररूपताम् ॥ ३१६ ॥
गत्वा तद्ज्ञापयामि स्वौ, पितरौ सत्वरं ततः। सुताऽप्यहं सुतो जज्ञे, कुमारकरसंस्पृशात् ॥ ३१७ ॥

इत्युदित्वा समुत्थाय, रणसिंहस्य सन्निधौ । एत्योवाच स्ववृत्तान्तं, चतुराश्चर्यकारकम् ॥ ३१८ ॥
सुमित्रेणोदिते सर्वो,---दन्ते तस्य पुरो भृशम् । सिंहः प्रियायुतो हस्त,--तालं जाहस्ति कौतुकात् ॥ ३१९ ॥
अवकमलवत्याख्या, कुर्वती हास्य ताण्डवम् । पराङ्मुखस्यान्यनार्याः, स्वामिनः संनिधौ पुनः ॥ ३२० ॥
पराङ्गना त्वं कथं ह्यत्र,—तिष्ठसे गच्छ रे ! बहिः । कैतवा क्रोशनापूर्वं, भर्त्सनं तर्जनं न्यधात् ॥ ३२१ ॥
क्षणमात्रं विलम्ब्याथ, विस्मितो भीमभूपतिः । श्वश्रूश्वशुरयोः पादौ, प्रणम्येति न्यजिज्ञपत् ॥ ३२२ ॥
मातस्त्वत्तनया याऽऽसीत्, सुतो जज्ञे किमद्भुतम् ? । तद्वाक्याकर्णनादेव, स्तब्धाः क्षुब्धाश्च तेऽभवन् ॥ ३२३ ॥
भूपोऽवादीदालमाल,--मेवं जल्पति किं मुधा ? । किं स्यान्नटवदेकस्मिन्, भवे रूपविपर्ययः ॥ ३२४ ॥
विलक्षवदनो भीम,--स्तद्वृत्तान्तोऽन्यसाक्षिकम् । निवेदितस्ततस्तौ हि, चित्तसन्तापतापितौ ॥ ३२५ ॥
विलापं कुरुतो मुग्धा,---वयं धूर्त्तेन केनचित् । घटितोऽपि हि संयोगो,--हा ! दैवेनाऽन्यथा कृतः ॥ ३२६ ॥
वापीकूपवनोद्याना,--रामशून्यालयेष्वहो ! । सभाप्रपाऽन्यभूपौको,--देवालयमठादिषु ॥ ३२७ ॥
गवेषिताऽपि नाद्राक्षीत्, सा यावत्कमलावती । ततो मोह पिशाचेना,--चान्तौ चक्रन्दतुस्तुकौ ॥ ३२८ ॥ युग्मम् ॥

स्फस्नोदग शैलस्य, चूलालम्भ्यभवद्रविः । तयोः करुणयेव स्वान्, करान् वितनुते दिवि ॥ ३२९ ॥
गाने केनापि पुंसोक्तं, रणसिंहान्तिके मया । ददृशे नव्यनेपथ्या, नवोढा कमलावती ॥ ३३० ॥
समाकर्ण्य नृपो भीमो, भ्रुकुटी भीषणाननः । महाकोपारुणः कम्प्र,--कायः प्रस्फुरिताधरः ॥ ३३१ ॥
अनुगः सहस्रमुन्नैः, पतदभ्रधरैर्भटैः । मरुत्पथं बधिरयन्, रणतूर्यरवोत्करैः ॥ ३३२ ॥
नगाङ्गमारूढो, भीमेन्द्रो हस्तिमल्लवत् । सिंहसैन्यं विनिर्जेतु,--माजगाम रणाङ्गणम् ॥ ३३३ ॥
धुरः कमठवेनोऽपि, शराङ्कादिमहद्भटैः । दुर्वारैर्वारणगणैः, संनह्यागान्महीपतिः ॥ ३३४ ॥
सिंहाद्रुणसिंहोऽपि, साहसैकमहानिधिः । सज्जीकृतमहासेनो,-ऽभ्यधावद् भीमभूधवम् ॥ ३३५ ॥
स्वत्सामिथितं जैत्रौ, काङ्क्षन्तौ सैन्ययोद्धयाः । भटानां समरारम्भः, प्रावर्त्तत परस्परम् ॥ ३३६ ॥
मदोद्धुरैर्मत्तमतङ्गजोत्करैः, समं गजानां तुरगैश्च वाजिनाम् ।
भटैर्भटानां रथिनां रथस्थितैः, पुंभिर्धनुष्मन्निकरैर्धनुष्मताम् ॥ ३३७ ॥
दन्ताहता यत्र पतन्ति कुञ्जराः, खड्गैर्विभिन्नास्तुरगा स्तरस्विनः ।
प्रादुर्बभूवोल्बणरक्तवाहिनी, नानाविहङ्गावलिसङ्कुला तदा ॥ ३३८ ॥

पतत्सुभटकोटीनां, लूनमुण्डाम्बुजावली । नृत्यत्कबन्धनालाढ्याः, केशसेवालसुन्दरा ॥ ३३९ ॥ युग्मम् ॥
भल्लिसेल्लकवावल्ल,—भल्लैः सुभटकोटयः । ध्वजातपत्रशफर,—मच्छिदन् राजभूषणम् ॥ ३४० ॥
एतादृक्षे रणे वृत्ते, भग्ने वीरगणेऽभितः । अष्टापद इवोत्तस्थौ, सिंहः शत्रुहरिं प्रति ॥ ३४१ ॥
केषां क्षुरप्रबाणेन, शिरोजान् मुण्डयन्नहो ! । नासिकाश्रवणादीनि, कर्त्तयन्नुरुविद्विषाम् ॥ ३४२ ॥
मूलादु त्खनयन् दाढा,--दन्तानुत्पाटयन् क्षणात् । सन्नाहांस्त्रोटयन् वीर,--स्त्रासयंश्च भयद्रुतान् ॥ ३४३ ॥
परप्रयुक्तबाणौघान्, छेदयन्नन्तरापथि । लुनानः खड्गमुष्टींश्च, कोदण्डानां गुणावलीः ॥ ३४४ ॥
इत्थं प्रतिघ्नन् सकलं, रिपुसैन्यमदीन्य भाक् । बबन्ध भीमभूमीशं, पातयामास पादयोः ॥ ३४५ ॥
श्वशुरं च रथारूढं, चश्वा पुरुषसंनिभम् । आपाशबन्धबद्धं च, कृत्वाऽधार्षीत्तदा नृपम् ॥ ३४६ ॥
प्रेक्ष्य प्रतीक्ष्य क्षितिपं, निस्स्यन्दं निश्चलं ततः । राज्ञोऽग्रेऽकथयत्पुत्र--वृत्तान्तं च सुमङ्गला ॥ ३४७ ॥
अथागत्य च सा पुत्री, निपुणा विपुलाशया । नव्या नववधूवेषा, लज्जावनतकन्धरा ॥ ३४८ ॥
विज्ञाततातवृत्तान्ता, साऽनंसीत्तातपंकजम् । ततस्तातं च भीमं च, बन्धात्सममूमुचत् ॥ ३४९ ॥

ओन्कारं रणसिंहोऽपि, पूज्यत्वाच्छ्वशुरस्य हि । करोति विनयोपेतो, ललाटघटिताञ्जलिः ॥ ३५० ॥
सौन्दर्यसौन्दर्यनातुर्यौ,— दार्यगाम्भीर्यविक्रमान् । कुलादीं स्तद्गुणान् मत्वा, तुष्टः पृष्ठौ करं ददौ ॥ ३५१ ॥
ततो महोत्सवेऽतुच्छे, पर्यणायि शुभेऽहनि । भूपेन कमलवती, रणसिंहस्य धीमतः ॥ ३५२ ॥
भोगभङ्गीं तया सार्द्धं, भुञ्जानः सिंहभूपतिः । कतिचिद्दिनानि तत्राऽऽस्थ, स्वभुजोर्जितवीर्यभृत् ॥ ३५३ ॥
ततः प्रस्थाय मार्गस्थ,— भूपकृत्सोपढौकनम् । सङ्गृह्णन् कौतुकालोकं, कुर्वन्नागात्स्ववेश्मनि ॥ ३५४ ॥
रत्नवत्या विवाहार्थं, प्रस्थितोऽपि पुरात्पुरा । सोमापुर्यां समागच्छ,—न्नन्तरा निपुणो नृपः ॥ ३५५ ॥
लाभेन कमलवत्याः, स्वं कृतार्थममन्यत । यतो लाभेन हृष्यन्ति, देवदानवमानवाः ॥ ३५६ ॥
विषयासक्तयोर्नूनं, भोगभङ्गीभुजङ्गयोः । व्यापारो राजकार्यस्य, प्रत्यूहवदभूत्तयोः ॥ ३५७ ॥
अथ सा रत्नवती च, चिन्तयामास चेतसि । सौभाग्यभाग्यभूः प्राण,—प्रियो राजसुतः सतु ॥ ३५८ ॥
किमद्र पथमागत्य, व्यावृत्य स्वपुरं प्रति । शकुनाभावतो यद्वा, ययौ वा मदभाग्यतः ॥ ३५९ ॥ युग्मम् ॥
आज्ञातमतिगम्भीर,—धीमत्या गोपिता कया । वशीकृतः कटाक्षेणा—ऽऽमूलमन्त्रेण सोऽध्वनि ॥ ३६० ॥

अथ तस्या यदुण्डत्वं, पातयाम्युत्तमाङ्गके । तस्या एवेति मात्रा दी,—नापृच्छ्याकार्य मूषिकाम् ॥ ३६१ ॥
तद्दुःख-दुःखितस्वान्ता, तीव्रसन्तापतापिता । कथयामास साहृत्स्थं, वृत्तान्तं गन्धमूषिकाम् ॥ ३६२ ॥
ततो मूषिकयाऽवादि, चिन्तां पुत्रि किं मा कुरु । मन्मन्त्रास्त्र प्रयोगो हि, दुस्साध्यार्थस्य साधकः ॥ ३६३ ॥
इत्युदित्वा राजगेहा,—न्निरगात्कूटनाटिका । अचिरेणैव कालेन, संप्राप्ता सिंहपत्तनम् ॥ ३६४ ॥
भाग्नेयी कमलवती, तस्या इत्येति याति सा । कुमारान्तः पुरस्यैव,—मभ्यर्णे प्रतिवासरम् ॥ ३६५ ॥
नव्यनव्यकथाख्यानै,--गाथाप्रश्नोत्तरादिभिः । अपूर्व श्लोककाव्यैश्च, रञ्जयामास सा तकाम् ॥ ३६६ ॥
विश्वासपाशपतितो, मुग्धमार्गो यथाऽखिलम् । सुखेन वञ्च्यते तद्व,—न्नृपः सान्तःपुरस्तथा ॥ ३६७ ॥
कुटिलात्मा भुजङ्गीव, पापधीर्गन्धमूषिका । मन्त्र तन्त्रप्रयोगैस्तौ, वशीचक्रे च दम्पती ॥ ३६८ ॥
ज्ञात्वा वश्यं राजलोकं, यत्तत्कथनकारकम् । ततो निशीथसमये, शुद्धान्ताभ्यर्णसंस्थिता ॥ ३६९ ॥
गेहे कमलवत्याश्च, भृत्यव्यापारयोगतः । कूटेनैवापरनर,--प्रवेशोऽदर्शि भूपतेः ॥ ३७० ॥
शीलालङ्कारशालिन्यां, तस्यां सत्याः शिरोमणौ । कलङ्कविषलेशोऽपि, चन्द्रमुख्यां न विद्यते ॥ ३७१ ॥

प्रतीच्यामुदयं याति, रविश्चेच्चन्द्रतो यदि । जायते वह्निवृष्टिश्चे,-त्तरेदब्धौ सुराचलः ॥ ३७२ ॥
कदाचिद् योगिना-ऽथवा दैवानुभावतः । एतदपि भवेन्नूनं नत्वस्याः शीललाञ्छनम् ॥ ३७३ ॥
ज्ञातत्च्छीलमाहात्म्यो, रणसिंहनरेश्वरः । तद्वचो नैव मन्येत, तृणवदपमानितम् ॥ ३७४ ॥
तत्परं तन्मनोऽत्यन्तं, सा विज्ञाय दुराशया । स्वकृतं विफलं मत्वो--पायान्तरमथो न्यधात् ॥ ३७५ ॥
मायाप्रपञ्चं तन्वन्ती, पुनः प्राह नृपं प्रति । धिग् धिग् मे लोचने यत्ता,-न्यनरागमदर्शिनी ॥ ३७६ ॥
अथ मे देहि विवरं, देवि ! दिव्ये वसुन्धरे । प्रविशामि यथा नैव, शृणोमि श्रुतिदुःखदम् ॥ ३७७ ॥
भागिनेय्या अनार्याया,-ईदृशं दुर्विचेष्टितम् । इति श्रुत्वा नृपो दध्यौ, किं पीयूषे विषं भवेत् ? ॥ ३७८ ॥
तथापि भूपतिर्नैव, प्रत्येत्येतत्प्रजल्पितम् । तयोर्विद्वेषणकृते, सावधाना ततोऽभवत् ॥ ३७९ ॥
मूलिकामन्त्रतन्त्रौघ,-योगचूर्णप्रयोगकान्, सा प्रायुङ्क्तान्नपानेषु, ताम्बूलेषु विशेषतः ॥ ३८० ॥
तेषां प्रभावात्तच्चित्त,-स्तन्नेत्रोऽपि नराधिपः, वश्योपि तत्कथालापे, ज्वलति ज्वलदग्निवत् ॥ ३८१ ॥
ततश्चिन्ताप्रपन्नोऽभूद्, भूपालः करवाणि किम् ? किं त्यजामि वने एनां, किं वा देशान्तरं ददे ॥ ३८२ ॥

राज्यलक्ष्मीपरिभ्रष्टां, करोमि किं पितुर्गृहे । जहामि वा श्मशाने वा, विद्वेषण प्रभावतः ॥ ३८३ ॥ युग्मम् ॥
प्रत्ययाप्तं नरं कश्चि,-दाकार्यैकान्तमादिशत् । कृत्वा राज्ञीं रथारूढां, कानने त्वं परित्यज ॥ ३८४ ॥
शिक्षामिवाज्ञां भूपस्य, प्रतीछ्य विनयेन वै । भुजिष्यः सुभगो नाम, सज्जीकृत्य रथं ततः ॥ ३८५ ॥
स्वामिनीं निकषाऽऽगत्य, भृत्यः प्रोवाच तां प्रति । राजेत्याज्ञापयन्नस्ति, गन्तव्यं कानने त्वया ॥ ३८६ ॥
इतश्चावसरे तस्याः, सव्याक्षं स्फुरितं त्वरा । ज्ञातं मारणपर्यन्तोपसर्गः समुपस्थितः ॥ ३८७ ॥
तथापि मे नृपाज्ञैव, प्रमाणं कुलयोषितः । तच्छासनं प्रकुर्वन्त्या— यद्वा तद्वा भवत्वदः ॥ ३८८ ॥
इति ध्यात्वा ततो देवीं, भर्त्तुरादेशपेशला । चिन्ताव्याकुलचित्ताऽपि, रथारोहणमातनोत् ॥ ३८९ ॥
ततः सुवेगेन रथः, प्रेरितः सुमुखेन सः । काननं प्रति गच्छन्ती, पप्रच्छ रथिनं प्रति ॥ ३९० ॥
नाद्यापि वनमायाति, नानापादपसङ्कुलम् । स प्राह स्वामिनि ! त्वं हि, प्रेषिता पितृसद्मनि ॥ ३९१ ॥
निशम्यैतद्वचः कर्ण,— वज्राघातसमं तदा । स्वामिनी चिन्तयामास, भुजिष्यः किं वदत्ययम् ॥ ३९२ ॥
अथवेदृग्विधं कार्य,—मनार्योचितमत्र च । अविचार्याऽपरीक्ष्य हि, पश्चात्तापकरं पुनः ॥ ३९३ ॥

इदनिर्वाणकरणं, किं किरोति महीपतिः। किं वा केनापि दुष्टेना,—ऽदृष्टेन छलितो नृपः ॥ ३९४ ॥युग्मम्॥
एवं विचिन्तयन्ती सा, पाडलीखण्ड सीमनि। समेत्य तं प्रति प्राह, निवर्त्तयत्वितो भवान् ॥ ३९५ ॥
नेऽर्मी तुन्ना, हि तरत,—इदं तत्पाडलीपुरम्। स्वयमेवेतः प्रयास्यामि, छललेशोऽपि नैव ते ॥ ३९६ ॥
ततो देव्याः पादपद्मं, प्रणम्य विनयेन सः। साक्षाल्लक्ष्म्यवतारे ! त्वं, क्षमस्वागः क्षितिप्रथे ! ॥ ३९७ ॥
मया परवशेनैव, चण्डालोचितकर्मणि। प्रवृत्तं पाप्मना यस्माद्, राज्ञामाज्ञा बलीयसी ॥ ३९८ ॥
ग्रंगे मत्पुत्र ! तव, को दोषो राजशासनम्। साधयतो यतो भृत्य,—वृत्तिव्यापारशालिनः ॥ ३९९ ॥
मद्वचसा त्वया वाच्यं, राज्ञोऽग्रे भो भुवःप्रभो !। आवयोः कुलसम्पन्न,—स्नेहयोरेकचित्तयोः ॥ ४०० ॥
आबाल्यकालतोऽन्योन्य,—रिरंसापरवश्ययोः। त्वया कस्योचितं चक्रे, क्रूरकर्मेति साम्प्रतम् ॥ ४०१ ॥
ततोऽश्रुपातेन भुवं, सिञ्चन्तीं तां मुमोच सः। कस्मिंश्चित्पादपाभ्यर्णे, रथादुत्तार्य वर्यतः ॥ ४०२ ॥
स जोन्कारं विधायाश्वं,—चचले सा तरोस्तले। स्थिता प्रलापं दधाना,—मुपालम्भांश्च तन्वती ॥ ४०३ ॥
चिन्तयन्ती स्वापराधान्, सा पाणिग्रहणादितः। इत्यादिकल्पनाजाल—परा, तस्थावधोमुखी ॥ ४०४ ॥

दध्यौ कृतापराधेव, वियोगः स्वल्पदुःखदः । अकृतागसि यस्त्याग,—स्तद्दुःखं सोढुमक्षमा ॥ ४०५ ॥
शैलसारशिलापट्ट,—परुषाग्राह्यचेतसे । क्षणरक्तविरक्ताय, पुरुषाय नमोनमः ॥ ४०६ ॥
अस्यामवस्थापन्नाया,---मम्बे ! त्वमिति वत्सले ! । वियोगतापसन्तप्तां, रक्षमाऽमृतलोचने ! ॥ ४०७ ॥
अथवा याहि रे मातः !, शून्यारण्ये गरीयसि । मद्दुःखश्रुतिलोष्टैर्हृद्दृढ स्फोटो भविष्यति ॥ ४०८ ॥
जायन्ती वर्द्धयन्ती या, परिणीताऽपि पुत्रिका । जनयन्ती पितुश्चिन्तां, सर्वदा दुःखकारिणी ॥ ४०९ ॥
सुपरीक्षितशीलाऽहं, नृपचेतोऽब्जभास्करी । तदत्र कोऽपि क्षुद्रस्य, सञ्चारः पोस्फुरत्य हो ! ॥ ४१० ॥
ततः पितृगृहं नैव, प्रविशामि वसामि वा । अत्रैव पुरुषो भूत्वा, स्वैरमौषधियोगतः ॥ ४११ ॥
यतो योषिज्जनः प्रायः, प्रार्थ्यः सर्वनृणामपि । सिद्धान्नवद् यत्र तत्र, प्रकृत्या सुन्दरत्वतः ॥ ४१२ ॥

यत उक्तम्—

ताम्बूलं स्त्रीकटाक्षाणि, तरुण्यः शर्वरीपतिः । पद्मा पद्माकरक्षीरं, चित्तं कस्य हरन्ति न ! ॥ ४१३ ॥
जगच्छ्लाघ्यं मया शीलं, पाल्यं लाल्यं प्रयत्नतः । विनष्टेऽस्मिन् समं नष्ट,---मैहिकामुष्मिकं फलम् ॥ ४१४ ॥

यतः—

शीलं सर्वगुणाधानं, शीलं दुर्गतिवारणम् । शीलं शाश्वतसौख्यस्य, कारणं गात्रभूषणम् ॥ ४१५ ॥

शीलं निधानं गुणरत्नराशेः, शीलं हि मूलं सुकृतद्रुमस्य ।
शीलं सदाचारविचारहेतुः, शीलं भवोत्तारणसारसेतुः ॥ ४१६ ॥

शीलप्रभावाद्धिकरालकालो,—व्यालोऽपि पुष्पस्त्रजति प्रगन्धी ।
क्ष्वेडं च पीयूपति नीरराशि, र्गोपादति क्षीरति वीतहोत्रा ॥ ४१७ ॥

ततः स्वशीलरक्षार्थं, भूत्वा पुरुषवेषतः । तस्थौ पाडलिपुरतो,—ऽपाच्यां चक्रपुरोत्तमे ॥ ४१८ ॥

बिभ्रती पुष्पवटुतां, चक्रभृद्देवतालये, । श्रीमती कमलवती, मृगाक्षी कमलानना ॥ ४१९ ॥ युग्मम् ॥

इतश्चागत्य सुभगो,—नत्वा कुमरमब्रवीत् । देवीपरित्यागकथां, सकलां च सगद्गदम् ॥ ४२० ॥

ततोऽगतमन्त्रस्य, तन्त्रस्यापि प्रभावतः । कुमारः कुरुते पश्चा,—त्तापं सन्तापदीपकम् ॥ ४२१ ॥

सा जीवति किमद्यापि, मिथ्यादोषेण दूषिता । मया पापात्मना देवी, किं गता पितृमन्दिरे ॥ ४२२ ॥

संप्रत्यहं कथं श्वश्रूवो,---दर्शयिष्ये स्वामाननन् । धिग् मे पौरुषत्वस्य, येनैवं चिन्तितं मया ॥ ४२३ ॥
दुर्ध्यानं ध्यायतस्त्वेवं, हृत्स्फोटः किं न मेऽभवत् । किं वा जिह्वा न तुत्रोट, यया दुर्जल्पितं तदा ॥ ४२४ ॥
किं वा गगनाङ्गणत,---श्चक्रं वज्रोपमं च शतधारम् ।
किं नो पपात मूर्द्धनि, शतखण्डं येन मे न स्यात् ॥ ४२५ ॥
या गन्धमूषिका पापा, दुर्गता साऽपि निर्गता । प्रदरी दृश्यते नैव, यया ह्येवं विचेष्टितम् ॥ ४२६ ॥
ततः श्रीरणसिंहोऽपि, ध्यातवानसि चेतसि । विद्वेषोच्चाटनपरा, कृत्वैवं कुत्र सा गता ॥ ४२७ ॥
साऽथ सोमापुरीं गत्वा, रत्नवत्या पुरस्तया । समाचचक्षे न्यक्षेण, वृत्तमामूलचूलतः ॥ ४२८ ॥
श्रुत्वा संमोदसंसर्पद्धृदया साऽभवत्तदा । ततो गत्वा नरेशस्य, पितुरग्रे प्रमद्वरा ॥ ४२९ ॥
इत्युक्त्वा प्रेषयामासा,---ऽमात्यानाप्तान् सभक्तिकान् । सिंहपार्श्वं समागत्य, ते प्रोचुर्नृपशासनम् ॥ ४३० ॥
त्वयि दत्तैकचित्तायाः, प्रीतायास्तव दर्शने । रत्नवत्या विवाहाया,—गन्तव्यं कुमरस्त्वया ॥ ४३१ ॥
ततश्चाभाणि सिंहेन, नैव जानाम्यहं पुनः । सर्वार्थसाधको राजा, ज्ञाता कनकशेखरः ॥ ४३२ ॥

ततो जोत्कृत्य निर्गत्य, भूपोपान्तं समेऽगमन् । तं नत्वा विनयोपेताः, पुरुषोत्तमजल्पितम् ॥
सर्वं विज्ञपयामासु,, पुरः कनकशेखरम् ॥ ४३३ ॥ षट्पदः ॥
राजंस्त्वदङ्घ्रिं पश्यतो, वलितः कुमरोत्तमः । तद्दिनाद् रत्नवत्येषा, तस्या शय्यैव संस्थिता ॥ ४३४ ॥
साम्प्रतं प्रणयत्वेनं, कुमारं मारसंनिभम् । इति श्रुत्वा नृपोऽवादीद्, भागिनेयी तु सा मम ॥ ४३५ ॥
ततो भूपेन मित्रस्य, तदुक्तं भणितं तदा । स्वसुताया इवोद्वाह,---स्तस्याः कार्यो मयैव हि ॥ ४३६ ॥
स तदादेशतः सर्वाभिसारेण बलान्वितः । शुभाह्न शुभलग्ने च, प्रतस्थे विहगोत्तमे ॥ ४३७ ॥
कतिभिर्वासरैः प्राप, चक्रपूर्वाख्यकाननम् । निवेश्य वाहिनीं याति, स्वयं चक्रभृतोऽर्चने ॥ ४३८ ॥
ततश्च स्फुरितं तस्य, दक्षिणाक्षेण सत्वरम् । ततश्च तेन विज्ञातं, प्रियमेलो भविष्यति ॥ ४३९ ॥

उक्तञ्च---
शिरसः स्फुरणे राज्यं, सव्याक्षस्य प्रियागमः । दोः स्फुरणे प्रियजन---वल्लभालिङ्गनं भवेत् ॥ ४४० ॥
पुष्पाणि पुष्पबटुकः, कुमारस्य कराम्बुजे । दिव्यानि पञ्चवर्णानि, दत्त्वा मूल्यं यथेप्सितम् ॥ ४४१ ॥

लात्वा तानि महर्घ्याणि, पूज्यान् पूजयितुं तदा। सिंहः प्रवधूते यस्मात्, सन्तः सूचितकारिणः ॥ ४४२ ॥
बटुः प्रत्यभिजानाति, भर्त्ता मे एवं सिंहराट्। पुना रत्नवती पाणि,--ग्रहणाय प्रतस्थिवान् ॥ ४४३ ॥
सिंहोऽपि प्रेष्यते दध्यौ, विस्मयस्मेरमानसः। किमेषा कमलवती, मच्चित्तानन्ददायिनी ॥ ४४४ ॥
ततः पूजां विधायोच्चै,--र्निवृत्तः स्वाश्रये बटुम्। निमन्त्र्यातिथि भुक्त्यर्थं, पूर्वप्रेमाणुभावतः ॥ ४४५ ॥
अग्रासने निवेश्यैनं, भोजयामास भक्तितः। नानाविधाशनैः खाद्यैः, स्वाद्यैर्घोलान्तभोजनैः ॥ ४४६ ॥
ततो दिव्यानि वासांसि, नानाऽलङ्करणानि च। दापयामास तस्मै स,—भूमिदेवाय सादरम् ॥ ४४७ ॥
प्रोक्तं व्यक्तं च भो भूमिदेव ! त्वां पश्यतो मम। निर्निमेषदृशौ तृप्तिं, नाप्नुतः केन हेतुना ? ॥ ४४८ ॥
विप्रः पठति खल्वेवं, कस्य कोऽपि सुखप्रदः। चन्द्रोदये भवेद्वृद्धि,—भाजी वार्द्धिर्न चाऽपरः ॥ ४४९ ॥
कुमारः प्राह भो विप्र !, गन्तव्यं त्वग्रतो मम। त्वत्स्नेहपाशसम्बद्धं, नैवं गच्छति मन्मनः ॥ ४५० ॥
ततः प्रसादमाधाय, मत्सार्थे चलताद्द्विजः। मोक्तव्योऽत्र समानीय, पुनस्त्वं निश्चितं मया ॥ ४५१ ॥
विप्रः प्रोवाच भो राजन् ! यक्षार्चनविधौ मम। प्रत्यूहं मा विधेहीति, भृतं मे वाचयाऽनया ॥ ४५२ ॥

पुनः शंसान कुमारः, ममेतव्यं त्वया किल । त्वां विना नैव गच्छामि, पादमात्रमपीत्यतः ॥ ४५३ ॥
ततोऽमात्यादिभिर्लोकैः,—विज्ञाय नृपनिश्चयम् । स तथा भणितो नूनं, चचाल चतुरो यथा ॥ ४५४ ॥
कुमारो भूमिदेवेन, साकं क्रीडति गच्छति । भुङ्क्ते स्वपिति जागर्त्ति, करोति प्रतिबिम्बवत् ॥ ४५५ ॥
द्विजातिनैव तद्वाच,—भाषणार्थं कदाचन । रहस्युक्तं कथं खेदं, धत्से देवीकृतेऽन्वहम् ॥ ४५६ ॥
कुमारः प्राह भूदेव !, देव्याः किं वर्णयाम्यहम् । निस्सीमरूपलावण्य,—कलाकौशलसम्पदः ॥ ४५७ ॥

किं बहुना विधिनेयं, विनिर्मिता निर्मलाऽणुदलिकगणैः ।
चन्द्रकलेव कलङ्कैः, मुक्ता या देवतातिशया ॥ ४५८ ॥

तां विना सकलं विश्वं, शून्यं पश्यामि साम्प्रतम् । किं पुनः प्रीतिजननै, चित्तं विश्राम्यति त्वयि ॥ ४५९ ॥
द्विजेनाऽभाणि भो भूप !, मा ताम्यतां हि तत्कृते । दैवेनापहृतं सर्वं, दुष्कृतं तव साम्प्रतम् ॥ ४६० ॥
ततः प्रयाणैरच्छिन्नैः, सिंहः सोमापुरीं ययौ । चतुरङ्गचमूरागात्, संमुखः पुरुषोत्तमः ॥ ४६१ ॥
समुल्लसत्पताकौघे, समुच्छ्रितसुतोरणे । परमोत्सवेन राज्ञा सः, सोमापुर्यां प्रवेशितः ॥ ४६२ ॥

विचित्रोल्लोचसंयुक्ते, सुधाधवलितोत्तमे । प्रासादे स्थापयामास, कुमारं पुरुषोत्तमः ॥ ४६३ ॥
दैवज्ञदत्तसल्लग्ने, जाते माङ्गल्यनिःस्वने । सिंहेन रत्नवत्याश्च, वृत्तमुद्वाहमङ्गलम् ॥ ४६४ ॥
ततो हरिकरिग्राम,—पुरस्वर्णाद्यलङ्कृतीः । तदा विश्राणयामास, तस्मै श्रीपुरुषोत्तमः ॥ ४६५ ॥
कतिचिद्दिनानि तत्रास्थात्, कथाकौतूहलादिभिः । द्विजेन रत्नवत्या च, समं सौख्यं समुद्वहन् ॥ ४६६ ॥
अन्यदाऽवसरे प्राप्ते,--ऽपृच्छद् रत्नवती पतिम् । कीदृक् सा कमलवती, मृताऽपि त्वन्मनोहरी ॥ ४६७ ॥
सोऽवोचत्पूर्वमागच्छन्, त्वत्पाणिग्रहणेहया । नानामनोरथैरद्य,–निगमाद्वालितो यया ॥ ४६८ ॥
रम्भा-गौरी-रति-प्रीति,--कमलाद्या अनेकशः । या अभूवन् तकास्तस्याः, कलां नार्हन्ति षोडशीम् ॥ ४६९ ॥
ततः केनोपमानेन, तत्स्वरूपं त्वदग्रतः । निरूपयामि हे देवि !, सर्वातिशयसुन्दरम् ॥ ४७० ॥
किञ्च दुर्विधिना चक्रे, मम दुर्दैवयोगतः । आवयोर्विरहस्तेन, परिणिन्ये मया त्वकम् ॥ ४७१ ॥
स्वादिष्टं मृत्युहृद् याव,--न्नाप्यते परमामृतम् । तावत्तृपापहं वारि, नो पीयेत तृषार्दितैः ॥ ४७२ ॥
ततश्च रत्नवत्याख्यत्, सामर्षं स्वाभिमानतः । सोल्लासं प्रति पृथ्वीशं, निश्शेषनिजचेष्टितम् ॥ ४७३ ॥

यथा हि गन्धमृगाणां, श्रवणं विद्रप्रयोगतः । परपुंसः प्रवेशश्च, विद्धे पोश्चाटनादिकम् ॥ ४७४ ॥
तत्सारं कुमगम्यर्थं, तयाऽऽस्यातं निशम्य च । तदोपं तन्मुखैनैवा,--ऽङ्गीकार्यं निर्वृताऽभवत् ॥ ४७५ ॥
कलङ्कपङ्कं प्रक्षाल्य, कष्को वा नोज्ज्वलो भवेत् । तच्छ्रुत्वा रोषताम्राक्षो,--भृकुटीविकटाननः ॥ ४७६ ॥
मागराणां स्तनतीं, निर्भर्त्स्यं च ततो नृपः । मद्दृष्टिपथतो दूरं, गच्छ गच्छ विशाधमे ! ॥ ४७७ ॥
आः पापे ! किं त्वयाऽकारि ?, दुष्कृत्यं श्वपचोचितम् । विक्षेपागाढदुःखौघे, ययात्मा नरकावटे ॥ ४७८ ॥
दानमानादिभिर्नारी, मानिताऽपि स्वभावतः । आसक्तिं क्वापि नोधत्ते, स्त्रीचरित्रं हि दुस्तरम् ॥ ४७९ ॥

यत उक्तम्—

प्राप्तुं पारमपारस्य, पारावारस्य पार्यते । स्त्रीणां प्रकृतिवक्राणां, दुश्चरित्रस्य नो पुनः ॥ ४८० ॥
नितम्बिन्यः पतिं पुत्रं, पितरं भ्रातरं क्षणात् । आरोपयन्त्यकार्येऽपि, दुर्वृत्ताः प्राणसंशये ॥ ४८१ ॥
ततोऽलीककलङ्केन, तदा निर्धाटिता मया । ततोऽपमानतो देवी, पञ्चत्वं प्राप सत्वरम् ॥ ४८२ ॥
भो भो भृत्याः ! समानीय, काष्ठानि कुरुत स्वयम् । मत्प्रासादप्रतोल्यां हि, सुसज्जां महतीं चिताम् ॥ ४८३ ॥

तत्पापमलिनात्मानं, शोधयामि निजं ततः । ज्वालाजालकरालेऽपि, चिताग्नौ सर्वसाक्षिकम् ॥ ४८४ ॥
इत्याज्ञां प्राप्य भूपस्य, भृत्यैस्तत्साधनोद्यतैः । चितां कृत्वाऽतिकृच्छ्रेण, ते सिंहाय न्यजिज्ञपन् ॥ ४८५ ॥
ततः स सपरीवारः, प्रतिषिद्धोऽपि भूपतिः । कदाग्रहग्रहग्रस्तः, प्रचचाल चितां प्रति ॥ ४८६ ॥
तदा नृपोक्तं विज्ञाय, पौरलोकैस्तिरस्कृता । निकृष्टचेष्टयाऽऽविष्टा, पापिष्टा गन्धमूषिका ॥ ४८७ ॥
एतस्याश्चेष्टितं ह्येत,–देतन्मूर्द्धिपतत्तरम् । इत्युदित्वा जनैः सर्वै,–र्निन्द्यमाना पदे पदे ॥ ४८८ ॥
लूनपुच्छश्रुतिद्वन्द्व,–खरारूढां विधाय ताम् । विगोप्य लोकप्रत्यक्षं, राज्ञा निर्वासिता पुरात् ॥ ४८९ ॥
यतो नारीजनोऽवध्य,–इत्यतो रणसिंहराट् । मन्त्रिसामन्तभूपाद्यै,–र्वार्यमाणो मुहुर्मुहुः ॥ ४९० ॥
मरणैकाग्र्यरसिक,–श्चितादेशमशिश्रयत् । जातो हा हा रवोदग्रः, सर्वत्र नगरे तदा ॥ ४९१ ॥
श्वेतांशुगन्धमाल्यादि,–भूषणैर्भूषितो नृपः । कमलवत्यनुरागाद्–रक्तचित्तस्तदाऽभवत् ॥ ४९२ ॥
चितां प्रविष्टः कुमरः, यावद्ऽग्निः प्रगुणीकृतः । पुरुषोत्तमभूपेन, विज्ञप्तो वाडवस्तदा ॥ ४९३ ॥
भो ! तवायं परं मित्रं, त्वद्वचोलङ्घनाक्षमः । तेन त्वया तथा वाच्यो, यथा पापान्निवर्त्तते ॥ ४९४ ॥

ततः स्मित्वा कुमारेण नाटकस्वरूपे कथिते । सोऽवादीत् । सा ममैव प्रिया घटते । द्रुतं गम्यतेऽहं तां पश्यामि । ततो यावत्तौ यक्षद्वारं गतौ तावन्नाट्य विसर्जितम् । धर्मदत्तो हस्तौ घर्षयन् पुनः पुनः पप्रच्छ । सा कियन्माना किंकुर्वाणा[किंवर्णा]किं वयोनुमाना दृष्टा कुमारेण स्वरूपे प्रोक्ते सोऽवक् । स्वर्णपुरुषेणालम्,तां मम प्रियामेव वालय । अथ प्रभाते देवाचकेन द्वायुद्घाटितायां धर्मदत्तस्य कथयित्वा कुमारो यक्षाग्रे दर्भस्रस्तरे निविष्टः तृतीयोपवासे रात्रौ सिंहसर्पादिभिः क्षोभणपूर्वकं कुमारे निश्चले सति यक्षः प्रत्यक्षोऽभूत् । किं याचसे?। तेनोक्तम्--धर्मदत्तप्रियामर्पय । यक्षेणोक्तम् । सा मम प्रियावश्यं मया दातुं न शक्यते एषा कथ त्वदीया । शृणु--एकदाहं मत्प्रिया च रात्रौ क्वापि वने प्राप्तौ । तत्र सा दिव्यरूपा सुप्ता दृष्टा । यक्षिण्याहमुक्तः, मानवी क्वापीदृशी रूपेण न दृश्यतेऽतोऽपहृत्य मेऽर्पय । ततः सा तस्यै समर्पिता,अत्रार्थे नाहं वेद्मीत्युक्त्वा क्षणेन यक्षोऽदृश्योऽभूत् । कुमारेण चिन्तितं, "धिग् देवादयोऽपि स्त्रीवश्या एव " । अथ यक्षिणीमुद्दिश्य तपः करिष्ये । यतः ॥ यद्दूरं यद्दुराराध्यं, यच्च दूरे,

ष्यवस्थितम् । तत्सर्वं तपसा साध्यं, तपो हि दुरतिक्रमम् ॥५०॥ इति विचिन्त्य तामुद्दिश्य ष-
ट्युपवासाः कृताः । ततः सा कम्पितासनाकुला प्रत्यक्षीभूय बभाषे—वत्स ? किमेवं साहसं
कुरुषे ? । कुमारेणोक्तम्--सैवार्प्यताम् । ततो यक्षिण्याऽनिच्छन्त्या बलादपि सार्पिता । कुमारेण
धर्मदत्त आहूय प्रोक्तः, एषा ते प्रिया भवति । सोऽपि तां दिव्याभरणदुकूलशोभितां स्वप्रियां
वीक्ष्य हृष्टः । पुनः कुमारेणोक्तम्—चल यथा स्वर्णनरोऽपि दीयते इत्युक्त्वा तत्र स्मशाने स-
मेत्योक्तम्--अत्र त्वं खन । तेन खातम् । निर्गतो देदीप्यमानः स्वर्णपुरुषः । धर्मदत्तेनाचिन्ति,
उवयारह उवयारडओ, सहुए कोइ करेइ। विण उवयारह जो करइ, विरलो जणणी जणेइ।५१। एवंविध
उपकर्ताऽयमेव कुमारो नान्य इति क्षणं विमृश्योक्तम्--हे कुमार? पुनः किञ्चिद्याचे, तेनोक्तमथ
किं? मम वाक्यं व्यर्थं न कार्यमित्युक्त्वा धर्मदत्तोऽवक्--स्वर्णनरं त्वमेव गृहाण। कुमारेणोक्तम्-
कुतो हेतोः । तेनोक्तम्--वणिगहं नायं मे घटतेऽस्याग्रहं कुर्वति सति कुमारेणोक्तम् । तर्हि-
(याचस्व) यावद्रोचते तावन्मात्रं स्वर्णं स्वर्णनराद् गृहाण । तेन छित्वा गृहीतम् । कुमा-

रोऽपि गलशीर्षमात्रं स्वर्णनरमुत्पाट्य सङ्गोप्य गृहं ययौ । राज्ञो मिलितः पृष्टं च तस्य कार्यसिद्धिर्जाता,? जातेत्युक्त्वा स्वर्णनरवार्तामपि न कथयामास । राज्ञाऽपि न पृष्टम् । राज्ञः किं सैव चिन्तास्ति । अथ धर्मदत्तेन स्वर्णनरात् षोडशकोटिमानं स्वर्णं प्राप्य वनस्थेनैव महान्तं सार्थं कृत्वा स्वगृहे वर्धापकः(पनकं)प्रेषितः (तं)ततः सर्वस्वजनैः सम्मुखं समेतैर्महोत्सवेन गृहं प्राप्तः । सर्वेऽप्याश्रितलोकास्तं सिषेविरे । यतः--संपदि सपदि घटन्ते कुतोऽपि संपत्तिसहभुवो लोकाः। वर्षाभूनिवहा इव, काले कोलाहलं कृत्वा॥५२॥ वयोवृद्धास्तपोवृद्धा,ये च वृद्धा बहुश्रुताः । सर्वे ते धनवृद्धस्य, द्वारे तिष्ठन्ति किङ्कराः ॥५३॥ यस्यास्ति वित्तं स नरः कुलीनः, स पण्डितः स श्रुतवान् गुणज्ञः। स एव वक्ता स च दर्शनीयः, सर्वे गुणाः काञ्चनमाश्रयन्ति॥५४॥ अथ यशोधवलेन राज्ञा चन्द्रधवलस्य राज्यं दत्वा दीक्षामादाय शिवसौख्यं प्रपेदे । चन्द्रधवलोऽपि राज्यं प्राप्य स्वर्णपुरुषं प्रकटयित्वा विश्वमदरिद्रीकृत्य चन्द्रसंवत्सरं प्रवर्त्तयामास तस्यान्यदा धर्मदत्तः स्मृतिमागात प्रभाते मन्त्रिणं प्रेष्य सबहुमानमाहूतः । स सभां प्राप्तः ।

राज्ञा बहुमानं(नो)दत्तम् (त्तः)। स्वदत्तेनैव स्वर्णनरेण सर्वत्र यशो मेऽस्ति। ततः सर्वव्यवहर्तृमध्ये श्रेष्ठिपदं दत्तं धर्मदत्तस्य, स च स्वगृहं ययौ। नित्यमागच्छतोऽस्य पार्श्वे राज्ञा पृष्टं प्रीत्या। तव कियद्धनम्। तेनोक्तम्-स्वामिन्? महत्कौतुकं वर्तते। श्रूयताम्, तस्मिन्नवसरे स्वर्णनरात् स्वभावे (स्वमाने) नैव षोडश स्वर्णकोट्यो गृहीताः। साम्प्रतं च जलस्थलव्यवसायं कुर्वतो मे लेख्यककरणे ता एव षोडश कोट्यो दृश्यन्ते। तेन विशेषवन्तं व्ययमपि कर्तुं न शक्नोमि। कारण ज्ञानिनो विदन्ति। इति वार्तां कुर्वतोरेव तयोः प्रतीहारयुक्तेन वनपालेनोक्तम्--श्री धनसागरसूरयो ज्ञानिनः समेताः। राजा धर्मदत्तश्च सपरिच्छदौ गुरून्नन्तुं वनं जग्मतुः। पञ्चाभिगमैर्गुरवो वन्दिताः। तैर्धर्मोपदेशो दत्तः। राज्ञा पृष्टम्?-प्रभो? धर्मदत्तेनोद्यमः कृतः स्वर्णनरस्तु मद्गृहे। अस्य च ता एव षोडश कोटयः। को हेतुः। यावद् गुरवो वदन्ति तावदेका मर्कटी वृक्षादुत्तीर्य गुरून् परितः पुनःपुनः बभ्राम ननर्त च। राज्ञोक्तम्-षोडश-कोटीवार्ता पश्चात्कथ्यताम्। मर्कटी कुतो नृत्यति?। गुरुणोक्तम्-विषमो मोहो विषमा च

भवितव्यता । एष धर्मदत्तो जामाता । एषा चास्मत्पुत्री धनवती माता धनश्रीनामा, केचिदिति श्रुत्वा धाविताः । पुरान्तर्गत्वा धनवत्यै प्रोचुस्तव पिता गुरुश्च प्राप्तोऽस्ति। साऽपि तत्क्षण तत्रागता, अश्रूणि क्षरन्ती गुरून् ववन्दे प्रोचे च किमिदं स्वरूपम् ?। ' गुरवः प्राहुर्यदा प्रवहणं भग्नं तदा हस्ते फलकं लग्नम् । तदाधारात्तरन्नवभिर्दिनैस्तटं प्राप्तः पुरमेकं तव पिताऽहं यावता ददर्श तावदेको विप्रो 'हे धनसागर ? आगच्छ आगच्छ इति जल्पन् मां सविस्मयं गृहीत्वा निजगृहमगात् । तेन मम भक्तिर्महती कृता । त्वत्पित्रा द्विजः पृष्टः( मया प्रोक्तं द्विज!)–किमर्थं भक्तिः क्रियतेऽहं तु त्वां नोपलक्षयामि। तेनोक्तम्–शृणु । इदं शङ्खपुरं नगरम् । अहं जिनशर्मनामा जैनो द्विजो ज्ञेयः, अपुत्रेण मया कुलदेवताराध्य पुत्रं याचिता । तयोक्तम्–तव निकाचितं कर्म पुत्रो न स्यात् । मयोक्तम्–अपुत्रस्य गतिर्नास्ति । स्वर्गो नैव च नैव च। तस्मात्पुत्रमुखं दृष्ट्वा। पश्चाद्धर्मं समाचरेत्॥५४॥इत्यादि कथकश्लोकवन्मम मनसि विभ्रमो नास्ति । परं मे विद्या उच्छित्तिं यास्यन्त्येष एव विषादः। तयो-

(दे०यो)क्तम्–कमलपुरवासी भग्नप्रवहणो धनसागरो नवदिनैरत्र समुद्रतटे समेष्यति । स स्वगृहमानेयः, सर्वा विद्या देयाः । एकवारश्रुतं ते सर्वं तस्य समेति । एवं त्वमनृणो भविष्यसि । तस्य च स्वपुत्री देया ।इत्युक्त्वा देवी गता ततस्तव भक्तिः क्रियते । इत्युक्ते तेन मया त्वत्पित्रा सर्वविद्या गृहीताः । तत्पुत्री च पाणौ गृहीता । कियति काले विप्रः कृताराधनः समाधिना परलोकमाप । त्वत्पितुस्तत्र द्विजपुत्र्यां ( एतत्पुत्र्यामेव ) पुत्रोऽभूत्तस्य धनद इति नाम कृतम् । यावत्स अष्टवार्षिको जातः तावता सर्वविद्या ग्रहीतुं लग्नः । एवं कियति काले गच्छति तत्र श्री अजितसिंहसूरयः समेतास्तत्पार्श्वे द्विजपुत्रीयुग् व्रतमादाय गुरुदत्तसूरिपदः सोऽहं समेतोऽस्मि । सैषा तु त्वन्माता समुद्रजले कृतार्तध्याना मृत्वा मत्स्योभूयात्र मर्कटी जाताऽस्मान् दृष्ट्वा पूर्वस्नेहादागत्य परितो भ्रमति नृत्यति च । इति श्रुत्वा धनवती मर्कटी वीक्ष्य वीक्ष्य हा मातस्तव किं जातमिति जल्पन्त्यश्रूणि मुमोच । गुरुभिरुक्तम्–ईदृगेव विषमो भवोदधिर्वर्तते । अत्र (अमुत्र) पुण्यमेव कृतमुद्धरति ।यतः। मानुषं भवमवाप्य दक्षिणावर्तशङ्ख

वदमुं भवाम्बुधौ ( वदिहातिदुर्लभम् )। पूरयेत्सुकृतगाङ्गवारिणा क्रूर (पाप) वृत्तिसुरया न चोत्तमः ( क्रूरवृत्तिमपसार्य पण्डितः ) ॥ ५५ ॥ अथ राज्ञोक्तम्–प्रभो ? पूर्वपृष्टस्य षोडशकोटीप्रश्नस्योत्तरं दीयताम् । गुरवः प्राहुः--श्रूयतां कलिङ्गदेशे काञ्चनपुरे लक्ष्मीसागरो नाम श्रेष्ठी । तस्य लक्ष्मीवती प्रिया । परं लक्ष्मीरेवाभूत् (न) तथापि स सम्यक् सर्वज्ञधर्मं करोति उभयवेलं प्रतिक्रमणम् । प्रतिवेलं सामायिकम् । पर्वसु पोषधम् । पारणे संविभागं च न मुञ्चति । परं संविभागेऽतीचारानानयति । कदाचित् शर्करादिकं स्वयं ग्रहीतुमनाः साधुभ्यो दातुमनिच्छुः सचित्ते वस्तु निक्षिप्तं करोति १ । सचित्तेन वस्तुनः पिधानं करोति २ । कालातिक्रमे वा साधूनाह्वातुं समेति ३ । इदं परकीयमस्ति यदि कल्पते तदा गृह्यताम् । साधवो वदन्ति–न कल्पते । स वक्ति–मम किं (वदन्तु)। ते वदन्ति तव मुत्कलम् । ततः स तद्भुङ्क्ते ४ । कदाचिन्मत्सरं वा धत्ते ५ । एवं कुर्वतस्तस्य नेष्टापरस्य दिना यान्ति । अन्यदा कोऽपि सार्थो वसन्तपुरं प्रति चलितुं लग्नः । केऽपि सुहृदो लक्ष्मीसागरं

प्रोचुः–सज्जीभव । शकटं बलीवर्दादिसंयोगं कारयिष्यामः। किञ्चित्त्वमपि कुरु । इत्युक्ते सोऽपि सज्जोऽभूत् तावता सार्थोऽचलत् । तेऽपि भृतशकटाः पृष्टतश्चलिताः । क्वापि सतृणप्रदेशे स्थिताः रात्रौ, लक्ष्मीसागरेण निःसम्बलेन (निश्चलेन) पाश्चात्यरात्रौ सामायिकं कृतम् । यावत्परमेष्ठिस्मरणं करोति तावता सार्थिकाः प्रबुद्धाश्चलत चलतेति वदन्तः शकटानि युञ्जन्ति स्म । लक्ष्मीसागरेण पूर्वं खुत्कृतम् । तेष्वतिष्ठत्सु प्रोक्तम्–भो मम सामायिकमस्ति, इति श्रुत्वा केचिद्दूचिरे । केयं सामायिकवेला, प्रयाणं दूरे, वृषभा अत्र क्षुधा म्रियन्ते युङ्क्त भो इत्युक्त्वा शकटानि योत्रितानि । ये क्षणं दाक्षिण्येन स्थितास्तेप्यूचुर्वयमग्रे चलितान् स्थापयिष्याम इति मिषेण तेऽपि चेलुः । श्रेष्ठिना चिन्तितम्–अहो सार्थकाः शकटेन यात्रया पुण्यं न स्यादेव भव्यमिदानीतनं सामायिकं मे जातम् । अथ यद्भवति तद्भवतु । एवं चिन्तयन् तत्पूर्णं कृत्वा श्रेष्ठी शकटं योत्रयित्वा यावदग्रे गन्तुं प्रवृत्तस्तावदग्रे बुम्बारवोऽभूत् (जातः)श्रेष्ठिना चिन्तितम् । मम पुण्यं कृतं जातम् । अथ यद्भावि तद्भवतु इति चिन्तयन्नग्रे गतान्निजसार्थिकान् दिगम्बरानागच्छतो दद-

शं। तेऽप्यूचुः। भोस्त्वं धन्यः पुण्यं फलितम्। अस्माकमग्रे धाटकं मिलितम्। ईदृशाः कृत्वा मुक्ताः ततः श्रेष्ठिना तेषां वस्त्रादिकं दत्तम्। तेषु रक्षापालेषु श्रेष्ठी स्वगृहमागात्। तावता गृहीतं वस्तु तत्रैव महार्घ्यं [घं]जातम्। तेनैव च वस्तुना विक्रीतेन महाँल्लाभोऽभूत्। ततः श्रेष्ठिना शकटेन यात्रानियमो गृहीतः। गृहस्थितस्यैव व्यवसायं कुर्वतोऽस्य लक्ष्मीरपि शनैः शनैः प्रचुराभूत्। कियति काले तस्य लक्ष्मीचन्द्रो नाम पुत्रोऽभूत्। स च यौवनं प्राप्तः। तस्य विवाहसामग्र्यां क्रियमाणायां मध्याह्नावसरे श्रेष्ठिनो देवपूजां कुर्वतः केऽपि साधवस्तद्गृहे विहर्तुं प्राप्ताः। श्रेष्ठिना देवान्पूजयित्वा प्रोक्तं कापि गृहे दात्री वर्तते। तदा तत्र स्थितेन लक्ष्मीचन्द्रेणोक्तम्—ताताहमेवास्मि। तदा पृच्छ के साधवः, पृष्टे सति तैरुक्तम्—अद्य श्रीधर्मघोषसूरयः पञ्चशतपरिवाराः समेतास्तदीयावावां शिष्यौ। तदा श्रेष्ठिनोक्तम्—पहसंतगिलाणेसु, आगमगाहीसु तह कया लोए (पारणए तह य लोयकम्मे य)। उत्तरवारणगंमिय, दाण च बहुफलं होइ ॥५६॥ अतः कारणात् वत्स लक्ष्मीचन्द्र ? साधुभ्यां षोडशमो-

मद्विवाहे मोदकाः कृताः अत
दकान् देहि । साधवो बहवः सन्तीति लक्ष्मीचन्द्रेण चिन्तितम्--मद्विवाहे मोदकाः कृताः अत एव ममैव लाभ इति हर्ष[पि]तोऽसौ तैरगणितैरेव स्थाले भृत्वा समेतः । साधौ न न कुर्वति ते सर्वेऽपि तेन दत्ताः । श्रेष्ठिना पुनः पृष्टम्--वत्स ? षोडश मोदका दत्ताः । तेनोक्तं-हुं इति। श्रेष्ठिना तावन्मात्रमेव पुण्यमुपार्जितम् । पुत्रेणागणितदानात्पूर्णं पुण्यं चोपार्जितम् । ततः साधू गतौ विवाहो जातः । अथ तौ पिता पुत्रश्च पूर्णमायुर्भुक्त्वा शुभध्यानेन सौधर्मे सुरा जातौ । ततश्च्युत्वा पितृजीव एष धर्मदत्तोऽभूत् । संविभागेऽतीचारभावात् अन्तरेऽन्तरे दुःखं प्राप्य पश्चात् षोडशमोदकपुण्यानुमोदनेन षोडशस्वर्णकोटीशोऽभूत् । पुत्रजीवस्त्वं राजाऽक्षयस्वर्णनरभागभूः । इति श्रुत्वा राजाऽचिन्तयत् ।"धर्म एव सदा येषां, दर्शनप्रतिभूरभूत्। क्वचित्यजति किं नाम, तेषां मन्दिरमिन्दिरा॥५७॥" परं मोक्षं विनाऽक्षयसौख्यं न भवतीति गुरूनूचे--प्रभोऽपारभवपारावारतारणाय चारित्रपोतं मे देहि । राज्यचिन्तां कृत्वा आगच्छामि । गुरुभिरूचे--मा प्रमादीः । ततो राजा गृहमागत्य भोजनानन्तरममात्यमाहूय बभाषे--

राज्यं कस्य देयम्। तेनोक्तम्--जलधिजलमपेय पण्डिते निर्धनत्वम्। धनवति कृपणत्वं, भाग्यहीने सु(स्व)रूपं।स्वजनजनवियोगो निर्विवेको विधाता शशिनि खलु कलङ्कः कण्टकाः पद्मनाले॥५८॥ इति न्यायात्तव संवत्सरप्रवर्तकस्यापि पुत्रो नाभूत् यस्य तस्य तु निर्गुणस्य राज्यदानं न युक्तम्। ततस्त्वमेव सुचिरं राज्यं कुरु इत्युक्त्वोत्थितो मन्त्री। राजा सायंतनसभां विसृज्य संयमग्रहणचिन्तापरः सुष्वाप। पाश्चात्यरात्रौ तेन स्वप्नो दृष्टः। कापि दिव्यरूपादिव्याभरणभूषिता स्त्रीसमेत्य भूपं प्राह-तव राज्यं वीरधवलस्य दत्तम्। एषा वरमाला संयमश्रीसत्का तव कण्ठे क्षिप्यते इत्युक्त्वा सा गता। राजा प्रबुद्धोऽचिन्तयत्किमिदम्। प्रातर्मन्त्री पृष्टः। कोऽपि वीरधवलः स्वकीये राज्ये योग्योऽस्ति। तेनोक्तम्—न ज्ञायते श्रीगुरव एव पृच्छयन्तेऽतो राजा गत्वा गुरून् पप्रच्छ। को वीरधवल इति ते प्रोचुस्त्वं संयमाय सज्जो भव यदा तव दीक्षा तदा तस्य पूर्वदिशः समागमो भविता। स तव दीक्षोत्सवं करिष्यति। इति श्रुत्वा राजा गृहं गत्वा संयमश्रियं जिघृक्षुः श्रियं नवक्षेत्रेषु वापयामास। तदा धर्मदत्तोऽपि धनवतीकुक्षिजे र-

सद्यः संयमाय सादरोऽभूत् । ततो राजा धर्मदत्तश्च सप्रि-
त्नसिंहे पुत्रे भारमारोप्य धनवतीयुक्तः संयमाय सादरोऽभूत् । ततो राजा धर्मदत्तश्च सप्रि-
यः संयमाय महोत्सवेन गुरुपार्श्वं प्राप्तौ । राजा दीक्षां लाति। कोऽथ नः स्वामीति यावल्लो-
काश्चिन्तयन्ति, कोऽपि राज्यार्हो न यातीति राजापि यावच्चिन्तयति, तावता दिव्यतूर्यरवोऽभूत्।
विस्मिते सर्वस्मिन् पूर्वदिशः श्वेतगजारूढः श्वेतच्छत्रचामरशोभितः कोऽपि दिव्यपु-
रुषोऽनाहतगीतवादित्रयुक्तस्तत्र समेतः । गगनादुत्तीर्य गुरून्नत्वा पुरो निविष्टः। गुरुभिरूचे-नृ-
पं प्रति एष वीरधवलः । तेनोक्तम्—कोऽयं कीदृक । पुनस्ते प्राहुः--श्रूयताम्, सिन्धुदेशे वी-
रपुरं नाम नगरम् । तत्र सिंहो राजा तस्य वीरधवलो नाम पुत्रः । स मृगयाव्यसनी वनेऽ-
न्यदा मृगीमेकां सगर्भां बाणेन विव्याध । तद्गर्भं बहिष्पतितं स्फुरन्तं वीक्ष्य स्वयमेव कृपां
प्राप्तः स्वं निनिन्द । जीवघातनियमं मनसि गृहीत्वा निवृत्तो गहमागतः । अन्यदा सिंहो रा-
जा पौरैः समेत्य विज्ञप्तः--चौरैः पुरं मुषितम् । राज्ञोक्तम्--रे रे आरक्षकाः किं पुरस्य रक्षा न
क्रियते ?। तैरुक्तम्-देव ? स्तोकैर्जनैर्दुर्ग्राह्योऽयं चौरः। अथ चौरं गृह्णामीत्युक्तो (क्त्वा) राजा(ज्ञा)

हर्षितः(ताः) पौराः प्रेषिताः। सायं कुमारोऽन्येऽपि भृत्या भाषिताः। अद्य सर्वाभिसारेण चतुष्कि-कासु स्थातव्यमिति। अथ रात्रौ कुमारचतुष्किकायामेव दैवयोगाच्चौरः पपात, भृत्यैः खेटकैर-वाच्छादितः। कुमारेण चिन्तितम्। प्रातर्मृत एवासौ चौरः पापं मे भावि। ततो मुक्त एव वरं इति ध्यात्वा स मोचितस्तत्क्षणे ययौ, नृपाग्रे कथनाय भृत्या वारिताः। प्रभाते राज्ञा चौराप्राप्ति-विलक्षेण पृष्टम्, चौरो न चटितः? इति। सर्वैरुक्तम्, न चटितः। ततः सभायां विसर्जितायां कु-मारभृत्यैश्चौरमोचनस्वरूपं राजदण्डभीतैः स्वयमेव ज्ञापितम्। राज्ञा कुपितेन कुमारो दे-शत्यागं कारितः। स भ्रमन् भद्दिलपुरं गतः, स कुमारस्तत्र भिक्षार्थं प्रविष्टः। रुष्टो विधिः किं न करोति। यतः—"यस्य पादयुगपर्युपासना—न्नो कदापि रमया विरम्यते। सोऽपि यत्परिदधाति कंबलं, तद्विधेरधिकतोऽधिकं बलम् ॥५९॥ ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे, वि-ष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः। सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥६०॥ तेन कुमारेण तत्र कर्मवशात् स्वतु-

भिक्षा लब्धा, स तान् सक्तूनादाय सरसोनदे शीतलेन पयसा भोक्तुं सज्जयति स्म, चिन्तितम्, यदि कोऽपि याचकोऽभ्येति तदा तस्मै किंचिद्ददामि । तावता तद्भाग्यात् कोऽपि मासोपोषितः साधुस्तन्मार्गेऽचलत् । स मुदितस्तमाहूय प्राञ्जलिः प्रोचे-"अद्य पूर्वसुकृतं फलितं मे, लब्धमद्य वहनं भवाब्धौ । अद्य चिन्तितमणिः करमागा-द्दीक्षितो यदि भवाननुनिराजः॥६१॥" इत्युक्त्वा सक्तुपिण्ड उत्पाटितः। साधुना करणवेला पृष्टा। तेनोक्ता। सावशेषं देयमित्युक्त्वा साधुना पात्रं धृतम् । तेन भाववशात् सर्वेऽपि सक्तवो दत्ताः । तदा शासनदेवतया दिव्यदुन्दुभिध्वनिं कृत्वा प्रोक्तम्-धन्यस्त्वं ! धन्यस्त्वम् !। चन्द्रधवलराज्यं तुभ्यं दत्तम् । साधुर्ययौ । कुमारः पुनर्भिक्षया सक्तुभिः प्राणाधारं चक्रे । देव्या तत्रापि स्वप्नो दत्तः । साम्प्रत सैप वीरधवलस्तया समहोत्सवमत्रानीतः। ततश्चन्द्रधवलादिभिस्तेन महोत्सवे क्रियमाणे दीक्षा गृहीता । गुरुभिरुपदेशो दत्तः-"धर्मो यस्य पिता क्षमा च जननी भ्राता मनः संयमो, मित्रं सत्यमिदं (सत्यं सूनुरयं) दया च भगिनी नीरा(रो)गता (शान्तिश्चिरं)गेहिनी ॥ शय्या

भूमितलं दिशोऽपि ( वसनं ) सद ज्ञानामृतं भोजनं, यस्यैतानि सदा कुटुम्बमनघं तस्येह कष्टं कथम् ( एते यस्य कुटुम्बिनो वद सखे ? कस्माद्भयं योगिनः ) ॥ ६२ ॥ मर्कटयपि गुरून् धनवतीं च पुनः पुनः पश्यन्ती जातिस्मरणं प्राप्ता प्रबोधिता च भावनया धर्ममाराध्य समये सौधर्मे देवी भूत्वा तेषामेव गुरूणां सान्निध्यकारिणी बभूव । गुरवो नवदीक्षितैः सह पृथ्वीमण्डले विजह्रुः । चन्द्रधवलोऽपि केवलज्ञानमासाद्याक्षयसौख्यं प्राप । धर्मदत्तो धनवती च समये सर्वार्थसिद्धिं प्राप्तौ । वीरधवलो राजा महोत्सवेन चन्द्रपुरं प्रविश्य प्रजाः प्रजा इव पालयन् पित्रापि तत्स्वरूपं (पुत्रस्य स्वरूपं) ज्ञात्वाबहुमानितो राज्यश्रियमभुङ्क्त । समये श्रीदत्तं पुत्रं राज्ये स्थापयित्वा संयमश्रिया सिद्धिसौख्यं सिषेवे । भीमं वनं भवति तस्य पुरं प्रधानं, सर्वे जनाः सुजनतामुपयांति तस्य । कृष्णा च भूर्भवति संनिधिरत्नपूर्णा, यस्यास्ति पूर्वविहितं सुकृतं नरस्य ॥ ६२ ॥ सकलकुशलवल्लीपल्लवोल्लासदक्षः । त्रिभुवनजनरक्षाशासने बद्धकक्षः ॥ नवघनसममूर्तिः दिक्षु विख्यातकीर्तिः । स भवतु जिननाथः

पार्श्वनाथः श्रिये वः ॥६२॥

धर्मः कामगवी यदीयचरणा दानादयो यन्मुखं,
शुद्धा जीवदया विवेकविलसत्पुच्छच्छटालङ्कृतम्[ता] ।
अश्रेयस्तृणचारिणी शुभपयःसम्पत्तिहेतूच्चया,
आलस्यादिकपश्यतोहरगणाद्दक्ष त्वया रक्ष्यताम् ॥६३॥

श्रीमेरुतुंगसूरीन्द्र-शिष्यो माणिक्यसुन्दरः ।
सूरिरेनां करोति स्म, संविभागव्रते कथाम् ॥६४॥

यावन्मेरुर्मही यावत्, यावच्चन्द्रदिवाकरा ।
वाच्यमाना जनैस्ताव-त्कथाऽसौ लभतां प्रथाः ॥६५॥

आचार्यवर्य—श्रीहेमचन्द्रसूरीश्वर—विरचित—गद्यबद्ध

# त्रिषष्ठिशलाकापुरुषचरितस्य

## सप्तमं पर्व

---

क्षान्तिसूरिजैनग्रन्थमालायाः सेक्रेटरिभ्यां सुश्रावक-झवेरी डाह्यालालात्मजमोहनलालेन
शा. चिमनलालात्मज रसीकलालेन च प्रकाशितम्

जैनाचार्यश्रीमत्क्षान्तिसूरिशिष्य कीर्तिमुनिपन्यासेन हरिशङ्करशास्त्रिणा च संशोधितम्

वीरसंवत् २४६६ मूल्यम् सार्धरूप्यकम् विक्रम सं १९९६

श्रीशारदामुद्रणालये तदधिपतिना सुश्रावक-
हर्षचंद्रात्मजेन पण्डितभगवानदासेन मुद्रितम्।
खारुनगेट वीठ्ठलमंदिर, भद्र—अमदावाद

श्रीशारदामुद्रणालये तदधिपतिना सुश्रावक-
हर्षचंद्रात्मजेन पण्डितभगवानदासेन मुद्रितम्।
खारुनगेट घीट्ठलमंदिर, भद्र—अमदावाद



# उपोद्घातः

अस्मिन् गद्यबद्धत्रिषष्टिशलाकापुरुषचरितस्य सप्तमे पर्वणि त्रयोदश सर्गाः सन्ति । तत्र प्रथमदशसर्गी बलदेववासुदेवप्रतिवासुदेवानां रामलक्ष्मणरावणानां चरितैः पूर्णा, अपरेषु च त्रिषु सर्गेषु एकविंशतितमतीर्थंकरदशमैकादशचक्रिणां श्रीनमिनाथहरिषेणजयानां चरितं वर्णितम् ।

अस्य कर्तारः श्रीमन्तो माननीया जगत्प्रसिद्धाः पद्यबद्धत्रिषष्टिशलाकापुरुषचरितस्य कर्तारः कलिकालसर्वज्ञाः श्रीमद्धेमचन्द्राचार्यमहाराजा एव सन्ति इति अस्माभिरुपलब्धे विक्रम संवत् १४६२ तमवर्षे लिखितपुस्तके प्रत्येकसर्गसमाप्तौ लिखितादित्याचार्यश्रीहेमचन्द्राचार्यकृत इत्यादिलेखत एवाऽवगम्यते ।

अस्य ग्रन्थस्य कर्तॄणां ज्ञानेनैवाऽस्य महिमा भूयानिति निश्चयप्रचमेव । अस्माभिः सप्तमपर्वैवोपलब्धमन्यानि पर्वाण्यपि भविष्यन्ति, इति तर्क्यते । अत्र लिखितपुस्तकस्य पत्राङ्कदर्शनमेव हेतुः ।

साधारणसंस्कृतज्ञातॄणामपि उपयोगार्हं भवेदिति हेतोरप्रकटितपूर्वमलभ्यञ्चेति मत्वाऽस्माभिराचार्यवर्यश्रीक्षान्तिसूरीश्वरज्ञानकोशाद्धस्तलिखित-

शान्तमूर्ति बालब्रह्मचारि आचार्यमहाराज श्रीमान्



जन्म : १९४४

दीक्षा : १९६५ माग. शु. १०

गणीपद : १९७५ कार्तक व. ६

पन्यासपद : १९७५ माघ शुक्ल १३

आचार्यपद : १९९२ माघ शुक्ल ६

स्वर्गवास : १९९५ फाल्गुन शुक्ल १



# उपोद्घातः

अस्मिन् गद्यबद्धत्रिषष्टिशलाकापुरुषचरितस्य सप्तमे पर्वणि त्रयोदश सर्गाः सन्ति । तत्र प्रथमदशसर्गी बलदेववासुदेवप्रतिवासुदेवानां राम-लक्ष्मणरावणानां चरितैः पूर्णा, अपरेषु च त्रिषु सर्गेषु एकविंशतितमतीर्थंकरदशमैकादशचक्रिणा श्रीनमिनाथहरिषेणजयानां चरितं वर्णितम् ।

अस्य कर्तारः श्रीमन्तो माननीया जगत्प्रसिद्धा पद्यबद्धत्रिषष्टिशलाकापुरुषचरितस्य कर्तारः कलिकालसर्वज्ञाः श्रीमद्धेमचन्द्राचार्यमहाराजा एव सन्ति इति अस्माभिरुपलब्धे विक्रम संवत् १४६२ तमवर्षे लिखितपुस्तके प्रत्येकसर्गसमाप्तौ लिखितादित्याचार्यश्रीहेमचन्द्राचार्यकृत इत्यादिलेखत एवाऽवगम्यते ।

अस्य ग्रन्थस्य कर्तॄणां ज्ञानेनैवाऽस्य महिमा भूयानिति निश्चयप्रचमेव। अस्माभि. सप्तमपर्वैवोपलब्धमन्यानि पर्वाण्यपि भविष्यन्ति, इति तर्क्यते । अत्र लिखितपुस्तकस्य पत्राङ्कदर्शनमेव हेतुः ।

साधारणसंस्कृतज्ञातॄणामपि उपयोगार्हं भवेदिति हेतोरप्रकटितपूर्वमलभ्यञ्चेति मत्वाऽस्माभिराचार्यवर्यश्रीक्षान्तिसूरीश्वरज्ञानकोशाद्धस्तलिखित-

मेकं पुस्तकं शुद्धमेवोपलभ्य पण्ड्याइत्युपाह्वाऽम्बारामात्मजहरिशङ्करशास्त्रिसमीपे प्रेसकोपिं विधाप्य महता परिश्रमेण संशोध्य श्रीशारदामुद्रणालये निर्णयसागरमुद्रणालयाक्षरैर्मुद्रापितम् ।

अस्य ग्रन्थस्य शोधन यद्यपि यथाशक्ति दत्तचित्तैरस्माभिः कृतं तथापि कुतश्चित्कारणाद्यदि त्रुटयः स्युश्चेद्विद्वद्भिः संशोध्या इति प्रार्थयते ।

मार्गशीर्ष शुक्लैकादशी
श्रीवीरविजयोपाश्रयः
राजनगरम् ।

कीर्तिमुनिः पन्यासः

ॐ अर्हं

कलिकालसर्वज्ञश्रीमद्धेमचन्द्राचार्यविरचिते—

# त्रिषष्ठिशलाकापुरुषचरिते गद्यबन्धे सप्तमे पर्वणि।

## ॥ अथ प्रथमः सर्गः ॥

अथ श्रीसुव्रतस्वामिजिनेन्द्रस्याञ्जनद्युतेः। हरिवंशमृगांकस्य तीर्थे संजातजन्मनः ॥१॥
बलदेवस्य पद्मस्य विष्णोर्नारायणस्य च। प्रतिविष्णो रावणस्य चरितं परिकीर्त्यते ॥२॥
भरतेऽत्र रक्षोद्वीपे लंकायां घनवाहनः। आसीद्रक्षोवंशकंदो विहरत्यजितेऽर्हति ॥३॥[1]
स महारक्षसे राज्यं सुधीर्दत्त्वा स्वसूनवे। अजितस्वामिपादान्ते परिव्रज्य ययौ शिवम् ॥४॥

१ वैताढ्ये रथनूपुरे पूर्णमेघसुतो घनवाहन.। स श्रीअजितसमवसरणे रिपुत्रस्त शरणमागतः पूर्वभवपित्रा राक्षसेन्द्रभीमेन सस्नेहेनाभाणि। अस्मिन्जम्बूद्वीपे भरतक्षेत्रे—

ततो देवरक्षःप्रभृत्यसंख्यरक्षोद्वीपेशातिक्रमे श्रीश्रेयांसतीर्थे कीर्तिधवलः। तदा च वैताढ्ये मेघपुरेऽतीन्द्राह्वखेचरेशस्य श्रीकण्ठसुतः, देवी सुता। सा च रत्नपुरेशपुष्पोत्तरेण पद्मोत्तराख्यसुतार्थं याचिताऽप्यतीन्द्रेण कीर्तिधवलायैव दत्ता। पुष्पोत्तरस्तां परिणीतां श्रुत्वाऽतीन्द्रश्रीकण्ठाभ्यां वैरायते स्म। एकदा श्रीकण्ठेन मेरोर्निवृत्तेन पुष्पोत्तरसुता पद्मा ददृशे। मिथो रागः। श्रीकण्ठस्तां जहार। दासीपूत्कृतेः पुष्पोत्तरोऽन्वधावत्। श्रीकण्ठः कीर्तिधवलं गत्वा तमभ्यर्पेणयत्। कीर्तिधवलो दूतेन पुष्पोत्तरं प्रोचे। मुधा प्रयासोऽयम्। अनया चासौ स्वयं घृतः। पद्माऽपि दूत्या तातं जगौ। मया वव्रेऽयम्। ततः कोपशान्तेर्विवाहोऽभूत्। कीर्तिधवलः श्रीकण्ठमूचे। अत्रैव तिष्ठ। वैताढ्ये युष्माकं भूयांसोऽरयः।

---

लवणोदे पयोराशौ दुर्जयो द्युसदामपि। योजनाना सप्तशती दिक्षु सर्वासु विश्रुतः ॥१॥

राक्षसनामद्वीपोऽस्ति . . ..... .. ... ... . ... ... .. .... . .. ... .॥२॥

त्रिकूटो वलयाकारो योजनानि नवोन्नतः। पञ्चाशतं योजनानि विस्तीर्णोऽस्त्यतिदुर्गमः ॥३॥

तस्योपरिष्टात्सौवर्णप्राकारगृहतोरणा—मया लङ्केतिनाम्ना पूरधुनैपाऽस्ति कारिता ॥४॥

षड्योजनानि भूमध्यमतिक्रम्य चिरन्तनी। शुद्धस्फटिकवप्राङ्का नानारत्नमयालया ॥५॥

सपादयोजनशतप्रमाणा प्रवरा पुरः। मम पातालंलङ्केति विद्यते चातिदुर्गमा ॥६॥

इदं पुरीद्वयं लात्वा नृपो भव। इत्युक्त्वा भीमेन्द्रो नवमाणिक्यं हारं राक्षसीं विद्या च ददौ। घनवाहनोऽपि भगवन्तं नत्वा राक्षसद्वीप प्राप्य द्वयोर्लङ्कयो राजाऽभूत्। राक्षसद्वीपराज्याद्राक्षस्या च विद्यया तद्वंशो राक्षसवंशः।

अस्यैव राक्षसद्वीपस्यादूरेण मरुद्दिशि। विद्यते वानरद्वीपो योजनत्रिशतीमितः ॥५॥

अन्येऽपि बर्बरकूलसिंहलप्रमुखाः सखे!। द्वीपा मदीयास्तिष्ठन्ति भ्रष्टस्वःखण्डसन्निभाः ॥६॥

तेषु क्वाप्येकस्मिन्राजधानीं निवेश्य सुखमास्स्व। श्रीकण्ठः स्नेहाद्वानरद्वीपवासं स्वीचक्रे।

कृत्वाधिवानरद्वीपं किष्किन्धाद्रौ महापुरीम्। किष्किन्धां नाम तद्राज्ये तं कीर्तिधवलो न्यधात् ॥७॥

श्रीकण्ठस्तत्र भ्राम्यतो रम्यान्वानरान्दृष्ट्वाऽमारिमाघोष्यान्नपानादि दापयामास। खेचरास्तदादि कौतुकाच्चित्रे लेप्ये ध्वजच्छत्रादिलक्ष्मसु वानरांश्चक्रुः। ततो विद्याधराणामपि वानरा इति ख्यातिः। श्रीकण्ठसूनुर्वज्रकण्ठः। श्रीकण्ठोऽन्यदा नन्दीश्वरे गच्छतः सुरान्दृष्ट्वाऽनुगच्छन्मानुषोत्तरे विमानस्खलनादल्पतपा अहमिति निर्विण्णः प्रव्रज्य सिद्धः। वज्रकण्ठाद्यनेकनृपातिक्रमे श्रीसुव्रततीर्थे घनोदधिरथो राजा। तदा च लंकायां तडित्केशः। मिथः स्नेहः। अन्येद्युस्तडित्केशः क्रीडितुं नन्दनाह्वोद्यानं गतः श्रीचन्द्रायाः पत्न्याः कुचौ नखैर्विलिखन्तं कपिं बाणेन जघान। स कपिः प्रहारविधुरः किञ्चिद्गत्वा प्रतिमास्थसाधोरग्रे पतितो दत्तनमस्कारोऽब्धिकुमारोऽभूत्। ज्ञातप्राग्भवो मुनिं ववन्दे। तत्र तडित्केशभटैर्हन्यमानानन्यानपि कपीन् पश्यन् सकोपो विकृतानेकमहाकपिरूपः शिलावर्षेण रक्षांस्युपाद्रोषीत्। तडित्केशस्तं दिव्यप्रयोगं ज्ञात्वाऽर्चित्वा कोऽसीति पप्रच्छ। तस्माज्ज्ञातवृत्तश्च तेनैव देवेन सह तं मुनिमुपेत्य वैरहेतुमप्राक्षीत्। मुनिरूचे–श्रावस्त्यां त्वं मन्त्रिसुदत्तोऽभूः। एष तु लुब्धकः। त्वमात्तव्रतो वाराणसीगतोऽनेनाशकुनमित्याहतो माहेन्द्रे देवोऽभूः। च्युत्वा च त्वम्। लुब्धको नरकं भ्रान्त्वा कपिः। अयं वैरहेतुः। देवः साधुं नत्वा लङ्केशानुज्ञातोऽन्तर्दधे। तडित्केशस्तच्छ्रुत्वा सुकेशे सुते राज्यं न्यस्य व्रतात्परं पदमाप। घनोदधिरथः किष्किन्धौ सुते राज्यमाधाय व्रतान्निर्वृत्तः।

इतश्च वैताढ्ये रथनूपुरपुरे तदाऽशनिवेगः खेचरेशः। विजयसिंहविद्युद्वेगौ सुतौ। तत्रैवाद्रावादित्यपुरे मन्दरमाली खेटेशः। श्रीमाला कन्या। सा स्वयंवरे किष्किन्धिकण्ठे वरमालां चिक्षेप। विजयसिंहो रुष्टोऽभ्यधात्। अमी दुर्नयाः पुराऽपि वैताढ्यराजधानीतो निर्वासिताः। केनाऽऽनीताः ? हन्मीत्युक्त्वा किष्किन्धिवधायोत्तस्थौ। किष्किन्धिपक्षे सुकेशाद्याः। विजयसिंहपक्षेऽन्ये। किष्किन्ध्यनुजेनान्धकेन विजयसिंहे हते तत्सैन्यं तत्रास। किष्किन्धिर्जयश्रीमालान्वितः किष्किन्धां ययौ। अशनिवेगः पुत्रवधश्रुतेः किष्किन्धामववेष्टत्। सुकेशकिष्किन्धी सान्धकौ पुर्या निर्गतौ। युद्धेऽशनिवेगेनाऽन्धको जघ्ने। वानरसैन्यानि त्रेसुः। सुकेशकिष्किन्धी पातालल‌ङ्कां ययतुः। अशनिवेगोऽपि वैरिवधाच्छान्तकोपो लङ्काराज्ये निर्घाताह्वं खेचरं न्यास्थत्। स्वं च पुरं प्राप्तः। कदाचित्सहस्रारं सुतं राज्ये न्यस्य प्राव्रजत्। पातालल‌ङ्कायां सुकेशस्येन्द्राण्यां माली, सुमाली, माल्यवान् इति सुता बभूवुः। किष्किन्धेस्तु श्रीमालायामादित्यरजा, ऋक्षरजाश्चेति सुतौ। अन्येद्युः किष्किन्धिः सुमेरुयात्रानिवृत्तो मधुपर्वतं दृष्ट्वा तत्र किष्किन्धिपुरं निवेश्य तस्थौ। सुकेशस्य ते त्रयः पुत्राः श्रुतपूर्ववृत्ता लङ्कायामागत्य निर्घातं निगृहीतवन्तः। लङ्कायां माली राजाऽभूत्। किष्किन्धाद्रौ किष्किन्धायां त्वादित्यरजाः।

इतश्च रथनूपुरेऽशनिवेगात्मजसहस्रारनृपस्य चित्रसुन्दरीपत्न्यां स्वर्गच्युतः कश्चिद्गर्भेऽवतीर्णः। काले शक्रसम्भोगदोहदमजीजनत्। स च भर्त्रा विद्याविहितशक्ररूपेण पूरितः। सुतो जातः। इन्द्रनामा स राजाऽभूत्। स इन्द्रंमन्यश्चतुरो लोकपालान्सप्तानीकानि, सप्त तदीशान्, वज्रमस्त्रमैरावणं गजं, रम्भाद्या वारवधूर्बृहस्पतिं मन्त्रिणं, नैगमेषिणं च पत्त्यनीकाधिपं चक्रे। प्राच्यां ज्योतिःपुरेशः सोमदिक्पालो मकरध्वजाऽऽदित्यकीर्तिभूः। पश्चिमायां मेघपुरेशो वरुणो मेघरथवरुणापुत्रः। उत्तरस्यां काञ्चनपुरेशः कुबेरः

आतृमित्रमन्त्रियुक् युद्धाय ... कनकावलीसुतः। अपाच्यां किष्किन्धनगरेशो यमः कालाग्निश्रीप्रभासूनुः। माली तु तमिन्द्रं न सेहे। भ्रातृमित्रमन्त्रियुक् युद्धाय चचाल। अशकुनैः सुमालिना च वारितोऽप्यैरावणारूढेन लोकपालादिवृतेन पविपाणिना योद्धुं प्रवृते। मालिसैन्ये भग्ने माली ससंरम्भोऽभ्यधावत। इन्द्रो मालिना, लोकपालाद्याः सुमाल्याद्यैर्युयुधिरे। इन्द्रेण मालिनि पविना हते राक्षसा वानराश्च सुमालिना साधं पाताललङ्कां ययुः। इन्द्रो विश्रवः सूनवे कौशिकाकुक्षिजाय धनदाय वैश्रवणाय लङ्कां ददौ। पातालङ्कायां सुमालिनो रत्नश्रवाः सुतोऽजनि। तस्य कुसुमोद्याने विद्यां साधयतः काऽपि विद्याधरी पित्रादेशात्समीपे तस्थौ। तदा च मानवसुन्दरीविद्या तव सिद्धाऽस्मीति तमवादीत्। ततः स मुक्ताक्षमालिकः पुरस्तां विद्याधरकुमारीं दृष्ट्वा काऽसि, कुतो हेतोरागा इत्यूचे। सा प्रत्याह। कौतुकमङ्गले पुरे व्योमबिन्दुः खेटेशस्तत्पुत्र्यौ कौशिकाकैकस्यौ। कौशिका यक्षपुरेशेन विश्रवसोढा। तस्या धनदो वैश्रवणः सुतः। शक्रादेशाल्लङ्कायां राज्यं कुरुते। अहं तु कैकसी नैमित्तिकगिरा पित्रा तुभ्यं दत्ता। सुमालिसूनुरिति श्रुत्वा तां तत्रैव विवाह्य पुष्पान्तकं पुरं न्यस्य तस्थौ। कैकसी स्वप्ने कुम्भिकुम्भभेदसक्तं सिंहं मुखे विशन्तमैक्षिष्ट। सूनुर्भवितेति भर्त्रोक्तम्। गर्भात्प्रभृति कैकस्या वाणी निष्ठुराऽभूत्। जितश्रममङ्गम्। दर्पणे सत्यपि मुखं खड्गेऽपश्यत्। निर्हेतुकं सहुंकारं मुखं दधौ। गुरुष्वपि नाऽनमत्। अरिमूर्धसु पादं दित्सामास। इत्यादिदारुणभावान् दध्रे। विपक्षासनकम्पं कुर्वाणः साधिकद्वादशवर्षसहस्रायुः सूनुरजन्यत। स सूतितल्पगत उच्छलन्पुरा भीमेन्द्रेण दत्तं नवमाणिक्यनिर्मितं हारं पार्श्वस्थकरण्डकात्पाणिना कृष्ट्वा कण्ठेऽक्षैप्सीत्। कैकसी कान्तायाऽऽचख्यौ। यो भीमेन राक्षसेन्द्रेण पुरा मेघवाहनाय त्वत्पूर्वजाय हारो ददे अद्ययावच्च देवतावत्पूजितोऽन्यैर्वोढुमशक्यः नागसहस्रेण निधानवद्रक्षितः नवमाणिक्यनिर्मितः। स बालेन कण्ठेऽक्षेपि। पिता तस्य नवमाणिक्यसंक्रान्तमुखत्वाद्दशमुख इत्यभिधां विदधे। ऊचे च

पुरा चतुर्ज्ञानिमुनिना तातस्याग्रे कथितं यो नवमाणिक्यं हारं वोढा सोऽर्धचक्रीति । कैकस्या भानुस्वप्नाद्भानुकर्णः कुम्भकर्णापराख्यः सुतः । चन्द्रतुल्यनखत्वाच्चन्द्रणखा सुता शूर्पणखेति ख्याता । चन्द्रस्वप्नाद्विभीषणश्च । ते त्रयोऽपि सोदराः सार्धषोडशचापोच्चाः ।

इति श्रीहेमचन्द्रविरचिते त्रिषष्ठिशलाकापुरुषचरिते सप्तमे पर्वणि राक्षसवंशवानरवंशोत्पत्ति रावणजन्मवर्णनो नाम प्रथमः सर्गः ।

## ॥ अथ द्वितीयः सर्गः ॥

अन्येद्युर्दशमुखः सानुजो विमानारूढं नभस्यायान्तं वैश्रवणं दृष्ट्वा कोऽयमित्यम्बां पप्रच्छ । सोचे । अयं मज्ज्येष्ठस्वसुः सुतः । इन्द्रस्याग्रसुभटः । इन्द्रेण त्वत्पितामहज्येष्ठं मालिनं हत्वा सराक्षसद्वीपा लङ्काऽस्मै ददे । ततःप्रभृति त्वत्पिता लङ्काप्राप्तिकृतस्पृहोऽत्राऽऽस्ते । पूर्वं हि भीमो राक्षसेन्द्रः प्राग्भवात्मजाय मेघवाहनाय रक्षोवंशकन्दाय सराक्षसद्वीपां लङ्कां पाताललङ्कां राक्षसीं च विद्यां ददौ । स्वपदभ्रष्टस्तव पितामहः पिता च मृतवत् । कदा त्वां पैतामहासनासीनं द्रक्ष्य इत्यादि । विभीषणोऽवदत् । विषादेनाऽऽलम् । दशास्यस्य पुरः क इन्द्रः ? को वैश्रवणः ? यदिवा कुम्भकर्ण एव वैरीभपंचास्यः । अथवा तदादेशादहमेवेति । दशास्यः प्राह । दोर्वीर्येणैव परान्जेतुं शक्तोऽस्मि । तथाऽपि क्रमागता विद्याः साधये । पितरौ नत्वा सानुजोऽपि भीमारण्यं प्राप । ते त्रयोऽपि भीष्मेऽप्यरण्ये यामद्वयेन सर्वकामाप्रदामष्टाक्षरां विद्यामसाधयन् । दशकोटिसहस्रजापात्फलदं षोडशाक्षरं मन्त्रं साधयितुं प्रारेभिरे ।

स्वर्वधूभिर्न क्षुब्धाः। ततोऽनादृत एव प्रोचे। केनेदं पाखण्डं शिक्षिताः ? तत्रागतेन जम्बूद्वीपेशेनाऽनादृतेन क्षोभार्थं प्रेषिताभिरपि स्वर्वधूभिर्न क्षुब्धाः। पितरौ तद्भगिनी च विकृत्य बद्ध्वा यात यात। यदि वा वांछितं ददामि। तथाऽप्यक्षुभ्यत्सु तत्प्रेरिता व्यन्तरा विभीषिकां चक्रुः। पितरौ तद्भगिनी च विकृत्य बद्ध्वा पुरश्चिक्षिपुः। पितरौ स्वसा च त्रायस्व त्रायस्वेत्यादि नाना चक्रन्दुः। व्यन्तरास्तच्छिरांसि चिच्छिदुः। तथापि तत्कर्माऽपश्यन्त दृन ते न क्षुभ्यन्ति स्म। रावणाऽग्रेऽनुजयोः शिरसी अपातयन्। तयोरग्रे च दशास्यस्य शिरः। अनुजावग्रजभक्त्या किञ्चित्कोपाच्चु-क्षुभतुः। न तु हीनसत्त्वतया। साधु साध्विति नभोवाणी। यक्षकिंकरा नेशुः। सहस्रं विद्याः प्रज्ञप्त्याद्या रावणं प्रापुः। संवृद्ध्याद्याः पञ्च विद्याः कुम्भकर्णस्य। सिद्धार्थाद्याश्चतस्रो विभीषणस्य सिद्धाः। अनादृतो रावणं क्षमयामास। रावणस्य च कृते तत्रैव स्वयंप्रभं पुरमकृत। विद्यासिद्धिं श्रुत्वा पितरौ स्वसा बन्धवश्च तत्राऽऽययुः। रावणः षड्भिरुपवासैश्चन्द्रहासं खड्गमसाधयत्।

इतश्च वैताढ्यदक्षिणश्रेणौ सुरसंगीतपुरेश्वरमयेन स्वसुता मन्दोदरी स्वयंप्रभपुरमागत्य रावणाय दत्ता। तया सह चिरं रेमे। अन्यदा रावणो मेघरवाद्रिं गतः। सरसि मज्जन्तीः खेचरकन्याः षट्सहस्रसंख्याः पद्मावत्याद्या दर्शनाज्जातरागा गान्धर्वेण विवाहेन स्वीचक्रे। तत्पितॄन्युयुत्सून्प्रहारान्मुञ्चतः प्रस्वापनास्त्रेणामोहयत्। नागपाशैर्बबन्ध। नवोढावचोभिर्मुमोच। रावणस्ताभिः समं स्वयंप्रभपुरमियाय। कुम्भकर्णः कुम्भपुरेशमहोदरसुतां तडिन्मालां पर्यणैषीत्। विभीषणो वैताढ्यदक्षिणश्रेण्यां ज्योतिष्पुरेशवीरसुतां पङ्कजश्रियं व्यवाहयत्। मन्दोदर्या इन्द्रजिन्मेघवाहनौ सुतौ सूतौ। कुम्भकर्णविभीषणौ पितृवैरं श्रुत्वा वैरिश्रितां लङ्कामुपाद्रोष्टाम्। वैश्रवणो दूतेन सुमालिनमूचे। इमौ शिशू शाधि। अन्यथा त्वया सह मालिवर्त्म नेष्याम्येतौ। रावणः सकोपमभ्यधात्। कोऽयं धनदः ? स एवं वदन् किं न त्रपते ? दूतो लङ्कां गत्वा तत्कथयामास। दूतानुपदं च सानुजे सानीके रावणे लङ्कां प्राप्ते सोऽपि लङ्काया

निर्गतो युध्यमानो भग्नो मानखण्डनान्निर्विण्णो गृहीतव्रतो रावणेन नत्वा ज्येष्ठो भ्रातासि क्षम्यतां मन्तुर्लङ्कायामपि राज्यं कुरुष्वेत्युक्तोऽपि प्रतिमास्थश्चरमदेहो न किञ्चिदूचे। रावणस्तं निस्पृहं ज्ञात्वा तस्य पुष्पकं विमानं लंकया सह ललौ। अथ पुष्पकारूढः सम्मेताद्रौ जिनान्नत्वाऽवरोहन्प्रहस्तप्रतिहारेण सेनाकलकलेन गर्जन्तं वनगजं दृष्ट्वा देवस्याऽयं यानयोग्यो हस्तीत्यूचे। ततो दशास्यस्तं पिङ्गदन्तं मधुपिङ्गलाक्षं सप्तहस्तोच्चं नवहस्ताऽऽयतं गजं वशीकृत्यारुरोह। भुवनालङ्कार इति गजस्याख्याऽभूत्। तत्रैवोषितरात्रिः प्रातरास्थानीस्थो घातजर्जरेण पवनवेगविद्याधरेणायाचि। देव! किष्किन्धिसुतौ सूर्यरजा ऋक्षरजाश्च पातालङ्कायाः किष्किन्धां गतौ। यमेन युद्ध्वा बद्ध्वा कारायां क्षिप्तौ वैतरणीयुतान्नरकावासान्विधायच्छेदभेदादिदुःखं सपरिच्छदौ प्राप्येते। तौ मोचय। रावणोऽपि तेन मत्पत्तयो बद्धा यच्छामि तत्फलमिति वदन् सानीको यमपालितां किष्किन्धां गतः। त्रपुपानशिलास्फालादिरौद्रान्सप्तनरकान्दृष्ट्वा परमाधार्मिकान्सन्त्रास्य स्वपत्तीनन्यानपि चामूमुचत्। नरकारक्षेभ्यो ज्ञातवृत्तो यमो योद्धुं लग्नः। शराशरि चिरं युद्ध्वा दण्डमुत्पाट्य धावितो रावणेन क्षुरप्रखण्डितदण्डः शरान् क्षिपन् रावणबाणैर्जर्जरित इन्द्रं गत्वा नत्वोचे। यमत्वं न करिष्ये दशास्यो हि यमस्यापि यम उत्थितः। तेन नारका मोचिताः। क्षत्रव्रतभृता रणे जीवन्मुक्तोऽस्मि। वैश्रवणं जित्वा लङ्कां पुष्पकं च तद्विमानं लले (ललौ)। क्रुद्धः शक्रो युद्धान्मन्त्रिभिर्निषिद्धो यमाय सुरसङ्गीतं पुरं दत्त्वा स्वयं तथैव विललास।

इतश्च रावणः किष्किन्धामादित्यरजसे ददौ। ऋक्षपुरमृक्षरजसे पुरा ददौ। स्वयं लङ्कायां पैतामहं राज्यमपात्। इतश्चादित्यरजसः कपिराजस्येन्दुमालिन्यां वाली सुतः।

**जम्बूद्वीपं समुद्रान्तं वाली बाहुबलोल्बणः। नित्यं प्रदक्षिणीकुर्वन्सर्वचैत्यान्यवन्दत ॥८॥**

आदित्यरजा वालिदत्तराज्यः सुग्रीवो द्वितीयः सुतः । श्रीप्रभा कनीयसी कन्या । ऋक्षरजसोऽपि हरिकान्तायां नलनीलौ सुतौ । आदित्यरजा वालिदत्तराज्यः

सुग्रीवो द्वितीयः सुतः । श्रीप्रभा कनीयसी कन्या । ऋक्षरजसोऽपि हरिकान्तायां नलनीलौ सुतौ । वालिरपि (वाल्यपि) सम्यग्दृष्टि दयालुं स्वानुरूपं सुग्रीव यौवराज्ये न्यास्थत् । प्रव्रज्य शिवं ययौ । वालिरपि (वाल्यपि) सम्यग्दृष्टि दयालुं स्वानुरूपं सुग्रीवं यौवराज्ये न्यास्थत् । पाताललङ्कां गत्वा-

अन्यदा दशास्ये सभार्ये गजारूढे चैत्यनत्यै मेरुं गते मेघप्रभसुतः खरखेचरो जातरागां चन्द्रणखां जह्रे । पाताललङ्कां गत्वा-ऽऽदित्यरजःसूनुं चन्द्रोदरं निर्वास्य तां चादत्त । क्षणादागतो दशास्यस्तज्ज्ञात्वा क्रुद्धः खरवधाय चलन् मन्दोदर्याऽनुजाभ्यां चाभि-दधे । कन्याऽवश्यं परस्यापि देया । इयं च दूषणाग्रजेऽदूषणे जातरागा । ततस्तया तमुद्वाह्य पाताललङ्काश्च देहि । दशास्यस्तत्कृते मयमारिचौ प्रेष्य व्यवाहयत् । ततः स पातालङ्कायां रावणाज्ञया तस्थौ । तदा तेन निर्वासिते चन्द्रोदरे कालान्मृते तज्जायाऽनुराधा नष्टा । गर्भिणी वने विराधनामसुतमसूत । सम्प्राप्तयौवनः कलावान् विक्रमी भूमिं विजहार । ततो रावणः कथाप्रसङ्गेन सभायां वालिनं प्रौढप्रतापमशृणोत् । असहनो दूतेन तं जगौ । त्वत्पूर्वजः श्रीकण्ठोऽरिभीतोऽस्मत्पूर्वजं कीर्तिधवलं शरणं शिश्राय । कीर्तिध-वलस्तं स्यालं रिपुभ्यस्त्रात्वैवं वानरद्वीपे न्यधात् । तदाद्यावयोर्भर्तृभृत्यभावेन भूयस्सु भूपेषु गतेषु त्वत्पितामहकिष्किन्धिमत्पिता-महसुकेशयोः स सम्बन्धो निर्व्यूढः । त्वत्पिता चादित्यरजा यमगुप्तेराकृष्य किष्किन्धाराज्ये मया न्यधायीति जगत्प्रतीतम् । ततस्त्वं तत्तनयो नर्यां वालिः (वाली) प्राग्वदस्मत्सेवां कुरु । वालिः क्रुद्धोऽप्यविकृताऽऽकारः प्रोवाच । रक्षोवानरेश्वराणां मिथः स्नेहसम्ब-न्धमद्ययावदखण्डितं जाने । पूर्वजाः सम्पद्विपदोर्मिथः सहाया बभूवुः । न तु सेव्यसेवकता । अर्हन्तं देवं साधुं च सुगुरुं विनाऽन्यं सेव्यं न विद्मः । अद्यैवं वदताऽनेन प्राक्स्नेहः खण्डितः । तस्याहमपवादभयात्किञ्चिन्न कुर्वे । विप्रियन्तु कुर्वतः प्रतिक्रियां करि-ष्ये । त्वत्स्वामी यथाशक्ति विधत्ता, व्रजेति । रावणे क्रोधात्किष्किन्धा गते वालिरप्यभ्यागत्य युयुधेतराम् । वाली दयालुर्दशास्यं

निर्गतो युध्यमानो भग्नो मानखण्डनान्निर्विण्णो गृहीतव्रतो रावणेन नत्वा ज्येष्ठो भ्रातासि क्षम्यतां मन्तुर्लङ्कायामपि राज्यं कुरुष्वे-
त्युक्तोऽपि प्रतिमास्थश्चरमदेहो न किञ्चिदूचे। रावणस्तं निस्पृहं ज्ञात्वा तस्य पुष्पकं विमानं लंकया सह ललौ। अथ पुष्पकारूढः
सम्मेताद्रौ जिनान्नत्वाऽवरोहन्प्रहस्तप्रतिहारेण सेनाकलकलेन गर्जन्तं वनगजं दृष्ट्वा देवस्याऽयं यानयोग्यो हस्तीत्यूचे। ततो दशा-
स्यस्तं पिङ्गदन्तं मधुपिङ्गलाक्षं सप्तहस्तोच्चं नवहस्ताऽऽयतं गजं वशीकृत्यारुरोह। भुवनालङ्कार इति गजस्याख्याऽभूत्। तत्रैवोषित-
रात्रिः प्रातरास्थानीस्थो घातजर्जरेण पवनवेगविद्याधरेणायाचि। देव! किष्किन्धिसुतौ सूर्यरजा ऋक्षरजाश्च पातालङ्कायाः किष्कि-
न्धां गतौ। यमेन युद्ध्वा बद्ध्वा कारायां क्षिप्तौ वैतरणीयुतान्नरकावासान्विधायच्छेदभेदादिदुःखं सपरिच्छदौ प्राप्येते। तौ मोचय।
रावणोऽपि तेन मत्पत्तयो बद्धा यच्छामि तत्फलमिति वदन् सानीको यमपालितां किष्किन्धां गतः। त्रपुपानशिलास्फालादिरौद्रा-
न्सप्तनरकान्दृष्ट्वा परमाधार्मिकान्सन्त्रास्य स्वपत्तीनन्यानपि चामूमुचत्। नरकारक्षेभ्यो ज्ञातवृत्तो यमो योद्धुं लग्नः। शराशरि चिरं
युद्ध्वा दण्डमुत्पाट्य धावितो रावणेन क्षुरप्रखण्डितदण्डः शरान् क्षिपन् रावणबाणैर्जर्जरित इन्द्रं गत्वा नत्वोचे। यमत्वं न करिष्ये
दशास्यो हि यमस्यापि यम उत्थितः। तेन नारका मोचिताः। क्षत्रव्रतभृता रणे जीवन्मुक्तोऽस्मि। वैश्रवणं जित्वा लङ्कां पुष्पकं च
तद्विमानं लले (ललौ)। क्रुद्धः शक्रो युद्धान्मन्त्रिभिर्निषिद्धो यमाय सुरसङ्गीतं पुरं दत्त्वा स्वयं तथैव विललास।

इतश्च रावणः किष्किन्धामादित्यरजसे ददौ। ऋक्षपुरमृक्षरजसे पुरा ददौ। स्वयं लङ्कायां पैतामहं राज्यमपात्। इतश्चादित्य-
रजसः कपिराजस्येन्दुमालिन्यां वाली सुतः।

जम्बूद्वीपं समुद्रान्तं वाली बाहुबलोल्बणः। नित्यं प्रदक्षिणीकुर्वन्सर्वचैत्यान्यवन्दत ॥८॥

प्रबोधपूर्वं सैन्ययुद्धान्निषिध्याङ्गेन योद्‌धुमारेभे । दशास्यमुक्तान्यस्त्राण्यस्त्रैर्मन्त्रास्त्राणि मन्त्रास्त्रैर्जघान । चन्द्रहासासिमाकृष्य धावन्तं वामेन बाहुना लीलयैव लात्वा कन्दुकमिव हस्तकोटरे न्यस्य चतुःसमुद्रं क्षणेन भ्रान्त्वा तदैव तत्रैत्य त्रपावनतं तं मुक्त्वा बभाषे । अर्हन्तं विना मम कश्चिन्न नमस्यः । तं मानं धिक् । येन मत्प्रणामेच्छुरेतां दशां प्राप्तोऽसि । मया परोपकारस्मृतेर्मुक्तोऽसि । राज्यं च मद्दत्तं शाधि । मयि सति कुतस्तवेयं भूः । तदहं प्रव्रजिष्यामि । किष्किन्धायां तु त्वदाज्ञाधरः सुग्रीवोऽस्तु । इत्युक्त्वा सुग्रीवं राज्ये न्यस्य गगनचन्द्रर्षिपार्श्वे प्रव्रज्यां प्रपेदे । नानाभिग्रहः प्रतिमाधरो ध्यानी विहरन् विविधलब्धिधरो बभूव । अष्टापदाद्रौ च गत्वा कायोत्सर्गमदत्त । पारितकायोत्सर्गे मासान्ते पारणं निर्ममे । मुहुर्मुहुरेवं चकार ।

इतश्च सुग्रीवो रावणाय स्वस्वसारं श्रीप्रभां ददौ । यौवराज्ये वालिपुत्रं चन्द्ररश्मिं न्यवेशयत् । रावणोऽपि लङ्कास्थितो विद्याधरेन्द्राणां कन्या बलादप्युपयेमे । अन्यदा नित्यालोकपुरे नित्यालोकखेचरेशसुतां रत्नावलीमुद्वोढुं गच्छन्नष्टापदाद्रेरुपरि पुष्पके स्खलिते क्रुद्धस्तद्धेतुं पश्यन्विमानस्याधः प्रतिमास्थं वालिं दृष्ट्वाऽवदत्—रे दाम्भिक ! अद्यापि विरोधं वहसि ? अग्रेऽपि कयाऽपि मायया मामवहः । ततः कृतप्रतिकृतभीतो व्रती जातः । स एवाहम् । त एव मम बाहवः । यथा सचन्द्रहासं मामूढ्वाऽब्धिष्वभ्राम्यः । तथा त्वां साद्रिमुत्क्षिप्य वार्द्धौ क्षेप्स्यामीत्युक्त्वा क्ष्मां विदार्याऽष्टापदतलप्रविष्टो विद्यासहस्रं स्मृत्वा तमद्रिमुदध्रे ।

तडत्तडितिनिर्घोषवित्रस्तव्यन्तरामरम् । झलज्झलितिलोलाब्धिपूर्यमाणरसातलम् ॥९॥
खडत्खडितिविभ्रश्यद्ग्रावक्षुण्णवनद्विपम् । कडत्कडितिनिर्भग्ननितम्बोपवनद्रुमम् ॥१०॥
गिरिं तेनोद्धृतं ज्ञात्वाऽवधिना स महामुनिः । अनेकलब्धिनद्यब्धिरिति दध्यौ विशुद्धधीः ॥११॥ विशेषकम् ॥

भरतेश्वरचैत्यध्वंसं च कर्तुं यतते ? अहं निर्ममोऽपि चैत्यत्राणाय प्राणिरक्षायै च

अः कथमयं दुर्मतिर्मयि मात्सर्यादनेकजन्तुसंहारं भरतेश्वरचैत्यध्वंसं च कर्तुं यतते ? अहं निर्ममोऽपि ... सङ्कुचद्गात्रो दशास्यो रुधिरं वमन्पृथ्वीं रावयन्नरा-

रागद्वेषौ विनैवनं किञ्चिच्छिक्षये । ततः पादाङ्गुष्ठेन गिरिमूर्धनि लीलया पीडिते सङ्कुचद्गात्रो दशास्यो रुधिरं वमन्पृथ्वीं रावयन्नरा-

वीत् । तेन रावण इति पप्रथे । श्रुताऽऽरटनेन वालिना मुक्तो निःसृत्य नत्वाऽक्षमयत् । त्वं वली । अहमज्ञः । त्वया प्राणा दत्ताः । इत्यु-

तथा त्रिःप्रदक्षिणीकृत्य ववन्दे । वालेरुपरि सुराः पुष्पवृष्टिं न्यधुः । रावणः पुनर्वालिं नत्वा भरतचैत्यं गत्वा सान्तःपुरो विधिना

पूजां विधाय ।

समाकृष्य स्वसातन्त्रीं प्रमृज्य च दशाननः । महासाहसिको भक्त्या भुजवीणामवादयत् ॥१२॥

दशास्य उपवीणयत्यन्तःपुरे गायति धरणेन्द्रः समागतोऽर्हतोऽर्चयित्वा नत्वा गीतरञ्जितस्तुष्टोऽस्मि. वृणीष्वेति रावणं प्रोवाच । स्वा-

मिभक्तस्य तवैतद्युक्तम् । मम त्वाददानस्य भक्तेरपकर्षं इत्युक्तवति रावणेऽत्यन्तं तुष्टो नागेन्द्रोऽमोघां शक्तिं रूपविकारिणीं विद्यां

दत्त्वा स्वाश्रयं जगाम । दशास्योऽपि जिनान्नत्वा रत्नावलीं न्यूढ्य लङ्कां प्राप । वालेरपि तदैव केवलज्ञानमुत्पेदे । क्रमेण मुक्तः ।

इतश्च वैताढ्ये ज्योतिःपुरे ज्वलनशिखसुता तारा चक्राङ्कखेचरसुतसाहसगतिना सुग्रीवेण च ययाचे । पित्रा नैमित्तिकाद्दीर्घायु-

ष्कतां श्रुत्वा सुग्रीवाय सा ददे । तारायामङ्गदजयानन्दौ सुतौ । साहसगतिस्तारां जिहीर्षुः क्षुद्रहिमवति गत्वा रूपपरिवर्तिनीं शेमुषी

विद्यां साधयितुं प्रारेभे ।

इतश्च रावणो दिग्यात्रायै चलितो द्वीपान्तरवासिनः खेचरान्नरेन्द्रांश्च वशीकृत्य पाताललङ्कां गतः खरेण प्राभृतैरपूजि । चतुर्द-

शसहस्रखेचरेश्वरेण खरेण सह रावणः शक्रं प्रति चचाल । सुग्रीवोऽपि तत्पृष्ठतः । दशास्यो रेवातटोपितः शुचिर्मणिपट्टे न्यस्तं रत्नमयं

बिम्बं रेवाम्भोभिः संस्नप्य तदम्बुजैः पूजयन्नकस्माद्वार्धिवेलासममहापूरेण हृतायां पूजायां शिरश्छेदं मन्यमानः क्रुद्धो रे कोऽयं पूजाविघ्नं कृतवान्मिथ्यादृष्टिनरः खेचरोऽसुरः सुरो वेत्यभिदधौ। कश्चित्खेचरो न्यवेदयत्। इतः परस्तान्माहिष्मतीपुर्यस्ति। तदीशः सहस्रांशुर्नृपो नृपसहस्रैः सेव्यो महाभुजो रेवायां जलक्रीडायां सेतुबन्धेन वारि बद्ध्वा राज्ञीसहस्रेण खेलति। द्वयोरपि तीरयोस्तस्यात्मरक्षा लक्षसंख्याः सन्ति। ते च तस्य महौजसः शोभामात्रम्। तेन स्त्रीसहस्रान्वितेन पर्यस्यमानं पय उल्लुठितम् तव देवपूजां प्लावयामास। पश्याभिज्ञानम्, एतानि तत्स्त्रीणां निर्माल्यानि, तदङ्गरागैराविलमिदं पयः। दशास्यः क्रुद्धः। रे तेन स्वाङ्गदूपितवारिभिर्दूषितेयं पूजा। दशास्येन तद्बन्धनार्थमादिष्टा रक्षोभटा नभस्थाः क्षितिस्थान्सहस्रांशुभटान्मोहयन्त उपदुद्रुवुः। सहस्रांशुस्तत्तथा दृष्ट्वा धनुरधिज्यं विधाय तान्शरैर्व्यावर्तयत्। दशास्यस्तान्व्यावृत्तान्वीक्ष्य स्वयं गत्वा चिरमस्त्रैर्युद्ध्वा दोर्वीर्येणाजेयं तं विद्यया मोहयित्वा जग्राह। स्वसैन्ये निनाय। संसद्यासीनश्चारणश्रमणं शतबाहुं दृष्ट्वोत्थाय नत्वाऽऽसने स्वयं दत्त आसयित्वा भूमौ निषण्णो बद्धाञ्जलिरागतिहेतुं पप्रच्छ। अहं माहिष्मत्यां शतबाहुर्नृपः सहस्रांशौ राज्यं न्यस्य प्राव्रजमिति मुनिनाऽर्धोक्ते विनयी किं श्रीपूज्यात्मजोऽयमित्यूचे। आमेति मुनिनोक्ते दशास्यः प्राह। मया पूजाभ्रंशादयमाकृष्टः। ततो मन्येऽमुनाप्यज्ञानादेतत्कृतम्। त्वत्सूनुः किमर्हदाशातनां कुर्यादित्युक्त्वा सहस्रांशुंस्तत्रानैषीत्। तेन त्रपावता पिता नतः। दशास्येनोक्तं त्वं त्रयाणामस्माकं तुर्यो बंधुरसि। सहस्रांशुराह व्रतं श्रयिष्ये। इत्युक्त्वा रावणाय स्वांगजं समर्प्य चरमदेहस्ताताान्ते व्रत्ययोध्यायामनरण्यनरेन्द्राय सुहृदे दीक्षां गृहीतामजिज्ञपत्। स्मृतयुगपद्व्रतसङ्केतो दशरथं राज्ये न्यस्य व्रतं ललौ। अथ रावणः शतबाहुसहस्रांशू नत्वा सहस्रांशुसुतं राज्ये न्यस्य गगने चचाल। तदा च नारदर्षियष्टिघातादिजर्जरोऽन्याय इति पूत्कुर्वन् दशास्यमित्याह। राजपुरे मरुत्ताख्यनृपो

यज्ञोऽयं ब्रह्मणोदितः ।
मिथ्यादृग्यज्ञं कुर्वाणोऽस्ति । तत्राऽऽरटतः पशून्दृष्ट्वा मया व्योम्नोऽवतीर्य किमिदमित्युक्तो मरुत्तः प्राह । यज्ञोऽयं ब्रह्मणोदितः ।
इहान्तर्वेदि देवतृप्त्यै पशवो होतव्याः । महाधर्मोऽयम् ।
शरीरं वेदिरुदीरिता । आत्मा यष्टा तपो वह्निर्ज्ञानं सर्पिः प्रकीर्तितम् ॥१३॥
ततस्तस्याऽहमित्याऽऽख्यं वपुर्वेदिरुदीरिता । आत्मा यष्टा तपो वह्निर्ज्ञानं सर्पिः प्रकीर्तितम् ॥१४॥
कर्माणि समिधः क्रोधादयस्तु पशवो मताः । सत्यं यूपः सर्वप्राणिरक्षणं दक्षिणा पुनः ॥१४॥
त्रिरत्नी तु त्रिवेदीयमिनिवेदोदितः क्रतुः । कृतो योगविशेषेण मुक्तेर्भवति साधनम् ॥१५॥
छागवधादिना तु नरक एव । तद्राजन् ! उत्तमोऽसि, बुद्धिमानसि, व्याधोचितं कर्म मा कार्षीः । प्राणिवधेनापि चेत्स्वर्गस्तदाऽयं जीवलोकोऽल्पैरपि दिनैः शून्यः स्यात् । इति महावाक्यात्क्रुद्धैर्द्विजैर्दंडादिभिर्हन्यमानो नंष्ट्वा त्वां प्राप । ततस्तान्पशूंस्त्रायस्वेति । ततो दशास्यस्तद्रिरक्षया विमानादुत्तीर्णो मरुत्तेन पाद्यासनादिनाऽर्चितः । अरे धर्मोऽहिंसातः । तद्यज्ञं मा कार्षीः । चेत्करिष्यसि तदा तवाऽत्र मद्गुप्तौ वासः परत्र च नरके । इति दशास्येनोक्तो मरुत्तो मखं व्यसाक्षीत् ।
अमी पशुवधात्मानो यज्ञाः कुतो जज्ञिरे ? इति रावणपृष्टो नारदोऽवक् । चेदिषु शुक्तिमतीनद्या शोभिता शुक्तिमती पुरी ।
अमी पशुवधात्मानो यज्ञाः कुतो जज्ञिरे ? इति रावणपृष्टो नारदोऽवक् । चेदिषु शुक्तिमतीनद्या शोभिता शुक्तिमती पुरी । ॥१६॥
गतेष्वनेकेषु भूपेषु सुव्रतान्मौनिसुव्रतेः । अभिचन्द्रोऽभवत्तस्यां राजा तत्तनयो वसुः ॥१६॥
वसुः सत्यवाक्त्वेन ख्यातः ।
पार्श्वे क्षीरकदम्बस्य गुरोः पर्वतकः सुतः । राजपुत्रो वसुश्चाहं चापठाम त्रयोऽपि हि ॥१७॥
अस्मासु निशि सुप्तेषु गुरुश्चारणश्रमणाभ्यामित्युच्यमानं शुश्राव । एषामेकः स्वर्गं यास्यति, द्वौ नरकम् । ततो गुरुः परीक्षेच्छुरस्मा-

कमेकैकं पिष्टकुक्कुटं समर्प्य यत्र कोऽपि नेक्षते तत्राऽमी वध्या इत्याह। वसुपर्वतकौ शून्यदेशे जघ्नतुः। अहं पुराद्बहिर्दूरे गत्वा गुरुवचो व्यचारयम्।

अप्तौ पश्यत्यहं पश्याम्यमी पश्यन्ति खेचराः। लोकपालाश्च पश्यन्ति पश्यन्ति ज्ञानिनोऽपि हि ॥१७॥

इति। तन्नूनं दयालवो गुरवोऽस्मत्प्रज्ञां परीक्षन्ते। व्यावृत्य गुरूणां न्यवेदयम्। गुरुभिरालिङ्गितः, श्लाघितः। वसुपर्वतकौ स्ववृत्तशंसिनौ प्रति गुरुराह। रे पापौ युवामपश्यतम्? खेचरादयोऽपश्यन्? कथं हताविति। गुरुः पुत्रस्य पुत्रादप्यधिकस्य च वसोर्नरकगतिज्ञानान्निर्विण्णो दीक्षां जग्राह। पर्वतस्तत्पदेऽभूत्। अहं स्वस्थानमगमम्। अभिचन्द्रेऽप्यात्तव्रते वसुः क्ष्मामपालयत्। सत्यवादीतिप्रसिद्धः सत्यमेव जगाद। अथ विन्ध्यनितम्बे व्याधेन मृगाय क्षिप्तेऽन्तरा स्खलिते बाण आकाशस्फटिकशिला पाणिस्पर्शादबोधि, चिन्तितं च। मया मृगोऽस्यां संक्रान्तः परतश्चरन्ददृशे तदसौ वसुनृपस्य योग्या। तेन रहो ज्ञापितो राजा शिलां जग्राह। तस्मै च धनं ददौ। राजाच्छन्नं तया स्वासनवेदिकां घटयित्वा शिल्पिनोऽघातयत्। तस्यां वेदौ न्यस्तं सिंहासनं सत्यप्रभावान्नभःस्थितमिति जनोऽजानात्। सत्येन तुष्टा देवताऽस्य सान्निध्यं कुर्वन्तीतिप्रसिद्ध्या भीता नृपा वशं ययुः। अन्यदा तत्र गतोऽहं पर्वतकं शिष्याणां ऋग्वेदं व्याख्यानयन्तमजैर्यष्टव्यमित्यत्र मेषैरिति ब्रुवाणं भ्रातर्भ्रान्तिरियं त्रिवार्षिकाणि धान्यानि न जायन्त इत्यजा गुरुणाऽप्याख्याता इत्यवोचम्। पर्वतकः प्राह। तातेन नैवं व्याख्यातम्। निघण्टुष्वप्यजा मेषा इत्युक्तत्वात्।

अवोचमहमप्येवं शब्दानामर्थकल्पना। मुख्या गौणी च तत्रेह गौणीं गुरुरचीकथत ॥१८॥

मुधा मा पापमर्जय। पर्वतेनोक्तम्। गुरुणाऽजा मेषा उक्ताः। जिह्वाच्छेदः पणः। वसुः सहाध्यायी प्रमाणम्। तच्चाहं प्रत्यश्रौषम्।

माता पर्वतं रहः प्रोचे । गृहकर्मण्यग्राऽप्यहं त्वत्पितुरजास्त्रिवार्षिकं धान्यमित्यश्रौषम् । त्वमविमृश्य पणं व्यधाः । पर्वतोऽवदत् । कृतस्याऽन्यथाकरणं नास्ति । अम्बा गत्वा नृपं पुत्रभिक्षां ययाचे । राज्ञा सादरं पृष्टा तं वृत्तान्तं निवेद्याजान्मेषान्वदेरित्यर्थयामास । वसुर्गुरुपत्नीवचोऽन्यथात्वं कूटसाक्ष्यं च महापापमित्यादि ब्रुवाणो गुरोः सूनुं बहूकुरु सत्यव्रतं वेति सरोषं तयोक्तस्तद्वचोऽमंस्त । ततः पर्वतो नारदं च मध्येसभ्यासीनेषु स्वं स्वं पक्षमशंसाव । विप्रवृद्धैः सत्यश्रावणायां कृतायां पर्वतपक्षं स्थापयन्क्रुद्धाभिर्देवताभिराकाशस्फटिकासनवेदिकाटलनाद्भूमौ पतितो निपातितो वसुर्नरकं ययौ । वसोः सुताः पृथुवसुः, चित्रवसुः, वासवः, शक्रः, विभावसुः, विश्वावसुः, शूरः, महाशूर एते पैतृके पदे निषण्णा देवताभिस्तत्कालमहन्यन्त । सुवसुर्नवमः सूनुर्नष्ट्वा नागपुरं ययौ । दशमस्तु बृहद्ध्वजो मथुराम् । पर्वतस्तु पौरैर्बहुधा हसित्वा पुर्या निर्वासितो महाकालासुरेण सङ्गृहे ।

कोऽयं महाकाल इति दशास्यपृष्टो नारदः प्राह । चारणयुगलपुरेऽयोधनो राजा । दितिः प्रिया । सुलसा सुता । तस्याः स्वयंवरे नृपा आययुः । सर्वेषु सगरोऽधिकः । सगराज्ञया मन्दोदर्याह्वा द्वाःस्था प्रत्यहमयोधननृपावासं ययौ । कदाचित्सा छन्ना गृहोद्यानकदलीगृहे दितिसुलसयोः संलापं शुश्राव । दितिः सुतामूचे । भरतबाहुबल्योः सूर्यसोमौ सुतौ । सोमवंशे मातद्भ्रातृणबिन्दुः । सूर्यवंशेऽयं त्वत्पिता । त्वत्पितुः स्वसा सत्ययशास्तृणबिन्दोर्भार्या । मधुपिङ्गः सुतः । अहं त्वां तस्मै दीयमानामीहे । त्वत्पिता तु स्वयंवरवराय दित्सति । ततस्त्वया मन्मनःशल्योद्धाराय मद्भ्रातृजो वरणीयः । सुलसाऽपि तन्मेने । मन्दोदरीतो ज्ञातवृत्तः सगरः स्वपुरोधसे विश्वभूतयेऽकथयत् । सोऽपि सद्यः कविस्तथा राजलक्षणसंहितां चक्रे, यथा सगरोऽखिलराजलक्षणयुक्तो, मधुपिङ्गलस्तु तद्रहितः स्यात् । तत्पुस्तकं च पुराणवत्पेटायां क्षिप्तम् । अन्यदा राजाज्ञया संसद्याकृष्टम् । तत्रादौ सगरेणोक्तं यो निर्लक्षणः स

सगरं वव्रे । मधुपिङ्गो बालतपसा महाकालाह्वः वध्यस्त्वाऽयश्च । वाच्यमाने पुस्तके मधुपिङ्गले निर्लक्षणत्वाल्लज्जिते निर्गते सुलसा षष्टिसहस्रेशोऽसुरो जातः ।

अवधिना सगरचेष्टितं ज्ञात्वा सगरमन्यांश्च राज्ञो जिघांसुः शुक्तिमतीनद्यां विप्रवेषः पर्वतं दृष्ट्वाऽवादीत् । शाण्डिल्यो नामाऽहं त्वत्पितुर्मित्रमहं क्षीरकदम्बश्च सहाध्यायिनौ । नारदेन जनैश्च धर्षितं त्वां श्रुत्वा समागमम् । मन्त्रैर्विश्वं मोहंस्त्वत्पक्षं पूरयिष्ये । इत्युक्त्वाऽसौ पर्वतयुतः कुधर्मेण जनं मोहयामास । जने व्याधिभूतादिदोपानजनयत् । पर्वतोऽपि शाण्डिल्यानुज्ञया रुक्शान्तिं कृत्वा जनान्स्वमतेऽतिष्ठिपत् । एवं सगरस्यापि पुरान्तःपुरादौ तद्विकृतरोगपीडिते सशाण्डिल्यपर्वताश्रयाद्रोगशान्तिर्जज्ञे । सौत्रामण्यां सुरापानम् । गोसवेऽगम्यागमनम् । मातृमेधे पितृमेधे च तद्वधः । कूर्मपृष्ठोपर्यग्नौ जुह्वकाख्याय स्वाहेत्युक्त्वा होमः । कूर्माभावे खलतेः पिंगलाभस्य जले मुखदघ्नेऽवतीर्णस्य द्विजस्य कूर्माभे मूर्धनि होमः । यज्ञे मांसादनम् । सर्वं पुरुषमेवेदं ततः कोऽहन्ता । तेन यथेच्छं यज्ञे हिंसनं कार्यमित्याद्युपदेशैः सगरं स्वमतस्थं कृत्वाऽन्तर्वेदिकुरुक्षेत्रादिषु स मखानकारयत् । राजसूयादीनप्यकार्षीत् । यज्ञहतांश्च सोऽसुरो विमानस्थानदर्शयत् । सप्रत्ययो लोको निःशंकं यज्ञांश्चक्रे । अन्यदा मया दिवाकरखेचरेण यज्ञपशुषु हारितेषु सोऽसुरस्तद्विघाघाताय ऋषभप्रतिमामस्थापयत् । ततः स खेचरोऽहं च क्षीणोपायावन्यतो जग्मिव । ततस्तेन यज्ञेषु भावितः सगरः सुलसायुक्तो यज्ञानले जुहुवे । कृतकृत्येन तेन चासुरेण स्वास्पदेऽव्राजि । एवं पर्वतात्प्रवृत्ता हिंसात्मका मखास्त्वयैव निषेध्याः । रावणस्तत्स्वीकृत्य मरुत्तान्नारदं क्षमयित्वा विससर्ज ।

मरुत्तेन कोऽयं कृपालुरितिपृष्टो रावणः प्राह । ब्रह्मरुचिस्तापसः । तद्भार्या कूर्मी गुर्व्यभूत् । तत्र साधवः समीयुः । एकेन साधुना

तापसः प्रबोध्य प्रव्राजितः। कूर्मी श्राविकाऽभूत्। सा जाते सुते नारदे जृम्भकामरैर्हृते दुःखात्प्रवव्राज। नारदो देवैः पालितोऽध्या पितशास्त्रो दत्तनभोगामिविद्योऽणुव्रतधरो यौवनं प्राप। शिखाधारणान्न गृही न संयतः।

कलहप्रेक्षणाकांक्षी गीतनृत्यकुतूहली। सदा कन्दर्पकौकुच्यमौखर्यात्यन्तवत्सलः ॥१९॥

वीराणां कामुकानां च सन्धिविग्रहकारकः। छत्रिकाक्षवृसीपाणिरारूढः पादुकासु च ॥२०॥

देवैः संवर्धितत्वाच्च देवर्षिः प्रथितो भुवि। प्रायेण ब्रह्मचारी च स्वेच्छाचार्यपि नारदः ॥२१॥

इति श्रुत्वा मरुत्तनृपेण रावणः क्षमयित्वा कनकप्रभां कन्यां दत्त्वा विसृष्टो मथुरां ययौ।

मथुरानृपो हरिवाहनः शूलभृता मधुना सुतेन सह भक्त्योपस्थितः। रावणेन कुतोऽदः शूलमित्यपृच्छि। पित्रा सभ्रूसंज्ञमादिष्टो मधुः प्राह। प्राग्जन्मसुहृदा चमरेन्द्रेण ममार्पितम्। उक्तश्च–धातकीखण्डैरावते शतद्वारे सुमित्रो राजाङ्गजः, प्रभवश्च कुलपुत्रकः सुहृदौ। सुमित्रो राजाऽभूत्। राज्ञा च प्रभवोऽप्यात्मतुल्यश्चक्रे। अन्यदा नृपोऽश्वहृतः पल्लीपतिसुतां वनमालां विवाह्यायौ। प्रभवं तद्रूपदर्शनात्कृशं निर्बन्धात्पृष्ट्वा विज्ञाय तां तदावासे प्रहित्य निस्त्रपोऽहं त्वं मे माताऽसीति जल्पंतं स्वशिरश्छिन्दानं कथंचित्स्वस्थीचकार। तौ चिरं राज्यं चक्रतुः। सुमित्रः प्रव्रज्येशाने सुरो भूत्वा च्युत्वा त्वं मधुः। प्रभवोऽपि भवं भ्रान्त्वा बालतपसा चमरेन्द्रोऽहम्। आयोजनद्विसहस्रथा एतच्छूलं कार्यं कृत्वा निवर्तत इति। रावणस्तच्छ्रुत्वा मधवे मनोरमां कन्यां ददौ। लङ्काप्रयाणादष्टादशसु वर्षेषु मेरौ पाण्डके चैत्यान्यानर्च।

कुम्भकर्णाद्या रावणाज्ञया दुर्लङ्घपुरे प्राग्दिक्पालं नलकूबरं ग्रहीतुं ययुः। आशालीविद्यया कृतं योजनशतमानं वह्निमयं वप्रं

सर्वतो वह्निमययन्त्रमवष्टभ्य स्थितं तं द्रष्टुमप्यशक्ता व्यावृत्य रावणाय व्यजिज्ञपन्। रावणोऽप्यागतोऽनुपायः सचिन्तोऽनुरक्तया नलकूबरपत्न्योपरम्भया दूतीमुखेनाऽभाणि। उपरम्भा त्वद्गुणै रक्ता वप्ररक्षिकामाशालीविद्यां त्वद्वशां करिष्यति। पुरं ग्रहीष्यसि। सुदर्शनं चक्रमत्र ते सेत्स्यसि। रावणेक्षितो विभीषणस्तत्स्वीकृत्य तां विससर्ज। रावणः क्रुद्धो विभीषणमाह। अरे कुलविरुद्धं किं मेने। वचसाऽपि त्वयाऽयं नवः कुलकलङ्कश्चक्रे। आर्य! न वाङ्मात्रं कुलकलङ्काय। सा विद्यां यच्छतु, वैरीवश्योऽस्तु, तां वाचोयुक्त्या त्यजेरिति वदत्येव विभीषणे साऽऽगत्य तां पुरे वप्रीकृतां विद्यां व्यन्तराधिष्ठितानि च शस्त्राणि ददौ। दशास्यस्तया विद्याऽग्निवप्रं संहृत्य पुरं विवेश। वैरी सन्नद्धो विभीषणेनाऽग्राहि। तत्र च देवासुरैरप्यजय्यं शक्रसत्कं सुदर्शनं चक्रं रावणः प्राप। तं रिपुं नतं तत्रैव संस्थाप्य स्वं भर्तारं भज, विद्यादानाद्गुरुरसीत्युपरम्भां विसृज्य रथनूपुरमभि चचाल।

तमायान्तं श्रुत्वा सहस्रारः सुतमिन्द्रं सस्नेहमूचे। त्वं विक्रमी वंशोन्नतिकरः सम्प्रति तु नीतीनामप्यवकाशो देयः। सरभाद्या एकान्तविक्रमान्नश्यन्ति। पृथ्वी वीरप्रसूः। मानो न कार्यः। अधुना दशास्यो वीरः सहस्रांशुबन्धको हेलोद्धृताष्टापदो मरुत्तक्रतुकालो जम्बूद्वीपेशयक्षेन्द्रेणाऽप्यक्षोभितो नागेन्द्राल्लब्धशक्तिर्भ्रातृद्वयोत्कटो यमस्यापि यमस्त्वत्पत्तिं वैश्रवणं पत्तीकृत्य सुग्रीवधृताज्ञोऽनुजबद्धदुर्लङ्घपुरेश्वरनलकूबरस्त्वां प्रत्यापतन्प्रणिपाताच्छमनीयः। अस्मा इमां रूपिणीं कन्यां यच्छेत्युक्ते क्रुद्धे शक्रे कथमस्मै वध्याय कन्या दीयते? एतद्गृह्यैर्हतं तातं विजयसिंहं स्मर। यदेतत्पितामहस्य मालिनो मया कृतं तदस्यापि करिष्ये। स्नेहात्कातरो मा भूरिति वदत्येव दशास्ये सैन्यैः पुरं वेष्टितम्। दूतेन स्वसेवार्थं भणितेऽपि शक्रे मदममुञ्चति दशास्यः सन्नद्धोऽभूत्। इन्द्रोऽपि सन्नह्य पुरान्निर्ययौ। महारणे दशास्येन्द्रौ भुवनालङ्कारैरावणस्थौ समयुध्यताम्। अथ मन्त्रास्त्रयुद्धं कृत्वा दशास्यः स्वेभादैरावणं

गत्वा तन्महामात्रं हत्वा शक्रं बद्ध्वा सैरावणं स्वानीके नीन्ये। श्रेणिद्वयेश्वरीभूतो निवृत्य लङ्कां प्राप्तः। शक्रं कारायां चिक्षेप। सह-
स्रारो दिक्पालान्वितो लङ्कायामेत्य बद्धाञ्जलिर्दशास्यं नत्वा बभाषे। कैलाशोद्धर्त्रा त्वया जिता इति न जिह्रीमः। त्वयि ततो
याञ्चाऽपि न त्रपाहेतुः। पुत्रभिक्षां देहि। यद्ययं सदिक्पालपरिवारः क्षणे क्षणे लङ्कां तृणकाष्ठादिरहितां सर्वतः कुरुते। प्रातः प्रातः
दिव्यगन्धजलैरभितोऽप्यभिषिञ्चति। मालिकवत् देवतावसरादिषु पुष्पाण्युच्चित्य ग्रथित्वा पूरयति तदाऽमुं शक्रं मुञ्चे। एवं कर्माणि
कुर्वन् राज्यं स्वं गृह्णातु। तथेति सहस्रारेणोक्ते मुक्तः शक्रोऽत्यन्तमुद्विग्नो रथनूपुरमेत्य तस्थौ।

निर्वाणसंगमं नाम ज्ञानिनं तत्राऽऽगतं रावणात्केन कर्मणाऽयं न्यत्कार इत्यप्राक्षीत्। ऋषिर्बभाषे। अरिञ्जयपुरे खेटेशज्वलन-
सिंहपुत्र्या अहल्यायाः स्वयंवरेऽनेके खेचरेशा आययुः। चन्द्रावर्तपुरेश आनन्दमाली तत्राऽऽगात्। सूर्यावर्तपुरेशश्च त्वं तडित्प्रभः।
त्वां सहायातमिति त्यक्त्वा कन्याऽऽनन्दमालिनमवृणोत्। तव च पराभवोऽभूत्। अन्यदाऽऽनन्दमाली गृहीतव्रतो विहरन्रथाव-
र्ताद्रौ त्वया ददृशे। पूर्वाभिभवस्मृतेस्त्वया बद्ध्वा ताडितोऽपि ध्यानान्नाचालीत्। तद्भ्राता कल्याणगुणधरो मुनिर्मुक्ततेजोलेश्यस्त्व-
त्पत्न्या सत्यश्रिया शमितस्तेजोलेश्यां सञ्जह्रे। त्वमपि मुनिपराभवपापाद्भवं भ्रान्त्वा शुभं कर्म कृत्वा शक्रोऽभूः। रावणात्पराभव-
स्तत्कर्मकृतः। दत्तवीर्ये सुते राज्यं न्यस्य व्रतं गृहीत्वा शक्रः सिद्धः।

अन्येद्युर्दशास्योऽनन्तवीर्यर्षिं नन्तुं स्वर्णतुंगे शैले ययौ। स केवली रावणेन कुतो मे मृतिरिति पृष्टः, पारदारिकदोषेण भवि-
ष्यतो वासुदेवादित्याह। रावणः परस्त्रियमनिच्छन्तीं न रमयिष्यामीत्यभिजग्राह, पुष्पकासीनश्च लङ्कां प्राप।

॥ इति श्रीहेमचन्द्ररचिते त्रिषष्टिशलाकापुरुषचरिते सप्तमे पर्वणि रावणदिग्विजयो नाम द्वितीयः सर्गः॥

## ॥ तृतीयः सर्गः ॥

वैताढ्य आदित्यपुरपत्तने प्रह्लादनृपकेतुमत्योः पवनञ्जयः सुतः। इतश्चात्रैव भरत उपसमुद्रं दन्तिपर्वते महेन्द्रनगरे महेन्द्रः खेचरेशः। तस्य हृदयसुन्दर्यां पत्न्यामरिन्दमादिपुत्रशतोर्द्ध्वमञ्जनासुन्दरी पुत्री। पित्राज्ञया मन्त्रिषु तदर्थमनेकखेचररूपाणि पट्टेष्वालेख्य दर्शयत्सु हरिण्याभाङ्गजविद्युत्प्रभस्य प्रह्लादात्मजपवनञ्जयस्य च रूपं दृष्ट्वा रूपवतोः कुलिनयोर्द्वयोर्मध्येऽस्याः को वर इति राज्ञोक्ते मन्त्र्यभ्यधात्। नैमित्तिकैरष्टादशाब्दायुर्मोक्षंगमी विद्युत्प्रभः प्रोचे। पवनञ्जयस्तु चिरायुर्योग्यो वरस्तदस्मै सुतां देहि।

अत्रान्तरे नन्दीश्वरे यात्रायै खेचरा ययुः। तत्र गच्छन्प्रह्लादो महेन्द्रं स्वसुताय कन्यां ययाचे। महेन्द्रस्तदग्रेऽप्यभिष्टमिति प्रतिपेदे। तृतीये दिवसे मानससरोवरे विवाह इत्युक्त्वा स्वस्थानं तौ प्रापतुः। ततः स्वजनैः सह मानसे गत्वाऽऽवासं चक्रतुः। पवनञ्जयो मित्रं प्रहसितं कन्यास्वरूपं पप्रच्छ। सोऽपि तद्रूपं वचसामगोचरं रम्भादिभ्योऽप्यधिकं वर्णयन् पवनञ्जयं तदैव तद्दिदृक्षोत्सुकं चक्र। ततः समित्रः पवनञ्जयो निश्युत्पत्य सप्तभूमिके प्रासादे छन्नीभूय तां द्रष्टुमारेभे। तत्रैका सखी प्राह। धन्यासि यस्याः पवनञ्जयः पतिः। द्वितीयाऽवदत्। चरमदेहं विद्युत्प्रभं मुक्त्वा को वरः श्लाघ्यः। पुनः प्रथमा साह। विद्युत्प्रभः स्वल्पायुः। न युक्तो वरः स्वामिन्याः। द्वितीयोचे। स्तोकमप्यमृतं श्रेयः विषस्य तु भारोऽपि न। पवनञ्जयोऽचिन्तयत्। अस्याः प्रियमिदम्। यतो न निषेधति। ततः क्रुद्धो खड्गकरः प्रादुर्भूय ययोर्हृदि विद्युत्प्रभस्तयोर्द्वयोरपि शिरश्छिनद्मीति वदंश्चचाल। प्रहसितस्तं बाहौ धारय-

प्रातर्मित्रं प्रोचे। अनया
न्सापराधाऽपि स्त्री अवर्ज्यन किं पुनरियं निरपराधेति निषिद्ध उत्पत्य स्वावासं गतो दुःखितो जाग्रत्तस्थौ। प्रातर्मित्रं प्रोचे। अनया निर्दोषा चेयम्। स्वस्य
विरक्तया किम्। तदेहि स्वपुरीं यामः। मित्रमाह। प्रतिपन्नं नोल्लङ्घ्यम्। गुरुभिः प्रतिपन्नस्य तु का कथा। निर्दोषा चेयम्। स्वस्य
तत्राथ पितरौ स्वतन्त्रतया गच्छन् किं लज्जयसि। मित्रवचसा स्थितस्तां परिणिन्ये। प्रह्लादो वधूवरमादाय महेन्द्रार्चितः स्वपुरीं
प्राप। अञ्जनसुन्दर्याः सप्तभूमिकं प्रासादमर्पयामास। पवनञ्जयस्तु तां वाचाऽपि न संभावयामास। साऽपि पर्यङ्कस्य पार्श्वद्वयमाप्नती
यपंतदीर्घा निशाः कथञ्चिन्निनाय। ज्ञान्वन्तरन्यस्तमुखी कान्तालेखनरेखाह्यान्यतिवाहयति स्म। सखीभिर्मुहुर्भाष्यमाणाऽपि तूष्णी-
मेव तस्थौ।

अथ रावणदूतः प्रह्लादं प्रोचे–वरुणो रावणेन वैरायते। नमस्कारं याचितो दोर्दण्डौ पश्यन्निदं जल्पति। को रावणः ? तेन
किं सिध्यति ? नाहमिन्द्रो, न कुबेरः, न नलकूबरः, न सहस्रांशुः, न मरुत्तः, न यमः, न कैलासाद्रिः, किन्तु वरुणोऽहम्। यद्यस्य
देवताधिष्ठित रत्नैर्दर्पः, तदायातु तद्दर्पं हरिष्ये। क्रुद्धो रावणो गत्वा तत्पुरं वेष्टितवान्। वरुणोऽपि राजीवपुण्डरीकादिसुतयुतः
पुरान्निःसृत्य युयुधे। वरुणात्मजः खरदूषणयोर्बद्ध्वा नीतयोः रक्षःसैन्ये भग्ने वरुणो निजपुरीं विवेश। रावणः खेचरेशाहूतये दूतान्प्रा-
हिणोत्। अहं तुभ्यं प्रहितः।

ततः प्रह्लादं चलन्तमाग्रहान्निषिद्ध्य पवनश्चचाल। अञ्जना पत्युर्यात्रां श्रुत्वा प्रासादादवरुह्य स्तम्भमवष्टभ्य तं द्रष्टुं निर्निमेषा
तस्थौ। पवनस्तां कृशां निर्विलेपनां लुलितालकच्छन्नभालां नितम्बन्यस्तश्लथभुजलतां धूसराधरां बाष्पधौतमुखीं पुरःस्थां दृष्ट्वा दध्यौ।
अहो निर्लज्जत्वं, निर्भीकत्वं, यदि वा पुराऽपि ज्ञातमदः परं मया गुर्वाज्ञाभङ्गभीतेरूढेयम्। साऽपि पादयोः पतित्वा जजल्प। त्वया

सर्वोऽपि सम्भाषितोऽहन्तु न कदाचित्तथापि विज्ञप्यसे न विस्मार्याऽहम् । पवनोऽपि तामवमत्यैव ययौ । साऽप्यन्तर्गृहं गत्वा दुःखिनी भूमौ पपात । पवनस्तत उत्पत्य मानससरः प्राप्तो निशि विप्रया विकृतसौधमध्यासीनः पर्यङ्कस्थश्चक्रवाकीं प्रियवियोगाद्दुःखितां क्रन्दन्तीं वीक्ष्य सा कथं भविष्यतीति ध्यायन्प्रहसितायाऽऽचख्यौ । तेन च प्रेरित उत्पत्याऽञ्जनावेश्मनि द्वारि तिरोहितस्तस्थौ । प्रहसितस्तु तदोकःप्रविष्टस्तामल्पाम्भसि शफरीमिव पर्यङ्के वेल्लन्तीं चित्तसन्तापस्फुटद्धारमौक्तिकां मुक्तदीर्घनिःश्वासा[1]मीषांतनिःसहस्रस्तभुजभग्नरत्नकङ्कणां सख्याऽऽश्वास्यमानां शून्यदत्तदृशं शून्यचित्तां ददर्श । साऽपि तं दृष्ट्वा कस्त्वं ? परस्त्रीगृहं माऽऽस्थाः, सखि ! एनं दोष्णा धृत्वा बहिः क्षिप । अत्र पवनञ्जयं विनाऽन्यस्य न प्रवेशाऽधिकार इति वदन्ती तेन नत्वा स्वामिनि ! वर्धाप्यसे, पवनः समायाति । तन्मित्रमहं पुरःसरः समागममित्युक्ता । प्रहसित ! दैवेन हसिताऽहं त्वं मा हसीः । नाऽयं नर्मक्षणः । यदि वा मत्कर्मणामेवाऽयं दोषः । यत्तादृशोऽपि कान्तो मां त्यजति । मम पाणिग्रहादनु द्वाविंशतिः समा व्यतीतास्तथाऽपि जीवामीतिवादिनी संक्रान्तदुःखेन पवनेन प्रविश्य सगद्गदं बभणे । मया निर्दोषाऽप्यज्ञत्वात्त्यक्ताऽसि । मद्भाग्यैर्जीविताऽसि । साऽपि प्रियं ज्ञात्वा सत्रपा पर्यङ्केषावष्टम्भादुत्थिता कान्तेन वलयितदोष्णा गृहीताऽधिपर्यङ्कमुपवेशिता मदागः क्षमस्वेत्युक्ता तव दास्यस्मि मय्यनुचिता क्षामणेत्यभाषत । सख्यां मित्रे च गते स्वैरं रन्त्वा प्रातर्ज्ञात्वा प्रिये ! खेदं माकार्षीः, सुखं तिष्ठ । दशास्यकृत्यं सम्पाद्यायामीत्यापृच्छन् प्रियस्तयाऽवाचि । शीघ्रमागच्छेश्चेन्मज्जीवितं वाञ्छसि । अन्यच्चाद्य ऋतुस्नाताऽहं यदि गर्भस्त्वत्परोक्षे भवेत्तदा खला अपवदन्ति । पवनो जगौ शीघ्रमेष्यामि । कथं क्षुद्राऽवकाशो भविता ? अथवा मत्सङ्गसूचकं मन्नामाङ्कमङ्गुलीयं गृहाण । तत्समर्प्य मानसतीरस्थे स्वसैन्ये

१ ईषा पर्यङ्कस्यावयवविशेष । "ईस" इति भाषायाम् ।

रावणोऽपि पातालं प्रविश्य ससैन्यः प्रतिवरुणं ययौ ।
ययौ । ततोऽपि लङ्कां गत्वा दशास्यं ननाम । रावणोऽपि पातालं प्रविश्य ससैन्यः प्रतिवरुणं ययौ । दर्शिताङ्गुलीयाऽङ्गुलीयमात्रेण प्रतारयसि ?

इतश्च सगर्भाऽञ्जनसुन्दरी केतुमत्या श्वश्र्वा साधिक्षेपं कुलकलङ्ककारिणीति निर्भर्त्सिता दर्शिताङ्गुलीयाऽङ्गुलीयमात्रेण प्रतारयसि ? यस्त्वन्नामाऽपि नाऽग्रहीत् तेन कथं सङ्गमः ? मद्गृहान्निर्गच्छ । गच्छ पितृगृहमित्युक्त्वा सखीयुता यानमारोप्यारक्षनरैर्महेन्द्रनगरोपान्ते मुमुचे । सा तत्र कष्टां रात्रिं नीत्वा प्रातर्भिक्षुकीव पितृगृहद्वारं ययौ । प्रतिहारानुयुक्ता सखी तं वृत्तान्तमाचख्यौ । प्रतिहाराज्ज्ञातवृत्तः पिता स्त्रीणामचिन्त्यं चरितमिति चिन्ताप्रपन्नः । प्रसन्नकीर्तिना सुतेनोचे । निर्वास्यतामियं कुलदूषिकेति । महोत्साहो मन्त्र्युवाच । श्वश्रूदुःखे पुत्रीणां पितृगृहं शरणम् । क्रूरा श्वश्रूर्निर्दोषामप्यमूं कंचिद्दोषमुत्पाद्य निर्वासयेदपि । दोषादोषव्यक्तिं यावच्छन्नं पाल्यताम् । राजाऽवदत्–भर्तुर्द्वेष्येयम् । तस्मादेव तत्कथं गर्भः सम्भाव्यते । मुखमस्या नेक्षे । राजाऽऽज्ञया द्वाःस्थस्तां निरवासयत् । क्षुत्तृट्क्लान्ता रुदती दर्भपाटितांह्रितला तरौ तरौ विश्राम्यन्ती सख्या सह सा चचाल । पूर्वाऽऽयातनृपपुरुषैर्निषेधात्क्वापि ग्रामपुरादौ नावस्थानं प्राप । एकस्यां महाटव्यां तरुमूलनिषण्णा श्वश्रूपितृमातृभ्रातृभर्त्रुपालम्भमयं रुदन्ती सख्या सम्बोध्याग्रतो नीता । गुहान्तर्ध्यानस्थममितगतिचारणश्रमणं प्रेक्ष्य ननाम । ध्यानान्ते धर्मलाभयन् मुनिः सख्याऽञ्जनादुःखनिवेदनपूर्वं कोऽस्या गर्भेऽभवत् । केन च कर्मणेदृशी दशेति पृष्टोऽवदत् ।

जम्बूद्वीपभरते मन्दरपुरे प्रियनन्दीवणिक्सुतो दमयन्तः साधुभ्यो गृहीतसम्यक्त्व विविधनियमो द्वितीयकल्पे सुरः । च्युतो मृगाङ्कपुरेशहरिचन्द्रसुतः सिंहचन्द्रः श्रितजिनधर्मः सुरीभूतो वैताढ्ये वारुणे नगरे सुकण्ठसुतः सिंहवाहनो राज्यं भुक्त्वा श्रीविमलतीर्थे लक्ष्मीधरर्षेर्लब्धव्रतो लान्तकेऽमरीभूय च्युत्वा त्वत्सख्याः कुक्षाववतीर्णः । चरमदेहोऽयं दोष्मान् ।

अन्यच्च कनकपुरे कनकरथराजस्य कनकोदरीलक्ष्मीवत्यौ प्रिये। लक्ष्मीवती श्राविका रत्नमयं जिनबिम्बं सदाऽऽनर्च। कनकोदर्या मात्सर्यात्तद्बिम्बमवकरान्तश्चिक्षिपे। अन्यदा जयश्रीगणिन्या तद् दृष्ट्वा प्रबोधिता सानुतापा सा तद् बिम्बं प्रमृज्य क्षमयित्वा यथास्थानं न्यवेशयत्। तदादि सम्यक्त्वधरा मृत्वा सौधर्मे देवी ततश्च्युत्वा त्वत्सखी त्वं च तत्र भवे अस्या जामिस्तत्कर्मणोऽनुमन्त्री। तत्पाकं सहाऽनुभुङ्क्षे। भुक्तप्रायश्च कर्म। जैनो धर्मो गृह्यताम्। मातुलोऽकस्मादागत्यैनां स्वगृहे नेष्यति। पत्या सङ्गोऽचिराद्भविष्यतीत्युक्त्वाऽऽर्हते धर्मे ते संस्थाप्य मुनिर्नभसोत्पपात।

तत्र च महाक्रूरः सिंहस्तयोर्भयं जनयन् शरभरूपेण तद्गुहेशमणिचूलाख्यगन्धर्वेण नाशितः। गन्धर्वः स्वं रूपं प्रपद्य सप्रियस्तयोः प्रमोदायार्हद्गुणस्तुतिं जगौ। ते तत्रस्थे तेन कृतसान्निध्ये मुनिसुव्रतप्रतिमां संस्थाप्य पूजयतः स्म। अञ्जना सल्लक्षणं सुतमसूत। सखी सूतिकर्माण्यकृत। सुतमङ्कमारोप्य रुदतीं हनूपुरेशः प्रतिसूर्यः खेचरस्तां प्रेक्ष्य पृष्टज्ञातवृत्तो रुदन् त्वन्मातुर्भ्राताऽहं दिष्ट्या त्वां जीवन्तीमपश्यमिति वदन् सहाऽऽयातं दैवज्ञं सूनोर्जन्मादि पप्रच्छ। सोऽवदत् राजाऽवश्यं भावी। भवेऽत्रैव सेत्स्यति। अद्य चैत्रबहुलाष्टमी, रविर्दिनेशः, श्रवणो धिष्ण्यम्, मेषे रविस्तुङ्गः।

चन्द्रमा मकरे मध्ये भवने समवस्थितः। लोहिताङ्गो वृषे मध्यो मध्यो मीने विधोः सुतः ॥२२॥

कर्के गुरुरुच्चः। मीने दैत्यगुरुस्तुङ्गः शनियुतः। मीनलग्नोदये ब्रह्मयोगे सर्व्वमिदं शुभम्।

प्रतिसूर्यस्तां ससखीं साङ्गजां विमानमारोप्य स्वपुरं प्रतस्थे। बालो विमाने लम्बमानोच्चरत्नप्रालम्बकिङ्किणीर्जिघृक्षुर्मातुरुत्सङ्गादुत्पतितो गिरिमूर्ध्नि पपात। स गिरिस्तत्पातनिर्घातवशात्कणशोऽभवत्। प्रतिसूर्यो हृदयमाघ्नत्या रुदत्या अञ्जनायास्तं बालम

नुन्पत्य लात्याऽक्षताङ्गमार्पयत् । हनुरुहं स्वपुरं ययौ । हनुरुहपुरे जातमात्राऽऽगतत्वात्तत्सूनोर्हनूमानित्यभिधा मातुलेन चक्रे । विमा-नपतितेनानेन शैलश्चूर्णित इति श्रीशैल इत्यपराख्या । प्रतिदिनं ववृधे । अञ्जना तु दोषः कथमुत्तरिष्यतीति सदा दध्यौ ।

इतश्च पवनो वरुणेन सन्धिं कृत्वा खरदूषणौ मोचयित्वा तोषितरावणः स्वपुरमागतः । पितरौ नत्वाऽञ्जनावासं गतस्तामदृष्ट्वा कस्याश्चित्स्त्रियः सकाशाज्ज्ञातवृत्तः प्रियांतकः श्वशुरपत्तनं ययौ । तत्राऽप्येकस्याः स्त्रियः पार्श्वे पृष्ट्वा पित्राऽपि निर्वासितां श्रुत्वा वज्राहत इव शैलवनादिषु भ्राम्यंस्तदुदन्तमप्राप्य विषण्णः प्रहसितमित्रमवदत् । सखे ! गत्वा पित्रोः कथय । अञ्जना न दृष्टा पुनरर-ण्ये गवेषयन्यदि न द्रक्ष्ये तदाऽग्निं विशामि । स गत्वाऽकथयत् । केतुमती तच्छ्रुत्वा मुमूर्च्छ । संज्ञां लब्ध्वोवाच । प्रहसित ! त्वया स एकाकी किं वनेऽमोचि ? अथवाऽहमेवाविमृश्यविधायिनी । मयाऽत्रैव साध्वीदोषारोपफलं लेभे । एवं रुदतीं तां निवार्य प्रह्लादः सबलः सुतान्वेषणाय चचाल । सर्वविद्याधरेन्द्राणां पार्श्वेऽञ्जनापवनशुद्ध्यै नरान्प्राहैषीत् । स्वयं च सर्वत्राऽन्वेषयन् भूत-वनं गतः । चिताग्निं ज्वालयन्तं पवनं ददर्श । शुश्राव च । हे वनदेव्यः ! प्रह्लादकेतुमतीसुतोऽहम् । मत्पत्नी महामत्यञ्जना निर्दो-षाऽपि मया वैर्दिनकरात्रि रमिताऽर्पिताभिज्ञाना जातगर्भा दोषशङ्कया गुरुभिर्निर्वासिता क्वाऽप्यस्तीति न ज्ञायते । ममैवाज्ञानदोषो-ऽयम् । तदमात्सौ स्वां तनुमत्राग्नौ जुहोमि । यदि पश्यथ, तदाऽदो ज्ञापयध्वम् । त्वद्वियोगात्तव पतिरग्नौ विवेश ।

राजा तच्छ्रुत्वा तमग्नौ झम्पां दित्सन्तं बाहुभ्यां दधार, कोऽयं मम कान्तावियोगार्तिप्रतीकारविघ्न इत्युक्तवन्तं तमुवाच । वत्स ! त्वत्पिताऽहम् । त्वन्मात्रैकमविमृश्य कृतं त्वं द्वितीयं मा कृथाः । सहस्रशो विद्याधरा मदादिष्टास्तामन्वेषयन्ति । अत्रान्तरे केऽपि खेचराः पवनाञ्जने गवेषयन्तो हनूपुरं ययुः । अञ्जना तेभ्यः पवनस्याग्निप्रवेशप्रतिज्ञां श्रुत्वा मुमूर्च्छ । उपचारैर्लब्धसंज्ञाऽ-

रोदीत् । नार्यः पतिव्रता वह्निं विशन्तीति युक्तम् । स्त्रीसहस्रभोक्तॄणान्तु नराणां क्षणिकः कान्ताशोकः । तत्कुतोऽग्निप्रवेशः । प्रिय ! तदिदं साम्प्रतं विपरीतं जज्ञे । नाऽयं श्वशुरयोर्दोषो, न वा पित्रोः किन्तु ममैव कर्मदोषोऽयमिति रुदतीं तां बोधयित्वा ससुतां विमानमारोप्य प्रतिसूर्यः पवनान्वेषणं कुर्वन् तत्रेयाय । प्रहसितः साञ्जनं तमायान्तं दृष्ट्वा जयपूर्वं प्रह्लादपवनयोराचख्यौ । प्रतिसूर्याञ्जने प्रह्लादं नेमतुः । प्रह्लादः प्रतिसूर्यमालिङ्ग्याङ्कन्यस्तपौत्रो जगाद । साधु साधु त्वमेव मे बन्धुः । मां शोकाब्धेरुद्धरः । पवनोऽपि मुमुदे । सर्वे हनुपुरं जग्मुः । महेन्द्रोऽपि सप्रियस्तत्राऽऽययौ । महोत्सवं कृत्वा सर्वे स्वं स्वं स्थानं प्रापुः । पवनस्तु सपुत्रकलत्रस्तत्रैवाऽस्थात् । हनूमान् गृहीतकलः साधितविद्यो यौवनं प्राप ।

इतश्च रावणः सन्धिदूषणमुत्पाद्य वरुणं जेतुं प्रतस्थे । दूताहूतौ पवनप्रतिसूर्यौ निवार्य सादरं ससैन्यो हनूमान्रावणसैन्यं प्राप । रावणोऽपि तं नमन्तं स्वाङ्के निदधे । वरुणापुर्या अभ्यर्णे स्थिते रावणे वरुणः सुतशतान्वितो निर्ययौ । वरुणः सुग्रीवाद्यैर्वरुणसुताश्च रावणेन युयुधिरे । हनूमान्रावणं खेदयतो वारुणीन् विद्यया संस्तभ्य बबन्ध । वरुणस्तद् दृष्ट्वा हनुमते धावन्नन्तरा रावणेन स्खलयित्वा योधयित्वा बद्धः । स्वसैन्ये नीतः । प्रणतः सपुत्रो मुमुचे । वरुणेन हनुमते स्वपुत्री सत्यमती दत्ता । रावणो लङ्काप्राप्तो हनुमते चन्द्रणखात्मजामनन्तकुसुमाख्यामदत्त । सुग्रीवः पद्मरागां नलो हरिमालिनीमन्येऽपि सहस्रसंख्याः कन्या हनुमते ददुः । हनूमान् हनुपुरं परेऽपि स्वं स्वं स्थानं प्रापुः ।

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्ठिशलाकापुरुषचरिते गद्यबन्धे सप्तमे पर्वणि हनुमदुत्पत्तिवरुणसाधनो नाम तृतीयः सर्गः ॥

## ॥ अथ चतुर्थः सर्गः ॥

इतश्च मिथिलापुर्यां हरिवंशे वासवकेतुविपुलासुतो जनको राजा । इतश्चायोध्यायामिक्ष्वाकुवंशान्तर्भूताऽऽदित्यवंशे श्रीमुनिसुव्र-
नतीर्थे विजयो राजा हिमचूलाराज्ञी, वज्रबाहुपुरन्दरौ सुतौ । इतश्च नागपुर इभवाहननृपसुतां मनोरमां परिणीय वज्रबाहुरुदयसुन्द-
रेण श्यालेनान्वितः स्वपुरं यान्गुणसागरमुनिं तपस्यन्तं दृष्ट्वा धृतवाहनो वन्द्योऽयं महात्मेति वदञ्श्यालेन प्रव्रज्यामादित्ससे ? इत्यु-
क्तश्चित्तेऽस्त्येतदित्याह । उदयो नर्मणाऽवादीत् । सहायोऽस्मि । कुमारेणोक्तं सन्धां मा त्याक्षीः । तेनाऽऽमेत्युक्ते कुमारो वाहनादु-
त्तीर्य वसन्ताद्रिमारुरोह । श्यालः प्राह । नर्मोक्त्या मा प्रव्राजीः । भोगान्भुङ्क्ष्व । त्वां विना मनोरमा कथं जीविष्यति । चारित्रं
मत्यद्रोः फलम् । नर्मोक्तिरप्यस्मासु तात्त्विकी बभूव । त्वत्स्वसा च चेत्कुलीना तत्प्रव्रजिष्यति । नो चेदस्याः शिवः पन्थाः । मम
तु भोगैरलम् । त्वयाऽपि सन्धा पाल्येत्युक्त्वा मुनिमुपगम्य कुमारः प्रवव्राज । श्यालो मनोरमा पञ्चविंशतिश्च कुमाराः प्राव्रजन् ।

विजयनृपस्तच्छ्रुत्वा वैराग्यापन्नो राज्ये पुरन्दरं न्यस्य निर्वाणमोहमुनिपार्श्वे व्रतं ललौ । पुरन्दरोऽपि पृथिवीकुक्षिजं कीर्तिधरं
नृपं कृत्वा क्षेमंकरर्षिपार्श्वे मुनिरभूत् । कीर्तिधरो राजा महदेव्या पत्न्याऽरंस्त । प्रव्रजिषुर्मन्त्रिभिः सुतोत्पत्तिं यावत्प्रतीक्षितः । सहदे-
वीकुक्षिजं सुकोसलं बालं राज्ये न्यस्य विजयसेनसूरिपादान्ते दीक्षामवाप । स गुर्वाज्ञयैकाकिविहारी मासोपवासपारणे मध्याह्नेऽयो-
ध्यायां बभ्राम । सौधाग्रस्था सहदेवी तं दृष्ट्वा दध्यौ । अस्मिन्पत्यौ प्रव्रजिते पतिहीनाऽभवम् । यद्येनं दृष्ट्वा सुकोशलोऽपि प्रव्रजेत्

तदा निर्वीरा स्याम्। ततो निर्वास्योऽयम्। इति ध्यात्वा निर्मन्तुर्भर्ता व्रती तयाऽन्यलिङ्गिभिः सार्धं निरवास्यत। सुकोशलस्तद्दुःख दुःखितां रुदतीं स्वधात्रीं दृष्ट्वा पृष्टज्ञातवृत्तस्तातान्ते गत्वा व्रतं ययाचे। स्वपत्नी चित्रमाला गुर्वी सचिवैः सहैत्याऽराजकं राज्यं त्यक्तुं नार्हसीति वदन्ती तव गर्भस्थः सुतो मया राज्येऽभिषिक्त इत्यूचे। लोकं संभाष्य तातान्ते प्रव्रज्य तपस्तेपे। तौ पितापुत्रौ निर्ममौ निष्कषायौ भुवि विजह्रतुः। सहदेवी सुतवियोगात्खिन्ना साऽऽर्त्तध्याना मृत्वा गिरिगह्वरे व्याघ्र्यभूत्। तौ च मुनी एकदैकस्याद्रेर्गुहायां वर्षारात्रमतीत्य कार्तिके मासे प्राप्ते पारणाय प्रयान्तौ मार्गे व्याघ्र्या दृष्टौ। दूराद्धावन्तीं व्यात्तवक्त्रां तां दृष्ट्वा तौ कायोत्सर्गेण तस्थतुः सा प्रथमं सुकोशले पपात। पृथ्व्यां च तमपातयत्। चटच्चटितिनखैश्चर्म दारयन्ती रुधिरं पपौ। त्रटत्रटिति रदैस्त्रोटयन्ती मांसं जग्रसे। कटत्कटिति कीकशान्यपि चखाद। मुनिः शुक्लध्यानात्केवली मोक्षं ययौ। कीर्तिधरोऽपि जातकेवलः क्रमात्परं पदं प्राप। सुकोशलप्रिया चित्रमालापि हिरण्यगर्भं सुतं सुषुवे। तस्य यौवनप्राप्तस्य मृगावती प्रिया बभूव। हिरण्यगर्भः पलितदर्शनान्नघुषं सुतं राज्ये न्यस्य विमलमुन्यन्ते व्रतं जग्राह। नघुषोऽन्यदा सिंहिकादेवीं राज्ये मुक्त्वोत्तरापथे भूपालाञ्जेतुं ययौ। दक्षिणापथनृपैर्वैरिभिरयोध्यायां रुद्धायां सिंहिका पुंवदभिषेणनापूर्वं तान्जिगाय। आयातो नघुषस्तन्महिलानुचितं कर्म श्रुत्वा नूनमसतीयमिति परिजह्रे। नघुषस्यान्यदा दाहज्वरः। कथञ्चिदनुपशान्तस्तया सत्यश्रावणापूर्वं तोयाभिषेकादुपशमितः। सुरास्तस्यां पुष्पाणि ववृषुः। तदादि राजा तां बहु मेने। नघुषः सोदासाय सुताय राज्यं दत्त्वा प्रवव्राज। अन्यदा मन्त्रिणोऽर्हतामष्टाह्निकामहोत्सवेऽमारिं

१ व्याघ्री तस्य दन्तकरवक्षोमुखभुजादीन्यङ्गानि सल्लक्षणानि स्नेहलदृशा पश्यति तावज्जातिस्मृतिर्जज्ञे। स्व निनिन्द, रुरोद। केवलिकीर्तिधराद्दिनत्रयमनशनं कृत्वा पञ्चनमस्कृतिं प्राप्य सुरो जज्ञे। इति ग्रन्थान्तरे।

मन्त्रिणोऽप्य सोदासमूचुः। त्वत्पूर्वजैरर्हदष्टाह्निकोत्सवे मांसं नाऽखादि। त्वमपि मा स्म खादीः। सोदासः सूदमवदत्। छन्नं मांसमानेयम्। सूदोऽपि घृष्टायाममायां मांसाऽप्राप्तेर्नृपाद्भीतो मृताऽर्भकं दृष्ट्वा संस्कृत्य तस्मै ददौ। सोऽपि तद्रसप्रीतः कस्य जीवविशेषस्येदमिति पृच्छन्ज्ञातनृमांसो मम सदा नृमांसं देयमित्याह। सूदो डिम्भान्जहार। मन्त्रिणस्तज्ज्ञात्वा नृपं धृत्वाऽरण्ये त्यक्त्वा तत्सुतं सिंहरथं राज्येऽभ्यषिञ्चन्। सोदासोऽपि भ्राम्यन्मुनेर्मद्यमांसपरिहारप्रधानं धर्मं श्रुत्वा श्राद्धीभूतो भवाद्बिभयांचकार। महापुरेऽपुत्रनृपमृतौ पञ्चदिव्याभिषिक्तो ममाज्ञां मनुष्वेति सिंहरथाय दूतं प्राहिणोत्। दूते तिरस्कृते मिथोऽभिषेणने युद्धे सोदासः सिंहरथं जित्वा गृहीत्वा राज्यद्वयं दत्त्वा स्वयं दीक्षां स्वीचकार।

सिंहरथस्तनुर्ब्रह्मरथो राजा। ततश्चतुर्मुखः, हेमरथः, शतरथः, उदयपृथुः, वारिरथः, इन्दुरथः, आदित्यरथः, मान्धाता, वीरसेनः, प्रतिमन्युः, पद्मबन्धः, रविमन्युः, वसन्ततिलकः, कुबेरदत्तः, कुन्थुः, शरभः, द्विरदः, सिंहदशनः, हिरण्यकशिपुः, पुञ्जस्थलः, ककुत्स्थः, रघुः, एवं नृपेषु केषुचित् सिद्धेषु केषुचित्स्वर्गतेष्वनरण्यो राजा। तस्य पृथ्वीदेव्यामनन्तरथदशरथौ सुतौ। अनरण्यो रावणजिते सहस्रांशौ गृहीतव्रते तत्सख्यान्मासजाते दशरथे राज्यं न्यस्यानन्तरथसहितो व्रतं जग्राह। अनरण्यो मोक्षं ययौ। अनन्तरथो भुवि विजहार। दशरथो बालोऽपि वयसा विक्रमेण च सर्वराजस्वधिकं रराज। तत्र राजनि ईतयोऽदृष्टपूर्वा आसन्। आर्हतं धर्मं दधौ। दर्भस्थलपुरेशसुकोशलनृपामृतप्रभापुत्रीमपराजितामुदूढवान्। तथा कमलसङ्कुलपुरेशसुबन्धुतिलकात्मजां मित्राकुक्षिजामादिनाम्ना केकयीं मिश्रास्तुः सुशीला चेति सुमित्रेत्यपरनाम्नीं पर्यणषीत्। अन्यां च सुप्रभामुपायत। धर्मार्थाबाधया कामं भेजे।

रावणस्त्रिखण्डं भरतं भुञ्जानो मम स्वतः परतो वा विपत्तिरिति नैमित्तिकमन्वयुङ्क्त। जानक्याः कारणेन दाशरथेर्भविष्यति मृ-

त्युरिति तेनोक्ते जनकदशरथौ हत्वाऽस्य सत्यवचसोऽपि वचोऽनृतं करिष्य इति विभीषण आह । रावणेनामेत्युक्तश्च स्वगृहं ययौ । नारदः श्रुतवृत्तो दशरथं गतस्तेन 'कृतप्रतिपत्तिः कुतःस्थानादायातोऽसीति पृष्टः प्राह । पूर्वविदेहेषु पुण्डरीकिण्यां श्रीसीमन्धरस्य दीक्षामहमहं द्रष्टुं गतः । ततो मेरौ देवान्नत्वा लङ्कायां शान्तिमनमम् । रावणगृहे नैमित्तिकाज्जानक्यर्थे त्वत्सुताद्भाविनं रावणवधमश्रौषम् । विभीषणस्त्वां जनकं च हन्तुं कृतप्रतिज्ञः समेष्यतीति साधर्मिकप्रीत्या तवाऽऽख्यातुमायासीषम् । नारदोऽभ्यर्च्य विसृष्टो जनकायापि तथैवाख्यत् । जनकदशरथावलक्ष्यौ महीं भ्रेमतुः । मन्त्रिभिस्तु स्वस्वराज्ये राजालयान्तर्लेप्यमयी ध्वान्ते स्वस्वामिमूर्तिर्न्यस्यत । विभीषणः ससंरम्भो लेप्यमय्या दशरथमूर्तेः शिरो ध्वान्तेऽसिनाऽच्छिनत् । 'नगरे कलकलोऽन्तःपुरान्तराक्रन्दध्वनिर्जज्ञे । सामन्ताः सन्नद्धा दधाविरे । गूढमन्त्रा मन्त्रिणो मृतकार्यं चक्रुः । विभीषणस्तं मृतं ज्ञात्वा जनकवधे कृतावज्ञो लङ्कां प्राप । जनकदशरथौ च भ्राम्यन्तौ मिलितावुत्तरापथं जग्मतुः । तत्र कौतुकमङ्गले पुरे शुभमते राज्ञः पृथ्वीश्रीकुक्षिजायाः सर्वकलाकुशलाया द्रोणमेघस्वसुः कैकेय्याः स्वयंवरे जग्मतुः । तत्र तया दशरथे वृते हरिवाहणाद्याः क्रुद्धाः सन्नद्धाः कार्पटिकादेकाकिनोऽस्मादिमामाच्छिन्द्म इत्यूचुः । शुभमतिनृपो दशरथपक्षे सन्नद्धः । पत्याज्ञया कैकेय्यां सारथ्यं कुर्वाणायां दशरथो रिपूञ्जिगाय । वरं याचस्वेति कैकेयीं वदन्समये याचिष्य इति तयोचे । ततो हठात् हृतैः परसैन्यैरसंख्यपरिवारो दशरथः कैकेयीयुतो राजगृहं गतः । जनकः स्वपुरीं ययौ । दशरथस्तु तया शङ्कयाऽयोध्यां न ययौ, किन्तु मगधेशं विजित्य तत्रैव स्थितोऽपराजितामुख्यमन्तःपुरमानीनयत् ।

अन्येद्युरपराजिता गजसिंहेन्दुरवीन् स्वप्ने निशाशेषे दृष्ट्वा ब्रह्मकल्पाच्च्युतं देवं गर्भे दधार । सुतं सुषुवे । राजा दानं ददौ । महोत्सवं चक्रे । तदा तत्प्रभावान्नृपा अचिन्तितानि प्राभृतान्युपनिन्युः । पद्म इत्याख्या पित्रा चक्रे राम इत्यपि प्रथितः । सुमित्राऽपि

गजसिंहार्कचन्द्राग्निश्रीसमुद्रान् स्वप्ने ददर्श। जातस्य सुतस्य नृपो महामहपूर्वं नारायण इति संज्ञां चकार। लक्ष्मण इत्यपराख्या-ऽभूत्। तौ धात्रीभिर्लाल्यमानौ भूभुजामङ्कादङ्कं सञ्चेरतुः। क्रमाद्वर्धमानौ नीलपिताम्बरौ दोर्बलेनाऽप्यखिलं तृणाय मन्यमानौ शस्त्र-कौशलं कौतुकायैव मेनाते। दशरथस्तयोर्बलेन स्वं देवासुरादीनामप्यजय्यं मन्यमानोऽयोध्यां ययौ। अथ केकयीसुप्रभाभ्यां भरत-शत्रुघ्नौ सुषुवाते। तौ च मिथोऽत्यन्तं स्नेहलौ।

इतश्च जम्बूद्वीपभरते दारुग्रामे वसुभूतिर्द्विजः। प्रियाऽनुकोशा। अतिभूतिः सुतः। तत्पत्नी सरसा। तस्यां कयानाख्यद्विजेन हृतायामतिभूतिस्तदन्वेषणाय क्ष्मां बभ्राम। सुतस्तुपार्थेऽनुकोशावसुभूती च चेरतुः। सुतस्तुपे अदृष्ट्वा व्रतं गृहीत्वा सौधर्मे देवौ जातौ। च्युत्वा वैताढ्ये रथनूपुरे चन्द्रगतिपुष्पवत्यौ राजा राज्ञी चाभूताम्। सरसाऽपि प्रव्रज्येशाने देवी। तद्वियोगार्तोऽतिभूति-र्भवं भ्रान्त्वा हंसपोतो जातः। श्येनेन भक्ष्यमाणः साधुदत्तनमस्कारो दशवर्षसहस्रायुः किन्नरेषु सुरो भूत्वा विदग्धपुरे प्रकाशसिंहनृ-पस्य सुतः कुण्डलमण्डितोऽभूत्। कयानोऽपि भोगासक्तो भवं भ्रान्त्वा चक्रपुरे चक्रध्वजनृपपुरोधसो धूमकेशस्य सुतः पिङ्गलो जात-स्तां सहाध्यायिनीं नृपपुत्रीमतिसुन्दरीं हृत्वा विदग्धनगरे गतस्तृणकाष्ठादिविक्रयादात्मानं जीवयामास। कुण्डलमण्डितस्तामति-सुन्दरीं दृष्ट्वा मिथो रागे जाते हृत्वा पितृभिया दुर्गदेशे पल्लीं कृत्वा तस्थौ। दशरथभुवं लुण्टयंस्तत्सामन्तबद्धः कालेन मुक्तः पितृ-राज्याय गच्छन्नार्यनन्दिमुनिचन्द्रमुनेः श्रुतधर्मः श्राद्धीभूतो राज्येच्छुरेव मृत्वा मिथिलायां जनकपत्न्या विदेहाया गर्भे सुतत्वेनावतीर्णः। सरसाऽपि भवं भ्रान्त्वा पुरोहितसुता वेगवती नाम्नी भूत्वा प्रव्रज्य ब्रह्मलोके गत्वा च्युत्वा विदेहाया गर्भे कुण्डलमण्डितजीवयुग्मत्वेन सुताऽभ्यवातरीत्। पिङ्गलस्त्वतिसुन्दरीवियोगार्तः कदाचिदार्यगुप्ताचार्याद् व्रत्यपि तस्यां रागममुञ्चन्सौधर्मे देवोऽभूत्। विदेहया

प्रसूतमपत्ययुग्मं पश्यन् जातमात्रं कुण्डलजीवं वैराज्जहार दध्यौ च शिलायामास्फाल्य हन्मि, अथवा पूर्वजन्मार्चितदुष्कर्मणः फलं मया भूयस्तु भवेष्वनन्तभावि। दैवाच्छ्रामण्यं प्राप्येयती भूर्लब्धा भूयो भ्रूणं हत्वाऽनन्तभवः कथं स्याम्। इत्थं ध्यात्वा कुण्डलादिभूषणैर्भूषयित्वा वैताढ्ये दक्षिणश्रेणौ रथनूपुरपत्तने तं बालं पतज्ज्योतिर्भ्रमप्रदं शनैर्मुमोच। चन्द्रगतिर्दृष्ट्वा किमेतदिति सम्भ्रान्तस्तन्निपातानुसारेण नन्दनोपवनं ययौ। सोऽपुत्रस्तं लात्वा पत्न्यै समर्प्य गूढगर्भा पत्नी सुतं सूतेति घोषयित्वा जन्मोत्सवं विधाय भामण्डलसम्बन्धाद्भामण्डलाख्यं चकार।

इतश्च तत्राऽपहृते विदेहायां रुदत्यां जनकोऽन्वेषयन्नपि तत्प्रवृत्तिं न प्राप।

**अनेकगुणसस्यानां प्ररोहोऽत्रेति मैथिलिः। दुहितुर्युग्मजातायाः सीतेति विदधेऽभिधाम् ॥२३॥**

कालेन शोकस्तोकतामचकलत्। सीतायां यौवनस्थायां तद्योग्यः कोऽपि वरो न लेभे। तदाचार्धबर्बरैरातरङ्गतमाद्यैर्नृपैर्देश उपद्रूयमाणे जनको दशरथाऽऽहूत्यै दूतं प्राहषीत्। दशरथो दूतमूचे। मत्सुहृदो राष्ट्रपुरादौ कुशलम्? दूतो बभाषे—मद्भर्तुस्त्वमेवासाधारणः सुहृत्तेनाद्य कष्टे स्मृतोऽसि। वैताढ्याद्रेर्दक्षिणतः कैलासस्य चोत्तरेणानार्या देशाः। तत्राऽर्धबर्बरदेशे मयूरमालनगर आतरङ्गतमो म्लेच्छराजः। तत्तनयाः शुकमङ्कनकाम्बोजादीन् सहस्रशो देशान्भुञ्जते। अधुनाऽऽतरङ्गस्तैः परिवारितो जनकभुवं बभञ्ज। चैत्यान्युपाद्रवत्। तत्त्वमिष्टयोर्जनकधर्मयोस्त्राणं कुरु। रामः सानुजस्तातं प्रयान्तं निवार्य मिथिलां जगाम। म्लेच्छै रामसैन्ये भग्ने रामो दुरापाती दृढापाती शीघ्रवेधी, कुपितविस्मितान्युगपदस्त्रन्नपैरन्धीकुर्वतो म्लेच्छेश्वरान्दिशो दिशमनाशयत्। जनको रामाय सीतां ददौ। तदा च नारदः सीतारूपदिदृक्षया कौतुकादायातः कन्यावेश्म विवेश। सीता तं पिङ्गकेशं पिङ्गनेत्रं तुन्दिलं छत्रिकाधरं दण्डपाणिं

मयौपीनमर्पानाङ्गं स्फुरच्छिखं भीषणं वीक्ष्य भीता सकम्पा हा मातरिति रुदती गर्भगृहान्तः प्रविवेश। दासीद्वारपालाद्यैस्तुमुलका- रिभिः कण्ठे शिखायां पादोश्च धृत्वा रुरुधे। हतेति भाषिभ्यो नृपपुम्भ्यः कथञ्चित्स्वं मोचयित्वोत्पत्य वैताढ्यं प्राप्तो दध्यौ। चन्द्र- गतिसूनोर्भामण्डलस्यैतद्रूपं पटे लिखित्वा दर्शये। यथैष हठादपहरति। तथैव चकार। भामण्डलं भोज्यपेयादिविमुखं विधुरं वीक्ष्य तत्पिता किमाधिर्व्याधिर्वा, अपमानं वेत्यादि हेतुं पृच्छंस्तत्सुहृद्भ्यो ज्ञातवृत्तो नारदमाहूय सा का कस्य सुतेत्यादि पृच्छन्नारदेना- भाषि। जनकसुता सीता। तद्रूपं केनापि लिखितुं न शक्यते। न देवीषु न नागीषु तद्रूपम्। सुरैर्नरैरप्यननुकार्यं च। अथवा बहु किं यथा लिखितुं न शक्यते तथा वक्तुमपि न। त्वत्सुतस्यैव योग्येति। राजा सुतं तवैवेयं पत्नी भवितेत्याश्वासयन्नारदं विससर्ज।

चपलगतिना खेचरेण निशि जनकमपहृत्य तत्राऽऽनाय्य स्नेहपूर्वमाश्लिष्योपवेश्य ससौहार्दं बभाण। त्वत्सुता लोकोत्तरगुणा। रूपवांश्च भामण्डलः। द्वयोर्योगोऽस्तु। जनकोऽवक् रामाय दत्ता। कन्यादानं सकृत्। चन्द्रगतिः प्राह। सौहार्दाय याचितोऽसि। ता हर्तुमपि क्षमोऽस्मि। यद्यपि रामाय कल्पिता तथापि रामोऽस्मान्पराजित्य परिणेष्यति।

वज्रावर्तार्णवावर्ते धनुषी देवताज्ञया। सदा यक्षसहस्राधिष्ठिते दुःसहतेजसी ॥२४॥

गृह्येते नः सदा गोत्रदेवतावन्निकेतने। कृते भविष्यतो रामशार्ङ्गिणोस्तद् गृहाण ते ॥२५॥

आभ्यामारोपयत्येकमपि दाशरथिः स चेत्। वयं जितास्तदा तेन स उद्वहतु ते सुताम् ॥२६॥

बलादिति प्रतिज्ञां ग्राहयित्वा ससुतः सचापो जनकं तद्गृहे मुक्त्वा स्वयं मिथिलाया बहिरवात्सीत्। जनकस्तदैव निशि विदेहायाः सर्वमाचचक्षे। देवी रुरोद। दैव! सुतापहाराद्म तृप्तः, सुतामपि हरिष्यसि। परेच्छया प्रतिज्ञातं चापारोपणं रामेण चेन्न सिद्ध्यति

तदाऽनिष्टो वरः। जनको देवीं वलवानयं राघव इति सम्बोध्य प्रातस्ते चापरत्ने अर्चयित्वा मण्डपे मुमोच। सीतास्वयंवरायाहूताः खेचरभूचरेशा अधिमञ्चमुपविविशुः। सीता सखीयुता चापपूजां विधाय रामं ध्यायन्ती तत्र तस्थौ। भामण्डलः सीतारूपेक्षणान्मा-धन्मन्मथो वभूव। योऽनयोरेकमप्यारोपयति स भूचरः खेचरो वा सीतामुद्वहत्विति घोषणायां रौद्राहिवेष्टिते स्फुलिङ्गज्वालाकलिते ते धनुषी स्प्रष्टुं ग्रहीतुं चाशक्तेषु त्रपावनतेष्वन्येषु रामो वज्रावर्तं शान्तोरगानलं पाणिना स्पृष्ट्वाऽध्ययःपीठं संस्थाप्य नामयित्वाऽ-धिज्यं कृत्वा रोदसीं ध्वनयन्नास्फालयामास। सीता तत्कण्ठे वरमालां चिक्षेप। लक्ष्मणोऽपि रामाज्ञयाऽर्णवावर्तमधिज्यं विदधे। खेचरैर्दत्ता अष्टादशकन्याश्च पर्यणैषीत्। खेचराः खिन्नभामण्डलान्विता स्वं स्वं स्थानं ययुः। जनकसन्देशाद्दशरथेऽप्यागते रामसी-तयोर्विवाहोऽभूत्। भरतो जनकभ्रातुः कनकस्य सुतां भद्रां परिणिन्ये। दशरथः सपरिवारः साकेतं प्राप।

अन्यदा दशरथश्चैत्यमहोत्सवे शान्तिस्नात्रं कृत्वा स्नात्राम्भः पूर्वं महिष्यै सौविदल्लेन प्राहिणोत्। पश्चाच्च दासीभिरन्यपत्नीभ्यः प्रजिघाय। दास्यो यौवनाच्छीघ्रगा राज्ञीनामार्पयन्। ताश्चावन्दिषत। सौविदल्ले तु वृद्धत्वान्मन्दगेऽप्राप्ते महिषी स्वापमानं मन्वती वस्त्रेणोद्बद्धुमारेभे। तदैवागतो राजा तामङ्के निवेश्य मृतिहेतुं पप्रच्छ। तस्यां कथयन्त्यामेव कञ्चुकी समागतः। स्नानवारिणा तां मूर्द्धन्यभिषिषेच। राज्ञा चिरागमहेतुं पृष्टो वार्धकापराधमाह। राजा तद्देहस्वरूपं दृष्ट्वा दध्यौ। यावदीदृशा न भवामस्तावन्मोक्षाय यतामहे। एवंमनोरथोविषयपराङ्मुखः समयं निनाय। सत्यभूतिं चतुर्ज्ञानिनं समवसृतं श्रुत्वा नन्तुं सपरिवारो ययौ।

अत्रान्तरे चन्द्रगतिर्भामण्डलान्वितो रथावर्ताचले जिनान्नत्वा निवृत्तस्तत्र तं मुनिं दृष्ट्वा व्योम्नोऽवतीर्य नत्वा निषसाद। मुनि र्भामण्डलस्य सीताऽभिलापजं तापं ज्ञात्वा देशनां प्रस्तुत्य तत्पूर्वभवान्युग्मजत्वं चाऽवदत्। भामण्डलो जातिं सस्मार। चन्द्रगत्याद्या

चन्द्रगतिः सजायं जनकं खेचरैस्तत्राऽऽ-
नाय्य त्वत्सुतोऽयं भामण्डल इत्युक्त्वा तोषयामास। भामण्डलः पितरौ ववन्दे। चन्द्रगतिर्भामण्डले राज्यं न्यस्य तस्यैव मुनेः पार्श्वे प्रवव्राज। भामण्डलः सत्यभूतिं तातर्षिं पितरौ दशरथं सीतारामौ च नत्वा स्वपुरं जगाम।

दशरथेन पूर्वभवान्पृष्टः सत्यभूतिर्जगौ। सेनापुरे त्वं वणिक्। कन्या उपास्तिसंज्ञा। साधूनां प्रत्यनीका भूत्वा चिरं तिर्यगादिषु भ्रान्त्वा चन्द्रपुरे धनसुतो वरुणो दानादिना धातकीखण्डोत्तरकुरुषु युग्मी, ततो देवोऽभूत्। च्युत्वा पुष्कलावतीविजये पुष्कलापुर्यां नन्दीघोषनृपसुतो नन्दीवर्धनोऽभवः। त्वत्पिता यशोधरर्षेराप्तदीक्षो ग्रैवेयके ययौ। त्वं राजा श्राद्धत्वं प्रपाल्य ब्रह्मलोकं प्राप। च्युत्वा पश्चिमविदेहे वैताढ्योत्तरश्रेण्यां रत्नमालिखेचरेशितुः सूनुः सूर्यंजयोऽजायथाः। अन्यदा रत्नमाली वज्रनयनं विद्याधरेशं जेतुं गतस्तत्पुरं सिंहपुरं सबालवृद्धं जिज्वालयिषुः प्राग्भवपुरोधसोपमन्युना सहस्रारादेत्यैवं प्रबोधितः। मा कृथाः पापम्। त्वं प्राग्भवे भूरिनन्दनो नाम राजा। मांसनिवृत्तिं प्रत्यज्ञासीः। उपमन्युपुरोधसोक्तश्च भग्नवान्। अन्यदा स पुरोधाः स्कन्दनाम्ना पुंसा हतो गजो जातो भूरिनन्दनभूभुजा संगृहीतो रणे हतो भूरिनन्दनस्यैव सुतोऽरिसूदनोऽभूत्। जातिस्मृतेः प्रव्रज्य सहस्रारे देवः सोऽहम्। भूरिनन्दनस्तु मृत्वाऽजगरोऽभूत्। दवदग्धो द्वितीयनरकपृथ्वीगतो मया प्रबोधितस्त्वं रत्नमालीनृपोऽभवः। रत्नमालीति श्रुत्वा युद्धनिवृत्तः कुलनन्दनसुते राज्यं न्यस्य सूर्यंजयेन सह व्रती। द्वावपि महाशुक्रे सुरौ जातौ। सूर्यंजयश्च्युत्वा त्वं दशरथोऽभूः। रत्नमाली तु जनकः। उपमन्युस्तु जनकाऽनुजः कनकः। यस्तु नन्दीवर्धनभवे त्वत्पिता नन्दीघोषः सोऽहं ग्रैवेयकाच्च्युत्वा सत्यभूतिरभवम्।

दशरथस्तच्छ्रुत्वा जातसंवेगो गृहं गत्वा राज्ञीः सुतान्मन्त्रिणश्चापृच्छमाणो भरतेन बभाषे । त्वया समं चारित्रं लास्ये । अन्यथा हि मम द्वे कष्टे । त्वद्विरहः संसारतर्पणं च । तदा कैकेयी स्वस्य पतिपुत्रवियोगं ध्यायन्ती सारथ्यावसरे दत्तं वरं ययाचे । राजाऽऽह । व्रतनिषेधं विना यन्ममाधीनं तद्याचस्व । भरताय भुवं देहीति तयोक्ते राजा गृह्यतामित्युक्त्वा सलक्ष्मणं राममुवाच । मया पूर्वं दत्तो वरः कैकेय्या भरतराज्येन सम्प्रति ययाचे । रामोऽपि हृष्टोऽवदत् । मात्रा युक्तमर्थितं भरतोऽहमपि च निर्विशेषावेव । तातो मामिदं प्रसादादापप्रच्छे ।

अप्येकवन्दिने राज्यं तुष्टस्तातो ददात्वदः । निषेधेऽनुमतौ वा मे न स्वाम्यं पत्तिमानिनः ॥२७॥

इति रामवचः श्रुत्वा राजा यावत्सचिवानादिक्षत्, तावद्भरतो ब्रवीति स्म । मया मूलत एव सह व्रतमर्थितम् । राजोचे मत्सन्धां सफलां कुरु । रामो भरतमाह । आदत्स्व राज्यम् । त्वं यद्यपि निर्गर्वस्तथापि तातं सत्यापय । भरतः पादयोः प्रपत्य राममाह । ताताऽऽर्ययो राज्यदानं युक्तं मम त्वादातुं न । रामस्तातमूचे मयि सत्यसौ न ग्रहीष्यति राज्यं तद्वनाय यामीत्युक्त्वा भरते रुदति चापतूणधरो निर्ययौ । राजा पुनः पुनर्मुमूर्च्छ । रामोऽपराजितां देवीं नत्वा प्राह । मद्वद्भरतं पश्येः । स्वसन्धासत्यापनाय पिता भरताय राज्यं ददौ मयि सत्ययं न गृह्णाति तन्मया वने गन्तव्यम् । माता मुमूर्च्छ । उपचारैः प्रत्यागतचैतन्या विविधं विलपन्ती रामेण प्रबोध्य नेमे । अन्याश्च मातॄर्नत्वा निर्ययौ । सीताऽपि दूराद्दशरथं नत्वाऽपराजितां रामानुगमनादेशमयाचिष्ट । साऽप्यंकमारोप्य सीतां प्राह । वत्से कथं पादचारव्यथां सहिष्यसे ? खिन्ना सती स्वभर्तुरपि खेदं करिष्यसि । स्वकान्ताऽनुगमेन कष्टागमेन च निषेधविधीकर्तुं नोत्सहे । सीताऽप्याह । त्वद्भक्तिर्मे सहायिनीत्युक्त्वा नत्वा पौरीभिः कथमपीक्ष्यमाणा सतीति श्लाघ्यमाना निर्जगाम ।

लक्ष्मणो रामं गच्छन्तं दृष्ट्वा क्रुद्धो दध्यौ । तातः प्रकृत्या ऋजुः । स्त्रियोऽनृजवः । यच्चिरं वरं धृत्वा साम्प्रतं याचते । राज्ञा भरताय दत्तं राज्यं तदहं भरताद्बलेन हृत्वा रामे न्यस्यामि । अथवा महासत्त्वोऽयं त्यक्तं राज्यं नाऽऽदास्यते । तातस्य च दुःखं भविता । तदहं राममेवाऽनुव्रजामि । ततो भूपं नत्वा सुमित्रामापप्रच्छे । राममनुयामि । साऽप्याह साधु साधु ज्येष्ठमनुयासि । रामो मां नत्वा दूरं गतो मा विलम्बस्व । लक्ष्मणोऽपि साधु साधु मन्माताऽसीत्युक्त्वाऽपराजितां ननाम । सा तं राममनुयामीति वदन्तं वभाषे । वत्स ! मन्दभाग्याऽहं यत्त्वमपि मां मुक्त्वा यासि । ममाश्वासकृते तिष्ठ । लक्ष्मणः प्राह । रामस्य माताऽसि धैर्यं भज । मद्भ्राता दूरं गच्छति । मातर्विघ्नं मा कृथा इत्युक्त्वा चचाल । पौराः कैकेयीदशरथयोराक्रोशदायिन उदश्रवस्तांस्त्रीननुययुः । राजाऽप्यनुयाति । रामः कथमपि तातं मातॄंश्च न्यवर्तयत् । पौरानपि निवृत्य द्रुतं चचाल । ग्रामे ग्रामे पुरे पुरे जनैरवस्थातुं प्रार्थ्यमानोऽपि नाऽस्थात् । अयोध्या उद्वसेवाऽभूत् ।

इतश्च भरतो राज्य नाऽऽदत्त । कैकेयीं स्वं च चुक्रोश । राजा दीक्षोत्सुको राममानेतुं सामन्तान्मन्त्रिणश्च प्राहिणोत् । तैः पश्चिमायार्या द्रुतं गत्वा प्राप्तो रामो निवर्तनाय प्रार्थितोऽपि न निववृते । तेऽपि सहैव चेलुः । पारियात्राऽटवीमध्ये गम्भीरानदीतीरे रामः सामन्तादीनूचे । निवर्तध्वम् । अतः परं कष्टोऽध्वा भरतं मद्वत्तातवद्वा उपाध्वम् । ते रुदन्तो न्यवर्तन्त । तैः सास्रैः प्रेक्षितो रामो नदीमुत्तीर्णः । सामन्तादिष्वयोध्यां प्राप्तेषु दशरथो भरतं प्रोवाच । रामलक्ष्मणौ नायातौ राज्यं गृहाण । दीक्षाविघ्नं मा कार्षीः । भरतोऽभणत् । नादास्ये राज्यं रामं प्रसाद्य स्वयमानेष्ये । कैकेय्यप्यवदत् । त्वया सत्यसंधेन भरताय दत्तं राज्यं परमेष न गृह्णाति । अस्य चान्यासां मातॄणां ममापि च दुःखम् । मया पापिन्याऽविमृश्य कृतम् । भरतेन सह गत्वा रामलक्ष्मणावनुनीयानेष्ये । राजा-

ऽनुज्ञाता सपुत्राऽमात्या षड्भिर्दिनैस्तद्वनं प्राप । रामाद्यास्तां नेमुः । भरतोऽपि रामं नत्वा प्राह । अयोध्यायां राज्यमलङ्कृत्य ममापवादं हर । सौमित्रिस्तव मन्त्री भविता । अहं प्रतिहारः । शत्रुघ्नश्छत्रधरः । कैकेय्यप्यवदत् । भ्रातृवत्सलोऽसि भ्रातृवचः कुरु । नाऽयं त्वत्पितुर्दोषो न च भरतस्य किन्तु ममैव । रामः प्राह । सन्तः प्रतिज्ञां न त्यजन्ति । तातेनाऽस्मै राज्यं दत्तं मया चानुमतं द्वयोर्वाक् कथमन्यथा स्यात् । इत्युक्त्वा रामः सीताऽऽनीतैर्जलैः सर्वसामन्तसमक्षं भरतं राज्येऽभिषिषेच । विसृज्य च स्वयं दक्षिणां दिशं प्रतस्थे । भरतोऽप्ययोध्यां गतः पितृभ्रातृशासनात् राज्यं स्वीचकार । दशरथः सत्यभूतेः पार्श्वे भूयसा परिवारेण सह प्राव्रजत् । भरतोऽप्यर्हत्पूजोद्यतो यामिकवद्राज्यं ररक्ष । रामो मार्गे चित्रकूटाद्रिमतीत्य कतिपयैर्दिनैरवन्तीदेशैकदेशं प्राप ।

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्ठिशलाकापुरुषचरित्रे गद्यबन्धे सप्तमे पर्वणि रामलक्ष्मणोत्पत्तिपरिणयनवनवासगमनो नाम चतुर्थः सर्गः समाप्तः ॥

# ॥ अथ पञ्चमः सर्गः ॥

रामः श्रान्तां सीतां विश्रमयितुं वटमूले निषण्णस्तं देशं सर्वतो वीक्ष्य लक्ष्मणमूचे । देशोऽयं कस्यापि भीत्या सम्प्रत्येवोद्वसः। यद्शुष्ककुल्यान्युद्यानानि सेक्षव इक्षुवाटाः साम्रानि च फलानि । कञ्चिन्नरं गच्छन्तं पप्रच्छ । देशोऽयं किमुच्चचाल, त्वं च क या-सीति । सोऽप्यूचे अस्मिन्नवन्तीदेशेऽवन्त्यां पुरि सिंहोदरो राजा । तस्य च प्रतिबद्धोऽस्मिन्विषये दशाङ्गपुरेशो वज्रकर्णाख्यः सामन्तः। स पापर्द्ध्यां गतो वने कायोत्सर्गस्थं प्रीतिवर्धनर्षिं दृष्ट्वा किं वनेऽत्र तिष्ठसीत्युवाच । मुनिनोक्तम् । आत्महितार्थम् । वज्रकर्णः प्राह खाद्यपेयादिरहितेऽरण्ये किमात्महितम् । मुनिस्तं योग्यं ज्ञात्वाऽऽत्महितं धर्मं जगौ । सोऽपि श्राद्धीभूतोऽर्हन्तं देवं साधूंश्च विना नान्यं नंस्यामीत्यभिजग्राह । दशाङ्गपुरं गतो दध्यौ । मया कृताभिग्रहेणानमस्कृतः सिंहोदरो वैरी भविता । ततः स्वाङ्गुलीये मणि-मयीं श्रीमुनिसुव्रतप्रतिमा निवेश्य स्वाङ्गुलीयस्थं तद्बिम्बं नमन्सिंहोदरं वञ्चयामास ।

कश्चित्खलः सिंहोदराय तदाऽऽचख्यौ । क्रुद्धः सिंहोदरः । कोऽपि तत्कोपं वज्रकर्णाय न्यवेदयत् । कथं ज्ञातस्त्वया कोप इति पृष्टश्चाचष्ट । अहं कुन्दपुरे समुद्रसङ्गमवणिक्सुतो विद्युदङ्गो भाण्डमादाय क्रयविक्रयार्थमुज्जयिन्यां गतः । कामलतां वेश्यां दृष्ट्वा एकनिशां भोगाशया गतो दृढरागबद्ध आजन्मार्जितं धनं षड्भिर्मासैर्व्यनीनशम् । साऽन्यदा मामूचे । सिंहोदरमहिष्याः श्रीधराया ये कुण्डले तादृशे मह्यं देहि । अहमर्थाभावात्तदपहाराय रात्रौ खात्रेण नृपौकस्यगाम् । तदा श्रीधरया सिंहोदरः किमुद्विग्न इवेति

पृष्टः प्राह । यावद्वज्रकर्णो न हन्यते तावत्कुतो निद्रा । प्रातस्तं ससुहृत्सुतं हनिष्यामीति श्रुत्वाऽहं त्यक्तस्तेयः साधर्मिकवात्सल्या-त्तवाऽऽख्यातुं त्वरितमागाम् । वज्रकर्णस्तच्छ्रुत्वा पुरीं कणतृणाधिकां चक्रे । सिंहोदरश्च तां वेष्टयित्वा दूतेन तं जगौ । इयत्कालं प्रणाममायया वञ्चितोऽस्मि । सम्प्रत्यङ्गुलीयेन विनाऽऽगत्य मां नम, अन्यथा सकुटुम्बो यमवेश्म यास्यसि । वज्रकर्णः प्रत्यूचे म-माऽयमभिग्रहोऽन्यं न नमामि । न पौरुषाभिमानोऽत्र । किन्तु धर्माभिमानः । नमस्कारं विना सर्वमादत्स्व । धर्मद्वारं मह्यं देहि । धर्म एव मम धनमस्तु सिंहोदरस्तदनङ्गीकृत्य पुरं रुद्ध्वा देशं मुष्णन्नस्ति । तेनोद्वसोऽयं देशः अहमपि सकुटुंबो नष्टः । अत्राढ्य-सौधानि दग्धानि । जीर्णा च मत्कुटी दग्धा । क्रूरगृहिण्येभ्यगृहेभ्यो वेश्मोपकरणान्यानेतुं प्रहितोऽस्मि । तस्माद्दुर्वचसोऽपि ममैतत्फलं शुभमभूत् । यत्त्वं देवकल्पो दृष्टोऽसि रामस्तस्य रत्नस्वर्णमयं सूत्रमदत्त ।

तं विसृज्य दशाङ्गपुरं गतो वहिश्चैत्ये चन्द्रप्रभं नत्वा तस्थौ । रामादेशाल्लक्ष्मणः पुरं प्रविश्य वज्रकर्णान्ते ययौ । तेनाऽपि सदा-कारमुत्तमं ज्ञात्वा भोजनाय निमन्त्रितः प्राह । मत्प्रभुः सदारो बहिरस्ति । तं पूर्वं भोजयामि । वज्रकर्णः सलक्ष्मणो भव्यं भोज्यं रामान्तेऽनाययत् । भोजनानन्तरं रामप्रहितः सौमित्रिः सिंहोदरं गत्वा जगाद । भरतो राजा वज्रकर्णेन तव विरोधं निषेधयति । सिंहोदरोऽपि प्रत्यूचे । भरतोऽपि भक्तानामेव प्रसादं कुरुते नाभक्तानाम् । अयं च मत्सामन्तो मां न नमति तत्कथमस्मै प्रसीदामि ? लक्ष्मणोऽवोचन्नायमविनयी किन्त्वप्रणामकृतसन्धो धर्मी भरताज्ञा चालङ्घ्या । सिंहोदरेणोक्तम् । कोऽयं वज्रकर्णगृह्यो भरतः ? सौमित्री क्रुद्धो ज्ञापयाम्येष भरतं संवर्मयस्व । सिंहोदरं ससैन्यं युध्यमानं सौमित्रिर्बद्ध्वा रामान्ते निन्ये । सिंहोदरो रामं दृष्ट्वा नत्वा जजल्प । मया त्वमिहायातो न ज्ञातः । क्षमस्व । कृत्यमादिश । रामोऽवोचत् । वज्रकर्णेन सन्धेहि । सोऽपि तन्मेने । रामा-

तथा वज्रकर्णोऽप्यागतो विनयी कृताञ्जलिरूचे । दिष्ट्या युवां रामशार्ङ्गिणौ दृष्टौ । किन्तु चिराज्ज्ञातौ । भरतार्धपती युवाम् । अन्ये सर्वे युष्मद्दासाः । मन्त्रं सृज । मत्प्रणामेच्छायाश्च शाधि । सिंहोदरेण रामभ्रूसंज्ञया तत्प्रतिपद्य वज्रकर्णाय बन्धुवत्प्रीत्या राज्यार्धं ददे । वज्रकर्णो विद्युदङ्गाय श्रीवराकुण्डले सिंहोदरात्प्राप्य ददौ । वज्रकर्णः सौमित्रयेऽष्टौ स्वकन्या ददौ । सिंहोदरः ससामन्तः कन्याशतत्रयं च । लक्ष्मणः प्रोचे कन्या युष्मत्पार्श्वे तिष्ठन्तु । अधुना पित्रा भरतो राज्ये न्यवेशि । समयेऽङ्गीकृतराज्योऽमूः परि-णेष्यामि । इदानीं मलयाद्रौ गत्वा स्थास्यामः । इत्युक्त्वा नृपयोर्विसृष्टयो रामस्तत्र निशां स्थित्वा गच्छन्कमपि निर्जलं देशं प्राप । रामाज्ञया सौमित्रिः सीतापिपासाशान्त्यै जलमानेतुं गतः सरो ददर्श ।

तत्र कूबरपुरेशः कल्याणमालाख्यः पुंवेषः कामबाणविद्धो भोजनार्थं लक्ष्मणमूचे । लक्ष्मणः कारणेन पुंवेषमिति ध्यात्वा ससीतं राममानाययत् । कूबरेशेन नत्वा पटकुट्यां निवासितः । कूबरेशो व्यक्तस्त्रीवेष एकामात्येन समं कृतस्नानभोजनं राममुपाययौ । सा कथं पुंवेषाऽसीति रामेणोक्ताऽऽख्यत् । कूबरपुरे वालिखिल्यो राजा । पृथ्वी राज्ञी गुर्वी बभूव । राजा म्लेच्छैर्बद्ध्वा निन्ये । मयि च ज्ञातायां पुत्रोऽजनीति घोषणा चक्रे । पुंवेषा राज्यं कुर्वे । म्लेच्छानां भूरि द्रव्यं दत्तं तातं तु न मुञ्चन्ति । तत्प्रसद्य मत्तातं तेभ्यो मोचयत । रामः प्रोचे । पुंवेषैव राज्यं शाधि । यावद्भवत्तातं मोचयामः । सुबुद्धिर्मन्त्री जगाद । लक्ष्मणोऽस्या वरोऽस्तु । रामः प्राहाऽधुना देशान्तरे यामः । निवृत्तेषु लक्ष्मणः परिणेष्यति । रामस्तत्र त्र्यहं स्थित्वा चचाल । सा स्वपुरं ययौ ।

रामो नर्मदामुत्तीर्य दक्षिणदिशि कण्टकितरुस्थे काके विरसं रसति अन्यस्मिंश्च क्षीरद्रुस्थे मधुरं रसति विन्ध्याटव्यां प्रविष्टः । तत्र म्लेच्छसैन्यं ददर्श । म्लेच्छराजः प्राह । रेरे एतौ पान्थौ विद्राव्य विनाश्य वा एतां हरत । लक्ष्मणो ज्यानादेन तदत्रासयत् ।

म्लेच्छराज्ञो रामं ननाम, ऊचे च । द्विजसुतोऽहं रुद्रदेवः । आजन्मतस्करः पारदारिकोऽन्यदा चौर्ये उपशूलं नीतः । श्रावकवणिजा दण्डं दत्त्वा मोचितो भूयः तेयं मा कार्षीरित्युक्त्वा विसृष्टः पल्यामागतः काक इत्याख्यया प्रसिद्धः । पल्लीपतित्वं प्रापम् । त्वद्दासोऽस्मि । रामाज्ञया तेन मुक्तो वालिखिल्यो रामं प्राणमत्, स्वपुरं च काकेन प्रापितः । पुंवेषां कल्याणमालां ददर्श ।

रामो विन्ध्याटवीमतीत्य तापीमुत्तीर्णोऽरुणग्रामे सीतायां तृषितायां कोपनस्य कपिलस्याग्निहोत्रिणो गृहे ययौ । सुशर्मा ब्राह्मणी पृथगासनं तेभ्यो दत्त्वा जलमपीप्यत् । कपिलः समागतो रुष्टो रे एषां मलीनानां किं प्रवेशो दत्तोऽग्निहोत्रमशुचीकृतमिति वदन्सौमित्रिणोद्धृत्य दिवि परिभ्रम्यमाणो रामेण मोचितः ।

रामः पुरतो गच्छन्महदरण्यं प्राप्तो वर्षातिक्रमणेच्छया वटस्याधस्तस्थौ । वटाधिष्ठातेभकर्णो यक्षो भीतः स्वेशं गोकर्णं ययौ । कश्चिद्वटादुद्वासितोऽहम्, त्रायस्व । गोकर्णोऽवधेर्ज्ञात्वाऽऽह । एतावष्टमौ रामशार्ङ्गिणावच्यौं । इत्युक्त्वा रात्रौ तत्रेत्य नवद्वादशयोजनां धान्यादिपूर्णां तुङ्गप्रसौधां भाण्डपूर्णापणालीं रामपुरीं व्यधत्त । प्रातर्मङ्गलशब्देन बुद्धो रामस्तं वीणाधारिणं यक्षं तां च पुरीमैक्षत । यक्षेण कृताऽऽग्रहः सेव्यमानः सुखं तस्थौ । कपिलो द्विजः समिदाद्यर्थं तत्राऽऽगतः । पुरीं दृष्ट्वा मायेयमिन्द्रजालं वा गान्धर्वपुरं वेति दध्यौ । तत्रैकां मानुषीरूपां यक्षिणीं दृष्ट्वा पृष्ट्वा रामपुरीयं गोकर्णयक्षेण कृता रामोऽत्र कृतार्थी करोत्यर्थिन इति श्रुत्वा मया रामः कथं द्रष्टव्य इति तां पप्रच्छ । साऽऽचख्यौ । यक्षरक्षिते द्वारचतुष्केऽत्र प्रवेशो दुर्लभः । पूर्वद्वारे तु यच्चैत्यं तन्नत्वा श्राद्धीभूय चेद्यासि तदा प्रवेशं लभसे, तच्छ्रुत्वाऽर्थार्थी कपिलः साध्वन्तिके धर्मं शुश्राव । लघुकर्मतया श्राद्धश्चाभूत् । भार्याऽपि श्राविका जज्ञे । ततो रामपुरीं गत्वा चैत्यं नत्वा राजवेश्म प्रविश्य रामादीनुपलक्ष्य दत्ताक्रोशस्मृत्या भीतो रामेण मा भैषीरित्युक्तो दत्तासनः

कृतस्त्वमागतोऽसीति पृष्टोऽवदत् । अरुणग्रामवासी युष्मदाक्रोशदाता कपिलोऽहम् । सुशर्मा ब्राह्मण्यपि कथितप्राग्वृत्ता सीतान्ते उ-
पाविशत् । रामेण दत्ताऽर्थः स्वग्रामं गतः कपिलः प्रबुद्धो नन्दावतंससूर्यन्ते प्रवव्राज ।
वर्षातिक्रमे यियासुं रामं यक्षः प्रणम्य भक्तिस्खलितं क्षमयित्वा रामाय स्वयंप्रभं हारं सौमित्रये रत्नताडङ्के सीतायै चूडामणिं
दिव्यवीणां च ददौ । पुरीं च सञ्जह्रे । रामाद्याः प्रतिदिनमरण्यान्यतिक्रम्य सायं विजयपुरं प्रापुः । वटमूलेऽवात्सुः । तत्र महीधर
नृपेन्द्राणीसुता वनमाला बाल्यादपि लक्ष्मणाऽनुरक्ता पित्रा दशरथं व्रतस्थं प्रोषितौ रामसौमित्री श्रुत्वा इन्द्रनगरे वृषभात्मजाय सु-
रेन्द्ररूपाय ददे । ततो मृतिकृतनिर्णया रात्रावेकाकिनी तदुद्यानं प्राप्ता रामसीतयोः सुप्तयोर्लक्ष्मणे यामिके सविस्मयं पश्यति वट-
मारुह्य भो वनदेवता दिग्देव्यो व्योमदेव्यश्च शृणुत । ममेहभवे सौमित्रिः पतिर्नाभूत् , भवान्तरे भूयादित्युक्त्वा कण्ठपाशे स्वमलम्ब
यत् । लक्ष्मणः सोऽहमिति वदंस्तं पाशं छित्वा तामादायोत्ततार । निशाशेषे प्रबुद्धयो रामसीतयोः शशंस । साऽपि सीतारामपादा-
न्ननाम । तन्मातेन्द्राणी तामदृष्ट्वा पूच्चक्रे । महीधरोऽन्वेषणाय भ्राम्यंस्तां तत्र ददर्श । तत्सैन्येषु हत हतेति वादिषु सौमित्रिर्धनुषि
ज्यामारोप्य टंकारमकारयत् । तद्ध्वनिना परेषु क्षुब्धत्रस्तपतितेषु महीधरः सौमित्रिमुपलक्ष्य रामं ननाम ऊचे च । त्वद्भ्रात्रेऽसौ स्वयं
जातरागा पुराऽपि मया कल्पितेति । स्वयं च रामादीन् सद्मनि निन्ये ।
इतश्च तेषु तत्र तिष्ठत्स्वतिवीर्यनृपदूतो महीधरं नृपं सभास्थमूचे । नन्द्यावर्तपुरेशोऽतिवीर्यो भरतेन सह विग्रहे जाते त्वां साहा-
य्यायाह्वयति । लक्ष्मणः पप्रच्छ । को विरोधहेतुः ? दूतः प्राह । अस्मत्स्वामी भरताद्भक्तिं वाञ्छति । भरतस्तु नेच्छति । रामोऽ-
पृच्छत् । भरतोऽतिवीर्येण योद्धुं समर्थः ? यत्तत्सेवां न मनुते । दूतेनोक्तम् । द्वावप्यसामान्यौ । महीधरो द्रुतमागच्छामीति दूतं वि-

सृज्य रामं बभाषे । अहो अस्याज्ञत्वं यदस्मानाहूय भरतं योधयिष्यति । तत्सर्वसेनया गत्वाऽमुमेव हन्मः । रामोऽभाषिष्ट । त्वं तिष्ठ । त्वत्सुतैः सह गत्वाऽहमेव यथोचितं करिष्ये । रामस्तत्पुत्रबलयुतः ससीतालक्ष्मणो नन्द्यावर्तपुरं गतः । तत्क्षेत्रदेवतया पृष्टयोक्तम् । अतिवीर्यः स्त्रीजितः । ततस्तस्यायशःकृते ससैन्यस्य तव स्त्रीरूपं करिष्ये । तथैवाभूत् । रामलक्ष्मणावपि स्त्रीरूपौ जातौ ॥ रामो द्वाःस्थेन तं नृपमज्ञापयत् । महीधरेण सैन्यं प्रहितमिति । अतिवीर्यः क्रुद्धः । यदसौ नाऽऽगात् किमस्य सैन्येन । एकोऽपि भरतं जेष्यामीति । कश्चित्प्राह न केवलं स्वयं नागात् । प्रत्युतोपहासाय स्त्रीसैन्यं प्राहिणोत् । राजा क्रोधादाह । इमास्त्रियो ग्रीवासु गाढं धृत्वा पुराद्बहिर्निवास्यताम् । तत्सामन्ता उत्थाय तत्स्त्रीसैन्यमुपद्रोतुं प्रावर्तन्त । रामो भुजेन गजस्तम्भमायुधीकृत्य तानपातयत् । सौमित्रिरतिवीर्यं रणायोत्थितं खड्गमाच्छिद्य केशेष्वाकृष्य बबन्ध । त्रस्तैः पौरैर्दृश्यमानस्तं गृहीत्वा चचाल । सीता तममोचयत् । सौमित्रिस्तं भरतसेवामभीमनत् । देवतया स्त्रीवेषे संहृतेऽतिवीर्यो रामलक्ष्मणौ ज्ञात्वाऽभ्यर्च्य मानी विजयरथं राज्ये न्यस्य रामेण ससन्मानं निषिद्धोऽपि प्राव्राजीत् । विजयरथः स्वस्वसारं रतिमालां सौमित्रये ददौ । रामः ससैन्यो विजयपुरं ययौ । विजयरथस्तु भरत नवितुमयोध्यां प्राप । भरतस्तं सच्चक्रे स कनिष्ठां स्वस्वसारं विजयसुन्दरीं भरताय ददौ । अतिवीर्यर्षिस्तत्राऽऽगतो भरतेन नत्वा क्षमयांचक्रे । विजयरथो भरतविसृष्टः स्वपुरं जगाम ।

रामे गन्तुमुद्यते सौमित्रिर्वनमालामापप्रच्छे । सोचे मुधा मम प्राणत्राणं किमकार्षीः । विरहदुःखं कथं सहिष्ये मां सह नय । लक्ष्मणः प्रोचे । सहाऽऽयान्ती भ्रातुः शुश्रूषाविघ्नं करोषि । ज्येष्ठमिष्टं स्थानं प्रापय्य समेष्यामि घोरं शपथ कारय । तया रात्रिभोजिनां पापेन गृह्ये चेन्नायामीति शपथं कारितः ।

ततः प्रस्थितो रामः क्रमाद्वनानि लङ्घित्वा क्षेमाञ्जलिपुरीं प्राप। बहिरुद्याने लक्ष्मणानीतैर्वन्यफलैर्बुभुजे। तत्र पुर्यां योऽस्य राज्ञः शक्तिप्रहार सहते स एतत्कन्यां परिणयत्वित्याघोषणां श्रुत्वा सौमित्रिस्तेन राज्ञा मुक्तं शक्तिपञ्चकं द्वे कराभ्यां, द्वे कक्षाभ्यामेकां दन्तैश्चेति जग्राह। शत्रुदमनो जितपद्मां कन्यां ददौ। तत्र तेन राज्ञाऽर्चितो रामश्चलितः। सौमित्रिस्तं नृपमूचे। व्यावृत्तस्त्वत्सुतां परिणेष्यामि।

रामो वंशशैलाद्रितटस्थं वंशस्थलं पत्तनं सायं ययौ। तत्र सभूपं लोकं भयाकुलं दृष्ट्वा कञ्चित्पप्रच्छ। स प्राह। अद्य तृतीयं दिनम्। शश्वदत्राऽद्रौ रौद्रो ध्वनिरुच्छलति। तद्भयाल्लोको रात्रिमन्यत्रातीत्य प्रातः पुनरायाति। रामः कौतुकी सानुजोऽद्रिमारूढः। कायोत्सर्गस्थौ मुनी दृष्ट्वा ववन्दे। रामो गोकर्णार्पितवीणामवादयत्। लक्ष्मणो जगौ। सीता ननर्त। रात्रिर्जाता। विकृताऽनेकवेतालोऽनलप्रभो देवोऽट्टहासैनभः स्फोटयन्साधू उपद्रोतुमारेभे। रामलक्ष्मणौ मुन्यन्ते सीतां मुक्त्वा तं हन्तुमुत्तस्थाते। देवो नष्टः। मुन्योश्च केवलज्ञानमुत्पेदे। देवैर्महिमा चक्रे।

राम उपसर्गहेतुं पप्रच्छ। कुलभूषणमुनिरुवाच। पद्मिनीपुर्यां विजयपर्वतनृपदूतोऽमृतस्वरः। भार्योपयोगा। उदितमुदितौ सुतौ। दूतो मित्रेण वसुभूतिद्विजेन मार्गे सह गच्छतोपयोगासक्तेनाघानि। वसुभूतिः पुरीमेत्योपयोगायास्तदाऽऽख्यत्। तयोक्तम्। पुत्रावपि जहि। वसुभूतिपत्नी तज्ज्ञात्वा उदितमुदितयोरज्ञापयत्। उदितेन हतो वसुभूतिर्नलपल्ल्यां म्लेच्छोऽजनि। अन्यदोदितमुदितावात्तव्रतौ विहरन्तौ सम्मेते चैत्यनत्यै प्रचेलतुः। तत्र पल्यां वसुभूतिजीवम्लेच्छेन दृष्टौ। पूर्ववैरात्तौ हन्तुं धावितो म्लेच्छो म्लेच्छेशेन न्यषेधि। यतः स म्लेच्छेशः प्राग्भवे खग उदितमुदितजीवाभ्यां कर्षकाभ्यां व्याधान्मोचित इति। ततस्तौ सम्मेते चैत्यानि नत्वा

विहृत्यानशनान्महाशुक्रे सुन्दरसुकेशाख्यौ सुरौ जातौ। वसुभूतिजीवस्तु म्लेच्छो भवं भ्रान्त्वा नरजन्मनि तापसो ज्योतिष्केषु धूमकेतुर्मिथ्यादृष्टिर्देवोऽभूत्। उदितमुदितजीवौ शुक्राच्च्युत्वाऽरिष्टपुरे प्रियंवदराजस्य पद्मावत्यां रत्नरथचित्ररथौ सुतौ। तथा कनकाभार्यां पत्न्यां धूमकेतुजीवोऽनुद्धरः सुतः। रत्नरथचित्ररथयोः स समत्सरोऽभूत्। तौ तु तस्योपरि न मत्सरिणौ। राजा रत्नरथे राज्यं द्वयोर्यौवराज्यं न्यस्य षड् दिनानि प्रायं कृत्वा सुरो बभूव। अन्यदा केनचिन्नृपेणानुद्धरे याचमानेऽपि रत्नरथाय श्रीप्रभाख्या कन्या दत्ता। क्रुद्धोऽनुद्धरो रत्नरथभुवं लुण्टयन् रणे रत्नरथेन बद्धो बहुधा विडम्ब्य मुक्तस्तापसीभूतः। स्त्रीसङ्गात्तपो मोघीकृत्य भ्रान्तभवः पुनर्मर्त्यभवे तापसो भूत्वा ज्योतिष्केऽयमनलप्रभो देवोऽजनि। रत्नरथचित्ररथौ तु स्वीकृतव्रतावच्युतकल्पेऽतिबलमहाबलौ देवौ जातौ। ततश्च्युतौ सिद्धार्थपुरे क्षेमंकरराजस्य विमलादेवीकुक्षिजौ कुलभूषणदेशभूषणौ सुतौ जातौ। घोषोपाध्यायपार्श्वे द्वादशाब्दीमपठाव। त्रयोदशेऽब्दे घोषेण सह नृपपार्श्वे यान्तौ राजगेहे वातायनस्थां कन्यां दृष्ट्वा जातरागौ नृपान्तं गत्वा कला अदर्शयाव। उपाध्यायो राज्ञाऽर्चितः स्वगेहं जगाम। आवां च मातरं नन्तुं गतौ मातुरन्ते तां कन्यामपश्याव। मात्रा चोक्तम्। युवयोः स्वसेयं कनकप्रभा। युवयोरुपाध्यायगृहे तस्थुषोरियं जातेति। तच्छ्रुत्वा वैराग्याऽऽपन्नौ गृहीतदीक्षाविहाद्रावायातौ। कायोत्सर्गमकार्ष्व। पिताऽसद् वियोगात्कृतानशनो महालोचननामा गरुडेशो देवो बभूव। आसनकम्पेनावयोरुपसर्गं ज्ञात्वा सम्प्रत्ययमिहाऽऽययौ। अनलप्रभदेवस्त्वनन्तवीर्यकेवलिसमीपे कौतुकाद्गतः। तत्र च केनचित्केवली पृष्टः। अस्मिन्श्रीसुव्रततीर्थे तव पश्चात्कः केवलीति। सोऽप्याख्यत्। मम निर्वाणे कुलभूषणदेशभूषणौ द्वौ भ्रातरौ केवलिनौ भविष्यतः। अनलप्रभस्तच्छ्रुत्वा विभङ्गेनावामत्रस्थौ विज्ञाय मिथ्यात्वेन केवलिवचनान्यथाकरणाय प्राग्वैराच्चोपदुद्राव। चत्वार्यहान्यतीयुः। अद्य युष्मद्भीत्याऽनशत्। आवयोश्च केवलि-

त्यमभूत्। तदा महालोचनदेव ऊचे। काकुत्स्थस्त्वं साध्वकार्षीः। किं प्रत्युपकरोमि। रामेऽनिच्छति क्वाप्युपकरिष्यामीत्युक्त्वान्तर्दधे।

अथ वंशस्थलेशः सुरप्रभनृपस्तत्राऽऽगत्य रामं ननाम। रामाज्ञया च तत्र शैलेऽर्हच्चैत्यान्यचीकरत्। तदादि स गिरिर्नाम्ना रामगिरिरित्यभूत्। ततः प्रस्थितो रामो दण्डकारण्यं प्रविष्टो गिरिगुहागृह उवास। तत्र त्रिगुप्तसुगुप्तौ द्विमासोपोषितौ चारणर्षी नभसा समायातौ। रामाद्यास्तौ नत्वाऽन्नपानैः प्रत्यलाभयन्। देवै रत्नगन्धाम्बुवृष्टयश्चक्रिरे। तदा कम्बूद्वीपखेचरेशो रत्नजटी द्वौ च सुरावागत्य रामाय साश्वं रथं ददुः। तत्र गन्धाख्यः खगो रोगी गन्धाम्बुवृष्टिगन्धेन वृक्षादुत्तीर्यायातो मुनिदर्शनाज्जातजातिस्मृतिर्मूर्च्छितो जलसेकाल्लब्धसंज्ञः साधुपादेषु पतितः साधोः स्पर्शौषधिं लब्ध्वा नीरोगो बभूव।

पक्षौ हेमावजायेतां चञ्चुर्विद्रुमविभ्रमा। पद्मरागप्रभौ पादौ नानारत्नप्रभं वपुः ॥२८॥

रत्नाङ्कुरश्रेणिनिभा जटाः शिरसि चाभवन्। जटायुर्नाम तस्याऽभूत्ततःप्रभृति पक्षिणः ॥२९॥युग्मम् ॥

रामो मुनी पप्रच्छ। गृध्रोऽयं क्रव्यात्कुधीः, कुतः शान्तः कथं च क्षणात्सुरूप इति। सुगुप्तर्षिराख्यत्। इह कुम्भकारकटं पुरमासीत् तत्रैव दण्डको राजा। तदा च श्रावस्त्यां जितशत्रुर्नृपः। धारिणी पत्नी। स्कन्दकः सुतः। पुरन्दरयशा दुहिता। दण्डकेन सा परिणीता। अन्यदा स्कन्दककुमारेण दण्डकदूतः पालकद्विजस्तत्राऽऽगतो धर्मगोष्ठ्यां निरुत्तरीचक्रे। सभ्यैश्च हसितः स्कन्दकेऽमर्षं दधत् स्वस्थानं प्राप। स्कन्दकस्तु कदाचित्पञ्चराजपुत्रशतयुतः श्रीमुनिसुव्रतान्ते दीक्षितः स्वामिना मारणान्तिकोपसर्गनिवेदनेऽपि स्वं विना सर्वाराधकान् श्रुत्वा पुरन्दरयशोमुख्यान्बोधयितुं कुम्भकारकटं ययौ। पालको वैरात्साधूपयोग्योद्यानभूमौ शस्त्राणि न्यखानयत्। एकत्रोद्याने समवसृतं स्कन्दकाचार्यं नत्वा देशनां श्रुत्वा हृष्टो दण्डकनृपः स्वगृहं गतः। पालकेनोचे। बकाचारोऽयं पाखण्डी। सह-

स्रयोधिभिर्मुनिवेषैः पुम्भिः सह राज्यमादातुमागतः। शस्त्रदर्शनं प्रत्ययः। राजा तथा दृष्ट्वा निषण्णोऽविचार्य पालकं प्राह। अस्य दुर्मतेरुचितं त्वयैव कर्तव्यं नाऽहं प्रष्टव्यः। पालको यन्त्रं कृत्वा स्कन्दकस्य पुर एकैकं साधूं न्यपीलयत्। बालकमुनिपीलने मामे-वादौ पीलयेति स्कन्दकेनोक्तोऽपि तमेव शिशुमपीलयत्। सर्वेऽपि कृताऽऽराधनाः परं पदं प्रापुः। स्कन्दकस्तु कृतप्रत्याख्यानो दण्डकपालकयोः सकुलराष्ट्रयोर्वधे विहितनिदानो वह्निकुमारो देवो बभूव। पुरन्दरयशाः स्वदत्तरत्नकम्बलतन्तुजे रक्ताक्ते रजोहरणे शकुनिकया पुरःक्षिप्ते भ्रातुर्विपदं विज्ञाय दण्डकं पाप पापेत्याक्रोशन्ती शोकमग्ना शासनदेव्योद्धृत्य श्रीमुनिसुव्रतपादान्ते नीता प्रवव्राज। स्कन्दको दण्डकं सपालकं सपूर्लोकं ददाह। तदादीदं दण्डकारण्यं बभूव। दण्डकोऽपि भ्रान्तभवो गन्धाख्योऽयं रोगी पक्षी जातः। अस्यास्मद्दर्शनाज्जातिस्मृतिर्नीरोगता च जज्ञे। पक्षी तच्छ्रुत्वा मुमुदे। मुनिं नत्वा धर्मं श्रुत्वाऽशिश्रियत्। जीवहिंसामांसाहाररात्रिभोजनानि प्रत्याख्यत्। मुनिना साधर्मिकोऽयं व इत्युक्तो रामः परमोऽयं बन्धुर्न इत्यूचिवान्। मुनी व्योम्नाऽन्यतो जग्मतुः। रामाद्यास्तं दिव्यरथमारुह्य जटायुयुताः क्रीडयाऽन्यत्र विजह्रुः।

इतश्च पाताललङ्कायां खरचन्द्रणखासुतौ शम्बूकसुन्दावभूताम्। अन्यदा शम्बूकः पितृभ्यां वार्यमाणोऽपि सूर्यहासासिसाधनार्थं दण्डकारण्यं प्राप्तः। क्रौंचरवातीरे वंशगह्वरान्तः स्थित्वा यो मां वारयिष्यति तं हनिष्यामीत्यूचे।

एकान्नभुग्विशुद्धात्मा ब्रह्मचारी जितेन्द्रियः। अधोमुखो वटशाखानिबद्धचरणद्वयः ॥३०॥

विद्यां जपितुमारेभे सूर्यहासासिसाधिनीम्। सप्ताहाग्रद्वादशाब्द्या या सिद्धिमुपगच्छति ॥३१॥

तस्यैवं वाल्गुलीस्थानकस्थस्य द्वादशाब्दानि चतुरहाग्राण्यतीयुः। सूर्यहासः प्रत्याकारान्तर्हितः स्फूर्जत्परिमलः सेद्धुकामस्तु व्योम्ना

समाययौ। सौमित्रिः क्रीडयेतस्ततो भ्राम्यंस्तं खड्गं दृष्ट्वा लात्वा प्रत्याकारात्कृष्ट्वा तीक्ष्णत्वपरीक्षार्थं वंशजालीं लुलाव। शम्बूकस्य शिरः पतितं पुरः पतितं दृष्ट्वाऽग्रतो वंशगह्वरं प्रविष्टो वटशाखावलम्बिनम् कबन्धं पश्यन्मया कोऽप्ययुध्यमानोऽशस्त्रश्च हत इति स्वं निनिन्द। रामाय तद्वृत्तोक्तिपूर्वं खड्गं दर्शयामास। रामो जगाद। सूर्यहासासिरयम्। त्वयाऽस्य साधको जघ्ने। अस्य कश्चिदुत्तरसाधकोऽपि नक्ष्माच्यते।

अत्रान्तरे चन्द्रणखा मत्सूनोः सूर्यहासोऽद्य सेत्स्यतीति मुदिता पूजापानान्नयुता तत्रागता सूनोश्छिन्नं शिरो दृष्ट्वा रुदती लक्ष्मणपादाङ्कन्यासपद्धत्यनुसारेण गच्छन्ती ससीतासौमित्रिं रामं तरुतलस्थं ददर्श। सा रिरंसुः कन्यास्वरूपं विकृत्योपस्थिता रामेणाभाणि। कुतो दारुणेऽरण्ये? साऽप्यूचे। अहमवन्तीराजस्य कन्या केनाऽपि खेचरेण हृत्वाऽत्रारण्य आनीता। स च खेचरः केनचित्खेचरेण स्त्रीरत्नं हृत्वा क्व यासीत्युक्त्वा योधितः। तौ द्वावपि विपेदाते। अहं कान्दिशिका भ्राम्यन्ती त्वां प्रापम्। मां कुलजां कुमारीं परिणय। रामसौमित्री काचिदियं मायिनी कूटनाटकमुत्पाद्यास्मान्वञ्चयितुमागादिति ध्यायन्तावन्योन्यं मुखमीक्षांचक्राते। सभार्योऽहमभार्यं लक्ष्मणं भजेति रामेण सस्मितमुक्ता लक्ष्मणमर्थयन्ती तेनाऽऽर्यं गताऽऽर्येवेत्यवादि। सा याच्ञाखण्डनात्सुतवधाच्च क्रुद्धा खरादीनां तत्कृतं सुतवधमाचख्यौ। ते चतुर्दशविद्याधरसहस्रयुजो राममुपद्रोतुमभ्येयुः। मयि सत्यार्यः कथं योत्स्यत इति लक्ष्मणो युद्धाय प्रववृते। चेत्सङ्कटं भवेत्तदा ममाहूत्यै सिंहनादं कुर्या इति रामोऽन्वशात्। युद्धे प्रवर्तमाने चन्द्रणखा स्वभर्तुः पार्ष्णिग्रहाय स्वसोदरं रावणं गत्वा जगाद। दण्डकारण्ये रामलक्ष्मणौ मनुष्यौ त्वज्जामेयं यमातिथिं चक्रतुः। त्वत्स्वसृपतिस्तच्छ्रुत्वा सौमित्रिणा युध्यमानोऽस्ति। रामस्तु सीतया विलसन्नास्ति। सीता च रूपश्रिया योषितां सीमा। तत्स्त्रीरत्नं तवैव योग्यम्। इति श्रुत्वा दशास्यः पुष्पकमारुह्याऽऽदिदेश। यत्र जानकी तत्र याहीति। दशास्यो दृष्ट्वाऽपि रामाद् बिभ्यत्सीतां हर्तुमशक्तोऽवलोकिनीं विद्यां

सस्मार। तां किंकरीमिव कृताञ्जलिं मम सीताहरणे साहाय्यं कुर्वित्युवाच। तयोक्तम्। वासुकेरपि मौलिरत्नमादातुं शक्यं न तु रामान्तिकस्था सीता। किं त्वस्त्युपायो येनाऽयं लक्ष्मणं यायात्। यत्सिंहनादनसंकेतः। ततो दशास्यादेशात्सा सौमित्रिवत्सिंहनादं चक्रे। रामः श्रुत्वा दध्यौ। ममानुजः केनाऽपि सङ्कटं न प्राप्येत संकेतक्ष्वेडा तु श्रूयते। सीता लक्ष्मणवात्सल्यात्प्राह। आर्यपुत्र! किं विलम्बसे? द्रुतं याहि। त्रायस्व। रामः सीतावचनैः क्ष्वेडया च प्रणुन्नोऽशकुनान्यप्यवगणय्य द्रुतं ययौ। अथ दशास्यो रुदतीं सीतां पुष्पक आरोपयितुमारेभे। जटायुस्तमनुधावन् स्वामिन्येषोऽस्मि। मा भैः। रे रक्षः तिष्ठ तिष्ठ इति वदन् त्रोटीनखकोटिभिर्दशास्यस्योरो विलिलेख। दशास्यः खड्गेन पक्षौ छित्वा तं भुव्यपातयत्। स्वयं निःशङ्को नभसा प्रतस्थे। हा राम! हा सौमित्रे! हा तात! हा भामण्डलेति सीता रुरोद। अर्कजटिसुतो रत्नजटीस्तद्रुदितं श्रुत्वा रावणेन ह्रियमाणां सीतां विमृश्य प्रभोर्भामण्डलस्याद्योपकरोमीति सखड्गो रावणमाक्षिपत्। रावणेन हसित्वा हृतविद्यो भूमौ पतितः कम्बुद्वीपे कम्बुशैलमारुह्य तस्थौ। रावणोऽपि व्योम्नाऽब्धेरुपरि गच्छन्सीतामनुनिन्ये। हर्षस्थाने किं शोचसि? मम भूचरखेचरभर्तुर्महिषीपदं प्राप्तासि। दैवेन पूर्वं मन्दभाग्येन रामेण त्वां योजयता नोचितं चक्रे। मया तूचितं व्यधायि। मयि दासे खेचर्यः खेचरा अपि तव दासाः। सीताऽधोमुखी रामेत्यक्षरद्वयमस्मार्षीत्। रावणे पादयोः पतति परपुंस्पर्शभीता पादावपासारयत्। आचुक्रोश च। रे निस्त्रप! परस्त्रीकामनाफलमचिरान्मृत्युं लप्स्यसे। सन्मुखागतैः सारणादिसचिवैरन्यैश्च रक्षःसामन्तैर्वृतो दशास्यो लङ्कां प्राप। यावद्रामसौमित्रिक्षेमोदन्तं न लप्स्ये तावन्न भोक्ष्य इति सीताऽभ्यग्रहीत्। रावणो लङ्कां पूर्वेण देवरमणोद्याने रक्ताशोकद्रुतले त्रिजटयाऽऽरक्षकैश्च वृतां सीतां मुक्त्वा मुदितः स्वं धाम जगाम।

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरित्रे गद्यबन्धे सप्तमे पर्वणि सीताहरणो नाम पञ्चमः सर्गः ॥

## ॥ अथ षष्ठः सर्गः ॥

इतश्च लक्ष्मणो धन्विनं राममायातं दृष्ट्वाऽऽर्यामेकाकिनीं मुक्त्वा किमागम इति बभाण। त्वत्सिंहनादादिति रामोक्ते मया सीताम नाकारि स्वेष्टा। वञ्चितोऽसि। शीघ्रं याहि। त्रायस्वार्याम्। रिपून्हत्वैष आयामीति लक्ष्मणः प्राह। रामः स्वस्थानं गतः। सीताम दृष्ट्वा मूर्च्छितः पतति स्म। लब्धसंज्ञस्तं मुमूर्षुं जटायुषं दृष्ट्वा दध्यौ। नूनं केनाऽपि दयिता हृता, अयं च निहतः। स रामेण दत्त नमस्कारो माहेन्द्रकल्पे देवो बभूव। रामोऽपि सीतामन्वेष्टुमितस्ततोऽटव्यां बभ्राम।

इतश्च लक्ष्मणे युध्यति खरस्यावरजस्त्रिशिरा ज्येष्ठं निवार्य स्वयं युध्यति स्म। लक्ष्मणेन जघ्ने च। तदा पाताललङ्केशश्चन्द्रोदरसुतो विराधः सन्नद्धसैन्यस्तत्रागतो लक्ष्मणं नत्वा तव भृत्योऽस्मि, अमी रावणगृह्या मत्तातं हत्वा पाताललङ्कां जगृहुरित्युवाच। लक्ष्मणः प्राह। हन्यमानान्द्विपः पश्य। पाताललङ्कायां स्थापितोऽसि। अद्य प्रभृति मज्ज्येष्ठस्तव स्वामी। खरो लक्ष्मणान्तिके वैरिणं विराधं दृष्ट्वाऽधिकं क्रुद्धोऽधिज्यधन्वाऽभ्येत्योवाच। रे विश्वस्तघातक! मत्सुतः शम्बूकः क्वास्ते? वराकेण विराधेनाऽधुना किं रक्ष्यसे? लक्ष्मणः स्मित्वाऽऽह तवानुजस्त्रिशिरा अपि भ्रातृपुत्रे सोत्कण्ठस्तमनुप्रजिघ्ये। तवाऽपि चेत्सुते सोदरे चोत्कण्ठा त्वामपि तत्र नयामि त्वत्पुत्रो मया प्रमादाद्धतस्तत्र पौरुषं न। त्वं कौतुकं पूरयेति। तयोः सङ्गरोऽजनि। अहो! खरस्य विष्णुनाऽपि योद्धुं शक्तिरिति व्योमगीरभूत्। सौमित्रिः क्षुरप्रेण खरशिरश्चिच्छेद। ततो दूषणमपि युध्यन्तं सञ्जहार। स्फुरद्वामनेत्रो विराधेन सार्धं ववले। सीता-

वियुतं रामं दृष्ट्वा विषसाद। रामः पुरस्थमपि सौमित्रिमपश्यन्विरहार्तः खेऽब्रवीत्। वनदेव्यो वनं भ्रान्तं, सीता न दृष्टा। युष्माभिः किं न दृष्टा? भीष्मेऽरण्ये एकाकिनीं सीतां मुक्त्वा लक्ष्मणायागमम्। तत्र रक्षःसहस्राकुले रणे सौमित्रिमेकं मुक्त्वा भूयोऽत्राऽऽगमम्। हा सीते! कथमरण्ये मुक्ता? हा वत्स! कथं रणसङ्कटे मुक्तोऽसि? एवं ब्रुवन् मूर्च्छितः। सौमित्रिणा बभाषे। आर्य! आर्य! किमिदम्? तव भ्राताऽयं रिपून्जित्वा समुपस्थितः। रामस्तया वाचाऽमृतेन सिक्त इव लब्धसंज्ञोऽनुजं दृष्ट्वा सस्वजे। लक्ष्मणोऽभाषिष्ट। केनाऽपि मायिना सीताहृतये क्ष्वेडा चक्रे। तत्प्राणैः सह सीतामाहरिष्यामि। साम्प्रतं तत्प्रवृत्त्यर्थं यतामहे। अयं विराधः पाताललङ्काराज्ये स्थाप्यताम्। मया हि प्रतिपन्नमदः। विराधः सीताप्रवृत्त्यै खेचरभटान्प्रजिघाय। काकुत्स्थयोस्तत्रस्थयोर्मुहुर्मुहुर्निःश्वसतोः क्रुधाधरं दशतोस्ते सीताप्रवृत्तिमप्राप्याऽऽगता अवाङ्मुखास्तस्थुः। रामोऽप्याह युष्माभिर्यथाशक्त्युद्यतैरपि सीताप्रवृत्तिर्नाप्ता तत्र वः को दोषः। दैवमेव बलवत्। विराधो व्यजिज्ञपत्। प्रभो! मा निर्वेदं कृथाः। अनिर्वेदः श्रियो मूलम्। तव भृत्योऽस्मि। एहि मां पाताललङ्कायां निवेशय। तत्र सीताप्रवृत्तिः सुलभा भविता। रामः सानुजः ससैन्येन विराधेन तत्र ययौ।

तत्र खरात्मजः सुन्दो विराधेन युध्यन्काकुत्स्थे रणस्थे चन्द्रणखा गिरा प्रणश्य लङ्कायां रावणं शरणं ययौ। राघवौ विराधं पैतृके पदे न्यास्थताम्। स्वयं खरराजस्य प्रासादे तस्थतुः। विराधः सुन्दवेश्म शिश्राय।

इतश्च ताराभिलाषिणः साहसगतेर्हिमवद्गिरौ प्रतारणीविद्या सिद्धा। तया स सुग्रीवरूपः किष्किन्धिपुरं प्राप्तः क्रीडार्थं सुग्रीवे बहिर्गते तारादेवीभूपितमन्तःपुरमगात्। सत्यसुग्रीवश्चागतो द्वाःस्थैः सुग्रीवनृपोऽग्रे गत इति जल्पद्भिः स्खलितः। वालिसूनुः सुग्रीवद्वयं दृष्ट्वा शुद्धान्तविप्लवं त्रातुं तद् द्वारं गतः। शुद्धान्ते विशन्तं विटसुग्रीवमस्खलत्। सैनिकानां चतुर्दशाक्षौहिण्योऽमिलन्। सैनिका-

द्वयोरपि भेदमजानानाः सत्यसुग्रीवतो विटसुग्रीवतोऽर्धार्धेऽभवन्। द्वयोः सैन्ययोर्महायुद्धमभूत्। सुग्रीवो विटसुग्रीवं रे परगृहप्रवेशलम्पटेत्युदीर्य योद्धुमाह्वत। द्वावपि युयुधाते। मिथश्छन्नास्त्रौ मल्लयुद्धेनास्फालयताम्। द्वावपि महाप्राणौ मिथो जेतुमसमर्थावपसृत्य दूरं तस्थतुः। सुग्रीवः सहायकार्थं हनुमन्तमाहूय भूयोऽपि विटसुग्रीवेण युयुधे। विटसुग्रीवो भेदमजानतो हनुमतः पश्यतोऽपि सुग्रीवं कुट्टयामास। सुग्रीवः खिन्नः किष्किन्धपुराद्बहिर्निर्गत्याऽऽवासं जग्राह। विटसुग्रीवो वालिसुताच्छुद्धान्तप्रवेशमलभमानोऽन्यस्यैतास्तत्रैव तस्थौ।

सुग्रीवो दध्यौ कोऽप्येष वैरी स्त्रीलम्पटो मायी। एतन्मायावशान्निजा अप्यनिजा जाताः। कथमयं वध्यः धिङ् मां वालिनाग्नो लज्जाकरम्। वाली धन्योऽखण्डपुरुषव्रतो यो राज्यं त्यक्त्वा परं पदं प्राप। चन्द्ररश्मिकुमारो बलीयान्। किन्त्वभेदज्ञः कं रक्षतु कं वा हन्तु। अनेन त्विदं साधु चक्रे। यत्तस्य पापिनः शुद्धान्तप्रवेशो रुद्धः अस्यारेर्वधाय कं बलिनं श्रये। किं दशास्यं भजे? किन्त्वसौ प्रकृत्या स्त्रीलोलस्तं मां च हत्वा स्वयं तारां लास्यति। ईदृशे व्यसने खरः साहाय्ये समर्थोऽभूत्। परं स राघवेण जघ्ने। तावेव राघवौ मित्रीकरोमि। यौ तत्कालोपनतस्यापि विराधस्य राज्यदौ। तौ विराधोपरोधेन पातालङ्कायां तिष्ठतः। एवं ध्यात्वा दूतं रहस्यमनुशिष्य प्राहिणाय। दूतः पातालङ्कायां गत्वा विराधाय प्रणम्य सर्वं वृत्तान्तमाख्यायाऽस्मत्स्वामी राघवौ त्वद्द्वारेण श्रिश्रीयतीत्यूचे। आयातु सुग्रीवस्तेनेत्युक्तो दूतः सुग्रीवाय गत्वा तच्छशंस। सुग्रीवोऽश्वानां ग्रैवेयकस्वनैर्दिशो मुखरयन्पातालङ्कां प्राप्तो विराधमुपतस्थे। विराधोऽभ्युत्तस्थौ। रामं तं नमस्कारयामास। दुःखं चाचीकथत्। सुग्रीवोऽप्यूचे। अस्मिन्दुःखे त्वमेव मे गतिः। रामो दुःख्यपि तद्दुःखच्छेदं स्वीचक्रे। सुग्रीवो विराधेन सीताहरणं वृत्तं ज्ञापितः कृताञ्जलिर्व्यज्ञपयत्। देव! तव न काऽपि

कारणाऽपेक्षा तथापि वच्मि । त्वत्प्रसादात्क्षतारिः सन्ससैन्यस्तवानुजोऽस्मि । सीताप्रवृत्तिं चानेष्ये । रामो विराधं विसृज्य ससुग्रीवः किष्किन्धां प्रतस्थे । रामे किष्किन्धाद्वारप्राप्ते सुग्रीवो मायासुग्रीवं युद्धायाऽऽह्वास्त । द्वावपि भुवं वेपयन्तौ युध्येते स्म । रामोऽपि सदृशौ तौ पश्यन्संदिहानः क्षणमुदासीन इव स्थित्वा वज्रावर्ताऽऽख्यधनुष्टंकारेण साहसगते रूपान्तरकरीं विद्यामनाशयत् । रे पाप! मायया सर्वं विमोह्य परदारे रिरंससे ? चापमारोपयेत्युक्त्वैकेनेषुणा तत्प्राणान्जहार । सुग्रीवं राज्येऽस्थापयत् । त्रयोदश निजाः कन्या ददतं तं सीताऽन्वेषणायैव यतस्वेत्यभाषत । बहिरुद्याने च तस्थौ । सुग्रीवस्तु तदादेशात्स्वपुरीं प्रविवेश ।

इतश्च लङ्कायां खरादिवधश्रुतेर्मन्दोदर्यादयो रुरुदुः । चन्द्रणखाऽपि ससुन्दा रुदती पाणिभ्यामुरो घ्नन्ती रावणगृहं प्रविश्य रावणकण्ठे लगित्वा हा हताऽस्मि । पुत्रो हतो भर्ता देवरौ च । कुलपत्तीनां चतुर्दश सहस्राणि हतानि । पातालल‌ङ्कापुरी त्वयि जीवत्यपि रिपुभिराच्छिन्नेति जगाद । रावणस्त्वत्कान्तसुतहन्तारं हनिष्याम्यचिरादिति तामाश्वासयामास । स्वयं च तेन शोकेन सीताविरहरुजा च तल्पे निपत्य स्थितो मन्दोदर्या तन्निबन्धनं पृष्टः प्राह । सीताविरहज्वरान्न चेष्टितुं न वक्तुं न चेक्षितुं क्षमः । चेन्मया जीवता तेऽर्थस्तन्मानं त्यक्त्वा तामनुनय । अहं ह्यनिच्छन्तीं परनारीं न भुञ्जे । गुरुसाक्षिकोऽयं नियमः ।

साऽपि पतिपीडापीडिता सीतां गत्वोवाच । अहं दशास्यमहिषी मन्दोदरी । त्वयि दास्यं प्रपत्स्ये । दशास्यं भज । धन्या त्वम् , विश्वसेव्यपदपद्मो मत्पतिर्या सिषेविषते । चेदयं प्राप्यते, तत्पत्तिमात्रेण रामेण किम् ? सीता रुष्टाऽभाषिष्ट । क्व गरुडः, क्व काकः, क्व रामः, क्व च त्वत्पतिः, युवयोः पाप्मनोर्युक्तं दम्पतित्वं, । यदेकोऽन्यस्त्रीषु रिरंसुरपरा च दूती । द्रष्टुमप्यनर्हाऽसि । याहि दृष्टिपथं त्यज । रावणोऽपि तदा तत्राऽऽगतोऽवादीत् । कुतः कुपिताऽसि ? मन्दोदरी तव दासी, अहं दासः । प्रसीद, दृशाऽपि किं

दृष्टोऽसि । रामे सानुजे रिपुकाले कियज्जीविष्यसीत्याद्याचुक्रोश । न शृणोषि? सीता पराङ्मुखीभूता रे रामदारान्हरन्कृतान्तदृष्टया दृष्टोऽसि । रामे सानुजे रिपुकाले कियज्जीविष्यसीत्याद्याचुक्रोश ।

स तु काममिदम्भितस्तथैवोवाच ।

अत्रान्तरेऽर्के पश्चिमलवणोदे निमग्ने निशायां दशास्यः सीतायै घोरोपसर्गान्विचक्रे । घूत्कारिणो घूकाः, फुत्कुर्वाणाः फेरवः, पुच्छाच्छोटिनो व्याघ्राः, फुत्कुर्वाणाः फणिनः, कृष्टकर्त्तिकाः पिशाचिविधं क्रन्दन्तो वृकाः, अन्योऽन्यं युध्यमाना ओतवः, उल्ललन्तः सीतोपान्तमुपेयुः । सीता धृतनमस्कारध्याना अभीतैव तस्थौ । न तु दशास्यं भेजे । विभीषणः प्रातस्तन्निशावृत्तं श्रुत्वा दशास्यान्तमुपगतः, सीतामुवाच, भद्रे ! का त्वं, कुतः, कस्यासि, किमत्र, मा भैषीः, परस्त्रीसोदरस्य मे सर्वं वद । सीताऽपि तं मध्यस्थं ज्ञात्वाऽधोमुखी बभाषे । जनकसुताऽहं, भामण्डलस्वसा रामभार्या दशरथस्नुषा दण्डकारण्ये देवरोऽज्ञानाद्वंशजालिमध्यस्थसाधकशिरस्तत्रैव दृष्टेनासिना चिच्छेद । सानुतापो भ्रातुर्न्यवेदयत् । तस्यैवासिसाधकस्य काचिदुत्तरसाधिका रन्तुं मत्पतिं ययाचे । मायावशाता गता । रक्षसामागते बले क्ष्वेडां बंधुर्यसंकेतीकृत्य लक्ष्मणो युध्यगात् । अयं च राक्षसो मायाक्ष्वेडया मत्पतिं दूरं नीत्वा स्ववधायेव मां जहार ।

विभीषणस्तच्छ्रुत्वा रावणं नत्वा बभाण । प्रभो ! त्वयेदं कुलदूषणं कर्म कृतम् । यावत्काकुत्स्थो हन्तुं नाभ्येति, तावदेतां तदन्तिके नीत्वा मुञ्च । रावणः क्रोधारुणाक्षो व्यब्रवीत् । भीरो ! किमिदं वक्षि ? मत्पौरुषं व्यस्मार्षीः ? सीताऽवश्यं मत्पत्नी भविता । भवौ चाऽऽयातौ रामसौमित्री हनिष्यामि । विभीषणोऽवदत् । ज्ञानिनो वचः सत्यं यद्रामपत्न्याः सीतायाः कृते नः कुलक्षयः । भाव्यं यद्यपि भाव्येव तथापि प्रार्थ्यसे । कुलघातस्य यन्मे वचो न मन्यसे । दशरथोऽपि कथमन्यथा मया हतोऽपि जीवितः ।

तिनीं सीतां मुञ्च । रावणस्तदश्रुत्वेव पुष्पके सीतामारोप्य क्रीडाचलोद्यानधारावेश्मरतिवेश्मादीनि यत्र तव रतिस्तत्र मया सह रमस्वेति वदन्नदीदृशत् । भूयोऽप्यक्षुब्धां तामशोकवनिकायां मुमोच ।

विभीषणो ज्येष्ठमुन्मत्तमिव दृष्ट्वा कुलामात्यान्मन्त्रयितुमाह्वास्त । ऊचे च भो कुलामात्याः कामाद्या दुर्जया रिपवः । एकोऽपि कामो दुर्जयः । किं पुनः परनारीरिरंसासहकृतः । तदतः परं लङ्केशो व्यसनाब्धौ पतितः । मन्त्रिणः प्रोचुः । वयं नाम्नैव मन्त्रिणः । मन्त्री तु दूरदर्शी त्वमेव । प्रभौ कामार्ते मन्त्रः किं करोति । राघवस्य सुग्रीवहनुमन्मुख्या मिलिताः । ज्ञानिना सीताहेतुरैक्ष्वाकादस्मत्कुलक्षयः प्रोचे । ततो विभिषणो वप्रे यन्त्राद्यारोपं व्यधात् । इतश्च रामः सौमित्रिणाऽऽश्वास्यमानः कथमपि कमपि कालं निनाय। अथ रामेणाऽनुशिष्य प्रेषितः सौमित्रिस्तूणचापकृपाणभृदुग्रभृकुटिररुणनेत्रः पदन्यासैः क्ष्मां दलयंस्तं शैलं कम्पयन्भीतैर्द्वास्थैर्दत्तमार्गः सुग्रीवगेहं प्राप । कपीशस्तमायातं श्रुत्वाऽन्तःपुरान्निर्गत्य वेपमानवपुरुपतस्थे । लक्ष्मणो रुषा प्रोचे । कृतकृत्यः सुखं तिष्ठसि, न वेत्सि स्वामी तरुतलासीनोऽब्दप्रायान्दिनानत्येति ? प्रतिपन्नं व्यस्मार्षीः ? सीताप्रवृत्त्यै यतस्व । साहसगतेर्मार्गं मा गमः । सुग्रीवः पादयोः पतित्वाऽवोचत् । प्रसीद । एकं प्रमादं सहस्व । सौमित्रिं द्विधा पुरस्कृत्य रामं ननाम । स्वान्सैन्यान्सीताऽन्वेषणाय च प्रायुङ्क्त। ते सैन्या द्वीपेष्वद्रिषु नदीषु भूमिरन्ध्रेषु द्रुतं द्रुतं ययुः। भामण्डलोऽपि ज्ञातसीताहरणो दुःखितस्तत्राऽऽगात् । विराधोऽपि ससैन्यो रामं सिषेवे । सुग्रीवोऽपि स्वयं गच्छन्कम्बुद्वीपं ययौ । रत्नजटी दूरात् तं दृष्ट्वा दध्यौ । नूनं दशास्यो मद्विद्या हृत्वा मद्वधायैनं प्राहिणोत् । सुग्रीवस्तं प्रोचे । भो मां किं नाभ्युदस्थाः ? व्योमयाने किमलसोऽसि ? स कथितवृत्तो रामपादान्ते नीतो व्यजिज्ञपत् । देव ! रुदती देवी दशास्येन हृता, कुप्यतो मे विद्याश्च । रामो हृष्टस्तं सुरसंगीतपुरेशं रत्नजटिनमाश्लिषत् । रामो भूयोभूयः सीतो-

तया दूरस्थया
दन्तगृच्छत । सोऽपि भूयो भूयस्त्वत्प्रीत्यायाल्यच्च । रामः सुग्रीवादीन्पप्रच्छ । सा लङ्का कियति दूरे ? ते प्रोचुः । तया दूरस्थया ऽऽमघया किम् ? यद्वयं सर्वे रावणस्य तृणवत् । रामः माह तस्य जय्याजय्यचिन्तया अलम् । तं केवलं दर्शयत । सौमित्रिमुक्तेषुपीयमानकण्ठशोणितस्य तस्य सामर्थ्यं ज्ञास्यते । लक्ष्मणोऽप्याह । कोऽयं सारमेयवच्छली रावणः ! क्षत्राऽऽचारेण तस्य शिरश्छेत्स्ये । यूयं गगनादिकक्षणे सज्जीभवत । जाम्बवानूचे । सर्वं युष्मासु घटते, ज्ञानिनाऽनन्तवीर्यसाधुना प्रोक्तमस्ति कोटिशिलोद्धर्ता रावणहन्ता । सौमित्रिर्व्योमयानेन तत्र नीतस्तां दोष्णोदक्षेप्सीत् । त्रिदशाः पुष्पवर्षं चक्रुः । पुनस्ते जातप्रत्ययहृष्टोस्तां शिलामुत्पाटय । तः सौमित्रिर्व्योमयानेन तत्र नीतः । कपिवृद्धाः साहुः—युष्मत्तो रावणान्तः । नीतिस्त्वियम् । पूर्वं दूतः प्रेष्यः । सा प्रत्यया लक्ष्मणं किष्किन्धायां रामपार्श्वं निन्युः । समर्थः कोऽपि दूतः प्रेष्यताम् । स गत्वा विभीषणं नीतिमन्तं भणिष्यति । सोऽपि सीतामुक्तये पुरी दुष्प्रवेशानिष्कासा कृताऽस्ति । रामेणैवमनुमते सुग्रीवः श्रीभूतिं प्रेष्य हनुमन्तमाहृत । रामाय नमन्तं रावणं बोधयिष्यति । रावणेन त्ववज्ञातो दूतस्त्वामेष्यति । एनं सीताप्रवृत्त्या आदिशेति प्रशशंस । हनुमानप्याह । च हनुमन्तमयं विधुरे नः परमो बन्धुर्नास्य तुल्यो द्वितीयोऽस्ति । तत्प्रभो !
मत्प्राया अनेके कपयः सन्ति । सुग्रीवनृपस्त्वेवं स्नेहादाह ।

गयो गवाक्षो गवयः शरभो गन्धमादनः । नीलो द्विविदमैन्दौ च जाम्बवानङ्गदो नलः ॥२२॥

अन्येऽप्यत्र कपिपुङ्गवाः सन्ति । त्वत्कार्यसिद्धयेऽहमपि संख्यापूरणोऽस्मि ।

लङ्कां सराक्षसद्वीपामुत्पाट्येह किमानये ? । बद्ध्वा सबान्धवमथाऽऽनयामि दशकन्धरम् ॥२३॥

सकुटुम्बं दशग्रीवं हत्वा तत्रैव वा द्रुतम् । देवीं जनकजामेवाऽऽनयामि निरुपद्रवम् ॥२४॥

रामोऽप्याह त्वयि सर्वं सम्भाव्यते। गच्छ लङ्कायां सीतां गवेषयेः। इमां मदूर्मिकां देव्या अभिज्ञानमर्पयेः। तस्याश्चूडामणिं चात्र समानयेः। मद्वाचिकं च शंसेः। यद्रामस्त्वद्वियोगार्तस्त्वामेव ध्यायति। मद्विरहेण जीवितं मा त्याक्षीः। रावणं सौमित्रिणा हतमेव पश्य।

हनुमानपि प्रभो! यावत्त्वदाज्ञां विधायाऽऽयामि, तावदिहैव तिष्ठेरित्युक्त्वा सपरिच्छदो लङ्कां प्रति विमानेन प्रस्थितो महेन्द्रगिरिशिखरे मातामहमहेन्द्रस्य महेन्द्रपुरपत्तनं ददर्श। अनेन मे माताऽनपराधाऽपि निर्वासितेति ध्यात्वा क्रुद्धो रणतूर्यमवादयत्। महेन्द्रेऽपि ससैन्ये निर्गते मिथो युद्धं बभूव। हनुमान्परसैन्यान्क्षणेन बभञ्ज। माहेन्द्रिः प्रसन्नकीर्तिर्जामेयसम्बन्धमजानानो हनुमता युयुधे। हनुमान्दध्यौ। धिग्मया प्रभुकार्यविलम्बकृद्रणः प्रारेभे। ये क्षणाज्जीयन्ते तेऽन्ये। इदन्तु मन्मातृकुलम्। तथाऽप्यारब्धनिर्वाहाय जेतव्यमेव। इति ध्यात्वा प्रहारैर्भग्नास्त्ररथसारथिं माहेन्द्रिं जग्राह। तथा महेन्द्रमपि गृहीत्वा नत्वा तव नप्तांजनासुतोऽस्मि। रामाज्ञया सीताशुद्ध्यै लङ्कां गच्छन्मातृनिर्वासनं स्मृत्वा जातामर्ष एवं व्यधाम्, सहस्व। स्वामिकार्याय यामि। मत्स्वामिपार्श्वे व्रजेत्युवाच। महेन्द्रोऽप्याश्लिष्य तमवदत्। श्रुत्या श्रुतोऽभूः। दृष्ट्या दृष्टश्च। कुरु स्वामिकार्यमित्युक्त्वा ससैन्यः स्वयं रामं जगाम।

हनुमान्व्योम्ना गच्छन्दधिमुखाऽऽख्यद्वीपे कायोत्सर्गस्थौ मुनी, तयोरदूरे ध्यानस्थास्तिस्रः कन्यकाश्च ददर्श। तदा च दवसङ्कटे साधू कन्याश्च पेतुः। हनुमान्विद्यया सागराम्बुभिस्तं शमयामास। ताः कन्यास्तदैव सिद्धविद्या मुनी प्रदक्षिणीकृत्य हनुमन्तमूचिरे। परमार्हत! साधु साधु साधूनामुपसर्गमरक्षः। त्वत्सहायादस्माकं कालं विनाऽपि विद्याः सिद्धाः। का यूयमिति पृष्टास्ताः प्राहुः। अस्मिन्दधिमुखे पुरे गन्धर्वराजो राजाऽस्ति। तस्य कुसुममालाकुक्षिजा वयम्। बहवः खेचरा अस्मान्ययाचिरे। अङ्गारका-

स्त्वम् खेचरोऽस्मत्कृत उन्मत्तो बभूव। पिता तु नः कस्मैचिन्न ददौ। पित्रा च मुनिः पृष्टः, साहसगतेर्हन्तारं वरं व्याजहार। तातस्तं नोपलेभे। अस्माभिस्तं ज्ञातुं विद्यासाधनमारेभे। अङ्गारकेण विघ्नाय कृतो दवस्त्वयाऽशमि। या षड्भिर्मासैः सिध्यति सा मनोगामिनी विद्या त्वत्साहाय्यतः क्षणेनाऽसिध्यत्। हनूमान्नामकृतं साहसगतिवधं स्वस्य च लङ्कायां गमनं गदित्वोत्पपात। ताभ्यो ज्ञातवृत्तः पिता ताभिः सह ससैन्यो रामं जगाम। उपलङ्कं गतो हनूमान्दारुणयाऽऽशालिकया विद्यया बभाषे। अरे! कपे! क्व याता, मम भोज्योऽसि। तया व्यात्ते मुखे प्रविश्य तां विदार्य निर्गतो गदापाणिर्हनुमांस्तत्कृतं प्राकारं विद्यासामर्थ्यतो भङ्क्त्वा क्रुद्धं वज्रमुखाख्यं तद्रक्षाध्यक्षं युध्यन्तमवधीत्। तत्कन्यां लङ्कासुन्दरीं क्रुद्धां विद्याबलिनीं युध्यमानां निरस्त्रीचकार। साऽपि साश्चर्या तं पश्यन्ती कामशरहता प्रोवाच। मया पितृवधक्रुद्धयाऽविचार्य योधितोऽसि। साधुना मम पितृहन्तापतिराचख्ये। मामुद्वह। त्वया पत्या सर्वनारीषु गर्विता स्यास्यामि। स तां गान्धर्वविवाहेनोदुवाह। सूर्यास्तवर्णकः। तमः। चन्द्रोदयः। हनुमांस्तत्र लङ्कासुन्दर्या रात्रिमतीत्य सूर्योदये तामापृच्छ्य लङ्कां प्रविवेश। विभीषणगृहं गतः। तेन सत्कृत्यागमहेतुं पृष्टः प्राह। शुभोदर्कं विचिन्तयन् रावणात्सीतां मोचय। बलिनोऽपि त्वद्भ्रातुः काकुत्स्थपत्नीहरणमिहाऽपि दुःखाकृत्। विभीषणः प्राह। मयाऽग्रजोऽग्रेऽपि सीतां मोचयितुमुक्तः। भूयोऽपि सनिर्बन्धं प्रार्थयिष्ये।

हनुमांस्तत उत्प्लुत्य सीताऽऽश्रिते देवरमणोद्याने गतोऽशोकद्रुमूले गल्ललुलितालकां साश्रुं म्लानाननां कृशां रामरामेति ध्यायन्तीं देहेऽपि निरपेक्षां वैदेहीं ददर्श। दध्यौ च। महासतीयम्। अस्या दर्शनमात्रतः पावित्र्यं जायते। युक्तमस्या विरहे खिद्यते रामः। रूपवच्छीलवच्च कस्य कलत्रम्। दशास्योऽयं रामप्रतापेन पापेन च द्विधाऽपि निपतिष्यति। विद्यान्तर्हितः सीताङ्केऽङ्गुलीयक-

सप्तमे पर्वणि षष्ठः सर्गः

मपातयत्। सा तद् दृष्ट्वा जहर्ष। त्रिजटा तदैव गत्वा दशास्याय शशंस। सीता इयत्कालं विषण्णाऽऽसीत्। साम्प्रतं तु साऽऽनन्दा।
रावणो मन्दोदरीमूचे। मन्येऽसौ विस्मृतरामा मयि रिरंसुस्तद्गत्वा बोध्यताम्। साऽपि गत्वा सीतामवोचत। दशास्योऽद्वैतैश्वर्य-
स्त्वमपि रूपेणाऽप्रतिरूपा, उचितो योगोऽस्तु। अहमन्याश्च तत्पत्न्यस्त्वद् दास्यः। सीता तां ततर्ज। आः पापे त्वन्मुखं न वीक्षे।
मां रामस्य पार्श्वे विद्धि। लक्ष्मणं च सबान्धवं तव धवं हन्तुमागतमेव च बुध्यस्व। उत्तिष्ठ, उत्तिष्ठ। अतः परं त्वया न वच्मीति।
सा सकोपा प्रययौ।

हनुमान्प्रादुर्भूय नत्वा बद्धाञ्जलिर्जजल्प। रामः सलक्ष्मणो जयति। त्वत्प्रवृत्त्यै तदादिष्टोऽहमागमम्। मयि तत्र गते रामो रि-
पूच्छिदेऽत्रैष्यति। सबाष्पा सीता प्राह। कस्त्वं? कथं वार्धिमलङ्घयः? मत्प्राणेशः सानुजो जीवति? क्व दृष्टः? कथं कालं नयति?
हनुमानाचख्यौ। पवनाञ्जनासुतोऽहं विद्यया व्योमयानेनाब्धिमलङ्घयम्। रामः समस्तकपीशं वैरिविघात्सुग्रीवं पत्तीकृत्याधिकिष्किन्धं
त्वद्वियोगाग्निनाऽहर्निशं तप्यते। गोवियुक्तो वत्स इव लक्ष्मणोऽपि न सौख्यं लभते। तौ क्षणं सशोकौ क्षणं सक्रोधौ सुग्रीवेणाश्वा-
स्येते। भामण्डलविराधमहेन्द्राद्यैः पत्तिभूतैरुपास्येते। रामेण सुग्रीवदर्शितोऽहं स्वाङ्गुलीयं समर्प्य त्वत्प्रवृत्त्यै प्रेषितः। त्वत्तश्चूडामणि-
रभिज्ञानमानायितोऽस्मि। तद्दर्शनात्प्रभुर्मामत्राऽऽयातं प्रत्येष्यति। सा हनुमदाग्रहेण रामोदन्तमुदा चैकत्रिंशतिदिनप्रान्तेऽभुक्त, ऊचे
च। इमं चूडामणिमभिज्ञानं गृहीत्वा गच्छ। अत्र तिष्ठत उपद्रवः स्यात्। त्वामागतं ज्ञात्वाऽयं राक्षसस्त्वां हन्तुमेष्यति। सोऽपि
स्मित्वा प्रोचे। मातर्वात्सल्यात्कातराऽसि। अहं राघवयोर्जगज्जैत्रयोः पत्तिः। ममाग्रे कोऽयं वराको रावणः। त्वामपि स्कन्धमारोप्य
ससैन्यं रावणं परिभूय स्वामिनोऽन्तिके नयामि। सीताऽपि सस्मितमाह। स्वं स्वामिनं न ह्रेपयसि। रामसौमित्र्योः पत्तौ सर्वं

॥३०॥

सम्भाव्यते। पर परपुंस्पर्शो मेऽनर्हस्तच्छीघ्रं गच्छ। त्वयि गते आर्यपुत्र उद्योगं कर्ता। हनुमानाह। गच्छाम्येषः। रक्षसां तु किञ्चिद्विक्रमचापलं दर्शयिष्ये। जितकाशी एवं परवीर्यं न मन्यते। रामपत्तेरपि पौरुषं वेत्तु। सीताऽऽमेत्युक्त्वा स्वं चूडामणिं ददौ।

सोऽपि नत्वा प्रस्थितो देवरमणोद्यानं भङ्क्तुमारेभे। तदुद्यानद्वारचतुष्कद्वाःस्था मुद्गरकरास्तं हन्तुमधावन्त। तेषां प्रहरणानि हनुमत्यस्खलन्। पावनिः कुपितस्तैरेवोद्यानपादपैः प्रजहार। रक्षोभिरुक्तवृत्तो रावणस्तद्वधाय ससैन्यमक्षकुमारमादिक्षत्। रणादौ दिष्ट्याऽऽपन्न इति वदन् हनुमान्, वृथा कपे गर्जसीति गदित्वा विशिखैर्वर्षन्तं तं चिरं योधयित्वा जघान। भ्रातृवधकोपादिन्द्रजित्समागत्य मारुते! तिष्ठ तिष्ठेति वदन् युध्यमानो हनुमत्प्रहतान्स्वभटान्पश्यतो दृष्ट्वा मोघीकृताऽस्त्रो नागपाशास्त्रं मारुतये मुमोच। आपादमस्तकं नागपाशैर्बद्धो हनुमान्कौतुकात्क्षणं बन्धं सहमानो हृष्टेनेन्द्रजिता रावणान्तिकं नीतस्तेनोचे। दुर्मते! त्वया तौ किमाश्रितौ वनेचरौ फलाहारौ मलिनवाससौ, तुष्टौ तुभ्यं किं दास्यतः। तद्वाचाऽत्र किमागमः। तौ तु धूर्तौ यकाभ्यामिदं कारितोऽसि। धूर्ताः परहस्तेनाङ्गारान्कर्षयन्ति। पूर्वं मत्सेवकोऽद्य परस्य दूतस्तेनाऽवध्योऽसि शिक्षामात्रन्तु विडम्ब्यसे। हनुमानुवाच। कदाऽहं त्वत्सेवकः। कदा च त्वं मे स्वामी एवं वदन्न लज्जसे। एकदा मत्पित्रा त्वन्मैत्र्या त्वत्सामन्तः खरो वरुणबन्धादमोचि। त्वया साहाय्यायाहूतोऽहमप्यागमम्। वरुणसुतेभ्यश्च त्वां सङ्कटेऽरक्षम्। अद्य पाप्मा त्वं साहाय्याय न योग्योऽसि। त्वदीये तं नेक्षे। यः सौमित्रेरपि त्वां त्रास्यते। तदग्रजो दूरं तिष्ठतु। रावणो भालाहितभ्रुकुटिरोष्ठं दशन्नवदत्। मुमूर्षुरसि। यदरिश्रितोऽसि। मां चारीचकर्थ। पुनर्दूतत्वान्न हन्यसे। खरे आरोप्य पञ्चशिखीकृत्य चाधुना लङ्कायां प्रतिपथं भ्राम्यसे। हनुमान्क्रुद्धः पाशपन्नगांस्त्रोटयित्वोत्पत्य पादघातेन रावणकिरीटं चूर्णीकृत्य हन्यतां गृह्यतां चप इति रावणे जल्पत्येव पाददर्दरैरनाथामिव पुरीं भङ्क्त्वोत्पत्य राममेत्य नत्वा

सीताचूडारत्नमार्पयत् । रामस्तं सीताचूडामणिं साक्षात्सीतामिव हृद्यारोपयामास । रामेण सुतवदालिङ्ग्य पृष्टो मारुतिस्तां दशास्यावमाननां सीताशुद्धिं च शशंस ।

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्ठिशलाकापुरुषचरिते गद्यबन्धे सप्तमे पर्वणि सीताप्रवृत्त्यानयनो नाम षष्ठः सर्गः ॥

## ॥ अथ सप्तमः सर्गः ॥

रामः सानुजः सुग्रीवाद्यैर्वृतो लङ्काविजययात्रायै व्योम्ना प्रतस्थे ।

**भामण्डलो नलो नीलो महेन्द्रः पावनञ्जयिः । विराधश्च सुषेणश्च जाम्बवानङ्गदोऽपि च ॥३८॥**

अन्येऽपि कोटिशः खेचरेशाश्चेलुः । सा सेना नानातूर्यैः शब्दाद्वैतं रचयन्ती वार्धेरुपरि विचित्रैर्विमानै रथैरश्वैर्गजैरन्यैश्च वाहनैः खे चचार । वेलन्धराद्रौ वेलन्धरपुरे समुद्रसेतुनृपौ युध्यमानौ नलनीलाभ्यां बद्ध्वा रामान्तिके नीतौ । रामेण पुनस्तथैव स्थापितौ च । समुद्रो रामानुजाय तिस्रः स्वकन्या ददौ । निशां तत्रोषित्वा सेतुसमुद्रानुगतो रामः प्रातः प्रस्थितः क्षणात्सुवेलाद्रिं प्राप्य सुवेलनृपं जित्वा निशामुषित्वा पुनः प्रातश्चचाल । उपलङ्कं हंसद्वीपे हंसरथनृपं जित्वा तत्रैव कृतावासस्तस्थौ ।

लङ्का चुक्षोभ । रावणस्य हस्तप्रहस्तमारिचसारणाद्याः सहस्रशः सामन्ताः समनह्यन्त । रणतूर्याणि कोटिशोऽवाद्यन्त । विभीषणो

रावणमभ्येत्य नत्वोचे। प्रसीद। शुभोदर्कं मद्वचो विमृश। लोकद्वयविरुद्धं त्वया परदारहरणं यच्चक्रे तेन कुलं लज्जितम्। काकुत्स्थो-
ऽयं स्वकान्तामानेतुमुपस्थितः। अस्मै तद्दारार्पणमेवातिथ्यं विधेहि। अन्यथा त्वत्कुलं निग्रहीष्यति। भार्यां ग्रहीष्यति। राघवौ साह-
सखरान्तकौ दूरं स्ताम्। तत्पत्तिर्हनुमान् किं न दृष्टः। सीताहेतोरिन्द्रश्रियोऽधिकां श्रियं मा त्याक्षीः। इन्द्रजिदूचे। त्वयाऽऽजन्म-
भीरुणा सर्वं नः कुलं दूषितम्। तातस्य सोदरो नासि। इन्द्रस्यापि जेतारं तातमेवं सम्भावयन्नूनं मुमूर्षसि। त्वयाऽनृतभाषिणा
पुराऽपि तातश्छलितः। यद्दशरथवधं प्रतिज्ञाय नाकृथाः। इहाऽऽयातं च तत्सुतं भयमुत्पाद्य तातादिरक्षिपसि। रामगृह्योऽसि। न
मन्त्रेऽनधिकारी। विभीषणः प्राह। नाऽहं शत्रुगृह्यः त्वं तु सुतरूपो रिपुरुत्पन्नः। अयं तावत्त्वत्पिता कामैश्वर्याभ्यामन्धः। त्वन्तु जन्मा-
न्ध इव। राजन्ननेन पुत्रेण स्ववृत्तेन चाचिरात्पतिष्यसि। त्वत्कृते मुधा ताम्यामि।

रावणेऽसिमादाय वधायोत्थिते विभीषणो भ्रुकुटिभीष्मः स्तम्भमुत्पाट्य योद्धुमुत्तस्थौ। कुम्भकर्णेन्द्रजिद्भ्यां निवार्य स्वं स्वं स्थानं
नीतौ। अरे कुलाङ्गार। मत्पुर्या निर्याहीति रावणेनोक्तो विभीषणो रामं ययौ। रक्षोविद्याधराणां त्रिंशदक्षौहिण्यो विभीषणमनु-
जग्मुः। तमाऽऽयान्तं दृष्ट्वा सुग्रीवाऽऽद्याश्चुक्षुभुः। स पूर्वं पुरुषप्रेषणेन रामाय स्वं न्यवेदयत्। रामेणेक्षितमुखः सुग्रीवोऽवदत्। यद्यपि
राक्षसाः प्रकृत्या क्षुद्रा मायिनस्तथाप्ययमायातु। भावं ज्ञात्वा यथोचितं विधास्यामः। विशालः खेचरोऽभिदधे राक्षसेष्वेकोऽयं धार्मिकः।
सीतामुक्त्यै जल्पन्नधुना न्यत्कृतस्त्वामागात्। रामाज्ञया द्वाःस्थेन प्रवेशितः। पादयोः क्षिप्तमूर्द्धा रामेण परिरब्धो विभीषणः प्राह।
दुर्नयमग्रजं त्यक्त्वा त्वामायाम्। मां भक्तं सुग्रीववदादिश। रामस्तस्मै लङ्काराज्यं प्रतिपेदे। हंसद्वीपेऽष्टाहान्यतिवाह्य लङ्कां प्रति
प्रचाल। विंशतियोजनीं चम्वा रुद्ध्वा युद्धाय सज्जः सेनाकलकलेन लङ्कां बधिरयंस्तस्थौ।

प्रहस्ताद्या दशास्यसेनान्यः समवर्मयन् । केचिन्मतङ्गजवाह्यैरपरे वाहवाहनैः, केचिच्छार्दूलवाह्यैः, परे खरवाह्यै रथैः, केचिन्नरैः, केचिन्मेषैः, केचिन्महिषैः, केचित्तुरगैः, केचिद्विमानैरुत्पत्य वीरा दशास्यं वव्रुः । दशास्यो रोषारुणाक्षो नानाऽस्त्रं स्यन्दनमध्यास्त । भानुकर्णः शूलपाणिर्दशास्यपार्श्वे तस्थौ । इन्द्रजिन्मेघवाहनौ कुमारौ पार्श्वस्थावभूताम् । अन्येऽपि दोष्मन्तः सुताः कोटिशः शुकसारणमारिचमयसुन्दादयः सामन्ता अभ्येयुः । अक्षौहिणीनामसङ्ख्यैः सहस्रैर्वृतो दशास्यः पुर्याः प्रचचाल । तत्र वीराः शार्दूलशरभचमूरुकरटिकेकिकुण्डलिकुक्कुटादिकेतवः कोदण्डकुन्तकुठारखड्गभुशुण्डीमुद्गरपरिघादिपाणयो रणाय विचेरुः । रावणः पञ्चाशद्योजनानि सेनया भुवं प्रच्छाद्य तस्थौ ।

गच्छ गच्छ तिष्ठ तिष्ठ मा भैषीरुत्सृजाऽऽयुधम् । कुरुष्वाऽऽयुधमित्याजौ भटानां तत्र वागभूत् ॥२६॥

तत्र महारणे चिराद्वानरै रक्षोबले भग्ने हस्तप्रहस्तौ योद्धुमुत्तस्थतुः । तौ नलनीलाभ्यां चिरं योधयित्वा यमातिथी चक्राते । नलनीलयोरुपरि पुष्पवृष्टिः । ततो मारीचसारणशुकज्वरकामाक्षाद्या राक्षसा मदनाङ्कुरसन्तापप्रथिताद्यैः कपिभिरयुध्यन्त । मारीचराक्षसः सन्तापं, नन्दकपिर्ज्वरम् , उद्दामराक्षसो विघ्नं, दुरितकपिः शुकं, सिंहजघनराक्षसः प्रथितं योधयित्वा जघ्नुः । सूर्येऽस्तं गते सर्वे निवृत्य स्वान् हताहतान्शोधयन्तोऽस्थुः ।

निशान्ते रावणः स्वयं नानास्त्रधरो रिपूंस्तृणाय मन्यमानः स्वसेनान्यं प्रत्येकमिन्द्रवत्पश्यन् रणाजिरमियाय । राघवसेनान्योऽपि शूरैः सविस्मयमीक्षमाणा ढुढौकिरे । रावणहुंकारप्रेरितैः राक्षसैः सर्वाभिसारेण योधयद्भिः कपिसैन्या अभज्यन्त । क्रुद्धं सुग्रीवं प्रस्थितं निवार्य हनुमात्रक्षःसैन्यं जगाहे । माली धनुस्तूणमाली हनुमतेऽढौकत् । मिथस्तौ प्रजह्राते । अस्त्राणि चिच्छिदाते । हनुमां-

चिरं युद्ध्वा तं नीरथं विधाय जगद्भुस्त्वया हतेन किं गच्छ गच्छेति वदन् वज्रोदरेणोचे। एह्येहि। युध्यस्व सम्प्रति। न भवसि। मा गाः। हनुमांस्तच्छ्रुत्वा तं शरैश्छादयामास। सोऽपि तच्छरवृष्टिं निर्धूय तं बाणैरतिरयत्। देवेषु द्वयोः कलिकेलिं पश्यत्सु स्तुवत्सु श्रीशैलो वज्रोदरं जघान। तद्वधक्रुद्धो रावणाङ्गजो जम्बुमाली हनुमन्तमाहूय युध्यमानस्तेन विरथिनाऽरथसारथीकृतो मुद्गरेण ताडितो मूर्च्छितः पपात। महोदराद्या राक्षसभटाः क्रुधा प्रहरन्तो हनूमता केऽपि दोष्णोः, केऽपि मुखे, केऽपि पदोः, हृदि, कुक्षौ, शरीरेऽपि। रक्षोमद्गृहुद्धः कुम्भकर्णः कांश्चिदङ्घ्रिप्रहारेण, कांश्चिन्मुष्टिकूर्परमुद्गरशूलघातेन कांश्चिदन्योन्यघातेन कपीन् निघ्नन्योद्धुं दधावे। तमायान्तं कल्पान्ताग्निनिभं वीक्ष्य सुग्रीवोऽधावत। भामण्डलदधिमुखमहेन्द्रकुमुदाङ्गदाद्या अन्येऽप्यन्वधावन्त। तन्मुक्तप्रस्वापनास्त्रयत्नेन निद्रायमाणं स्वसैन्यं वीक्ष्य सुग्रीवः प्रबोधिनीविद्यास्मृत्या प्रत्यबोधयत्। सुग्रीवाधिष्ठिताः कपयः कुम्भकर्णं शरैरुपद्रुद्रुवुः। सुग्रीवो गदया तस्य रथस्य सारथिमदलयत्। स भूमिष्ठो मुद्गरकरः सुग्रीवाय धावञ्जङ्घावातेनैव भूयसः कपीनपातयत्। तैः कपिभिरस्खलितो मुद्गरेण सुग्रीवरथमचूर्णयत्। सुग्रीवेण वियत्युत्पत्य महतीं मुक्तां शिलां मुद्गरेण कणशश्चकार। ततः सुग्रीवमुक्तेन तडिच्चटिति कुर्वता तडिद्दण्डास्त्रेण शस्त्रैरस्खलितेन ताडितो मुमूर्च्छ। भ्रातृमूर्च्छया क्रुद्धं दशास्यं स्वयं प्रस्थितमिन्द्रजित्सविनयं निवार्य कपिसैन्यं विवेश। स त्रस्यतः कपीनूचे। रे रे तिष्ठत। अयुध्यमानान्न हन्मि। रावणस्याङ्गजोऽहम्। क्व मारुतिः क्व सुग्रीवो यदि वा ताभ्यामप्यलम्। राघवौ मानिनौ क्व? सुग्रीवस्तं युद्धायाऽऽह्वत भामण्डलोऽपि तदनुजं मेघवाहनमायोधयत्। तेषु चतुर्ष्वन्योऽन्यमास्फालत्सु भूश्चकम्पे। वार्धिश्चुक्षोभ। बाणाकर्षणमोक्षयोरन्तरं नाबोधि। आयासैर्दैवतैश्चास्त्रैश्चिरं युद्धे प्रवृत्तेऽपि कस्याऽपि जयो नाऽभूत्। इन्द्रजिन्मेघवाहनौ नागपाशास्त्रं मुमुचतुः। सुग्रीवभामण्डलौ नागपाशैर्बद्धौ निःश्वसितुमप्यसमर्थौ जातौ।

इतश्च लब्धसंज्ञेन कुम्भकर्णेन रोषाद्गदया हतो मारुतिर्मूर्च्छितो दोष्णा समुद्धृत्य कक्षान्तर्न्यधायि। विभीषणो राममूचे। त्वत्सैन्यसारभूतौ सुग्रीवभामण्डलौ रावणिभ्यां यावल्लङ्कां न नीयेते तावन्मोचयामि। मारुतिरपि कुम्भकर्णेन दोष्णा बद्धो लङ्कामप्राप्त एव मोचनीयः। स्वामीन्सुग्रीवादींस्त्रीन् विना नः सैन्यमवीरमिव। अनुमन्यस्व। यामि। एवं तस्मिन्जल्पत्येवाऽङ्गदो गत्वा कुम्भकर्णमाक्षिप्य यो ामास। क्रोधान्ध्यात्कुम्भकर्णे प्रोत्क्षिप्तभुजपाशे मारुतिरुत्पत्य ययौ। विभीषणो वैदेहसुग्रीवौ मोचयितुं रावणिभ्यां योद्धुं दधावे। रावणी दध्यतुः। पितुरनुजेन पूज्येन सह कथं योद्धव्यम्। पूज्याद् बिभ्यतां न ह्रीः। इमौ च पाशबद्धावरी नूनं मरिष्यतः। तदिहैवासाताम्। तातो यथा नौ नान्वेति। एवं ध्यात्वा रावणी नेशतुः विभीषणश्च वैदेहसुग्रीवौ पश्यंस्तस्थौ। राघवौ चिन्ताम्लानमुखौ तस्थतुः। रामो महालोचनाऽऽख्यं सुपर्णामरं पूर्वप्रतिपन्नवरं सस्मार। स आगत्य पद्माय सिंहनिनादाख्यां विद्यां, मुशलं, स्यन्दनं, हलं ददौ। लक्ष्मणाय गारुडीं विद्यां, स्यन्दनं, विद्युद्वदनां च रिपुनाशिनीं गदां ददौ। वारुणाग्नेयवायव्यादीनि दिव्यास्त्राणि छत्रे चोभयोरपि वितीर्णवान्। सौमित्रेर्वाहनीभूतं गरुडं प्रेक्ष्य क्षणात्ते पाशपन्नगाः प्रणेशुः। रामसैन्ये जयजयारावोऽजनि। सूर्योऽस्तं ययौ।

प्रातर्भूयोऽपि द्वयोः सैन्ययोर्महारणो बभूव। रक्षोभिः कपिचम्वां क्षुब्धायां सुग्रीवाद्या रक्षोऽनीकेषु विविशुः। तैराक्रान्ता राक्षसास्त्रेसुः। रावणे क्रुद्धे स्वयं धावति। कपिवीरेषु कोऽपि नाऽग्रे तस्थौ। तद्युधे चलितं रामं निषेध्य विभीषणः स्वयं रावणं रुरोध। रावणस्तं जगौ। रे कं श्रितोऽसि। येन क्रुद्धस्य ममाऽऽजौ कवलवन्मुखे क्षिप्तः। रामेणाऽऽत्मानं रक्षता त्वां प्रहिण्वता साधु मन्त्रितम्। वत्स! मम वात्सल्यमद्यापि त्वय्यस्ति। तद्गच्छ। एतौ रामसौमित्री ससैन्यावद्य हनिष्यामि। त्वममीषां वध्यमानानां संख्यापूरणो

मा भूः । स्वस्थानमेहि । तव पृष्ठेऽयं हस्तः । विभीषणः प्राह । रामः क्रुद्धस्त्वां प्रति चलन्मया छलान्न्यषेधि । युद्धव्याजात्त्वां बोधयितुमागाम् । अद्यापि सीता मुच्यताम् । प्रसीद । मद्वचः कुरु । नाऽहं मृत्युभयान्नवा राज्यलोभेन राममगाम् । किन्तु निर्वादभयात् । अद्यापि सीताऽर्पणेन निर्वादं शमय । यथा भूयोऽपि तं त्यक्त्वा त्वां भजे । क्रुद्धो रावणः प्राह । रे दुर्बुद्धे ! अद्यापि विभीषिकां दर्शयसि ? भ्रातृहत्याभयादेव मुच्यसे । नान्यहेतुनेत्युक्त्वा धनुरास्फालयत् । विभीषणोऽपि भ्रातृहत्याभयादुक्तोसीत्याद्युक्त्वा चापमास्फालयामास । तौ भ्रातरौ योद्धुं प्रवृत्ताते । इन्द्रजित्कुम्भकर्णाद्या राक्षसाः स्वामिभक्त्याऽभ्यधावन्त । रामः कुम्भकर्णं, लक्ष्मण इन्द्रजित, नीलः सिंहजघन, दुर्मर्षो घटोदर, स्वयंभूर्दुर्मतिं, नलः शम्भुमङ्गदो मयं, स्कन्दश्चन्द्रणखं, विराधो विघ्नं, भामण्डलः केतुं, श्रीदत्तो जम्बुमालिनं, मारुतिः कुम्भकर्णात्मजं कुम्भं, किष्किन्धेशः सुमालं, कुन्दो धूमाक्षं, वालिसुश्चन्द्ररश्मिः सारणं, परे कपयः पराणि रक्षांस्यरौत्सुः । एवं युद्धे वर्तमाने इन्द्रजिन्मुक्तं तामसास्त्रं सौमित्रीस्तपनास्त्रेण न्यवारयत् । नागपाशास्त्रं च मुमोच । तेनाऽऽबध्यमानसर्वाङ्गः शक्रजिन्निपपात । विराधो लक्ष्मणाज्ञया स्वरथाङ्के क्षिप्त्वा तं स्वशिबिरे निनाय । रामः कुम्भकर्णं नागपाशैर्बबन्ध । भामण्डलस्तं रामाज्ञया शिबिरेऽनैषीत् । एवमन्येऽपि मेघवाहनाद्या रामस्य सैनिकैर्बद्ध्वा स्वशिबिरे निन्यिरे । दशास्यस्तद् दृष्ट्वा क्रुद्धोऽप्याकुलो विभीषणाय शूलं चिक्षेप । सौमित्रिणा तस्मिन्नन्तरालेऽपि शितैः शरैः कणशः कृते धरणेन्द्रदत्ताममोघविजयाऽऽख्यां महाशक्तिमुद्धृत्य खेऽभ्रमयत् । तां धगद्धगिति ज्वलन्तीं तडित्तडिति नादिनीं वीक्ष्य सुराः खेऽपसस्रुः । सैन्यानि दृशममीलयन् । रामोऽनुजमाह । आगन्तुरयं विभीषणो हन्यते । आश्रितघातिनोऽस्मान् धिगिति । सौमित्रिस्तच्छ्रुत्वा दशास्यमाक्षिपन् विभीषणाग्रे तस्थौ । रावणस्तं गरुडस्थं पुरः प्रेक्ष्योवाच । न तुभ्यं शक्तिरुत्क्षिप्ता । परमृत्युना मा मृथाः । यदि वा म्रियस्व, यतो भवानेव मार्यः ।

त्वत्पदे ह्ययं वराको विभीषणो ममाग्रेऽस्थात् । इत्युक्त्वा तां सौमित्रये मुमोच । सौमित्रिः सुग्रीवः श्रीशैलो नलो भामण्डलो विराधोऽन्येऽपि स्वैः स्वैरस्त्रैस्तामघ्नन् । सा तदस्त्रौघमवज्ञाय लक्ष्मणोरःस्थले पपात । तया भिन्नो लक्ष्मणो मुमूर्च्छ । तत्सैन्ये च हाहारवोऽभूत् । क्रुद्धो रामो रावणमयोधयत् । स पञ्चाननरथस्तं द्विषं पञ्चकृत्वो विरथीकृतवान् । दशास्यो दध्यौ । भ्रातृस्नेहादयं स्वयं मर्ता । तत्किमनेन योधितेनेति । रावणो लङ्कां सूर्यश्चास्ताद्रिं प्राप ।

रामो निवृत्तः सौमित्रिं भूपतितं दृष्ट्वा मूर्च्छितः पपात । सुग्रीवादिभिः प्रापितचैतन्यो लक्ष्मणान्तिके निपद्य रुदन्नवादीत् । वत्स ! किं बाधते ? ब्रूहि । संज्ञया वा वद । सुग्रीवाद्यास्त्वन्मुखमीक्षन्ते । वाचा, दृशा वाऽमून् किं नाऽनुगृह्णासि ? रावणो जीवन्नगादिति ह्रिया नूनं न वक्षि । रेरे रावण ! दुष्टात्मन् ! तिष्ठ तिष्ठ, क्व यास्यसीत्याद्युक्त्वा धनुरास्फाल्योत्तिष्ठन्कपीशेन सविनयं बभाषे । प्रभो निशेयम्, । रावणो लङ्कां ययौ । अस्मत्स्वामी चैष शक्तिघातविधुरः । धैर्यं धेहि । हत एव रावणः । सौमित्रेरेव प्रतिजागरणोपायं चिन्तय । भूयो रामोऽभ्यधात् । भार्या हृता । अनुजो हतः, रामोऽयमद्यापि तिष्ठति, शतधा न विदीर्यते । सखे सुग्रीव ! श्रीशैल ! भामण्डल ! नल ! अङ्गद ! विराधाद्याश्च सर्वेऽपि स्वौको यात । सखे विभीषण ! त्वं न कृतार्थितोऽसि । तत्सीतापहाराद्भ्रातृवधादप्यधिकं शुचेऽभूः । परं प्रातः पश्येः । त्वां दशास्यवधात्कृतार्थीकृत्य लक्ष्मणमनुयास्यामि । अमुं हि विना किं मम सीतया जीवितव्येन वा । विभीषणोऽभाषिष्ट । अधैर्यं त्यज । शक्त्या हतोऽपि रात्रिं जीवति । तन्मन्त्रतन्त्रादिना प्रतीकाराय यत्यताम् । आमेति रामेणोक्ते सुग्रीवाद्या विद्यया राघवस्य परितश्चतुर्द्वारान्सप्तवप्रान्व्यधुः ।

प्राच्यां द्वारेषु तत्राऽस्थुः सुग्रीवः पावनञ्जयिः । तारः कुन्दो दधिमुखो गवाक्षो गवयः क्रमात् ॥३७॥

उदीच्यामङ्गदः कूर्मोऽङ्गो महेन्द्रो विहद्गमः। सुषेणश्चन्द्ररश्मिश्च द्वारेष्वस्थुः क्रमादमी ॥३८॥
प्रतीच्यां नीलसमरशीलदुर्धरमन्मथाः। जयश्च विजयश्चैव सम्भवश्चावतस्थिरे ॥३९॥
भामण्डलो विराधश्च गजो भुवनजिन्नलः। मैन्दो विभीषणश्चास्थुर्दक्षिणस्यां क्रमादमी ॥४०॥
एवं सुग्रीवाद्या काकुत्स्थौ मध्ये कृत्वा प्रजागरपरास्तस्थुः।

इतश्च कश्चित्सीताया जगाद। सौमित्रिः शक्त्या हतः प्रातर्विपत्स्यते स्नेहाच्च रामोऽपि। तच्छ्रुत्वा मूर्च्छया पतिता सीता खेचरीभिः प्राप्तचेतन्या करुणं विललाप। हा वत्स! ज्येष्ठं मुक्त्वा क्वाऽगाः। त्वां विना क्षणमपि नायं स्थातुं क्षमः। मां मन्दभाग्यां धिक्। यत्कृते पतिदेवरयोरीदृगापतितम्। पृथ्वि! प्रसीद। मत्प्रवेशाय द्विधा भवेत्यादि। काऽपि कृपालुः खेचरी तां तथा दृष्ट्वाऽवलोकिन्याऽवलोक्याऽब्रवीत्। देवि! त्वद्देवरः प्रातरक्षताङ्गो भविता। रामेण च सहैत्य त्वामानन्दयिष्यति। तच्छ्रुत्वा सीता स्वास्थ्यं भेजे। रावणः सौमित्रिर्मारितोऽद्येति क्षणं जहर्ष। भ्रातृपुत्रमित्रबन्धं च स्मृत्वा रुरोद। हा कुम्भकर्ण! हा इन्द्रजिन्मेघवाहनौ! हा वत्सा जाम्बुमाल्याद्याः! कां दशां प्राप्ताः स्थेत्यादि।

इतश्च रामसैन्ये कोऽपि खेचर आगत्य दक्षिणवप्रद्वाररक्षकं भामण्डलं जगौ। पद्मपादान्दर्शय मे। सौमित्रिजीवातुं वच्मि। भामण्डलेन पद्मोपान्तं नीतो नत्वा व्यजिज्ञपत्। संगीतपुरेशशशिमण्डलनृपात्मजः सुप्रभाकुक्षिभूः प्रतिचन्द्रोऽहम्। सकलत्रः खे व्रजन् सहस्रविजयवैरिचरेण मैथुनिकावैरायोधितः। शक्त्याऽऽहत्य पातितः। साकेतपुर्यां महेन्द्रोदयोद्याने भूलुठितो भवद्भ्रात्रा भरतेन दृष्ट्वा गन्धाम्बुसेकेन निःशल्यो व्यधायि। सद्यो रूढप्रहारोऽहं गन्धाम्बुमाहात्म्यं तवानुजमपृच्छम्। भरतः प्राह। गजपुरादागतस्य वि-

त्वत्पदे एयं वराको विभीषणो ममाग्रेऽस्थात् । इत्युक्त्वा तां सौमित्रये मुमोच । सौमित्रिः सुग्रीवः श्रीशैलो नलो भामण्डलो विरा-
घोऽन्येऽपि सर्वः स्वैरस्त्रैस्तामघ्नन् । सा तदस्त्रौघमवज्ञाय लक्ष्मणोरःस्थले पपात । तया भिन्नो लक्ष्मणो मुमूर्च्छ । तत्सैन्ये च हाहारवो
ऽभूत् । क्रुद्धो रामो रावणमयोधयत् । स पञ्चाननरथस्तं द्विपं पञ्चकृत्वो विरथीकृतवान् । दशास्यो दध्यौ । भ्रातृस्नेहादयं स्वयं मर्ता ।
तत्किमनेन योधितेनेति । रावणो लङ्कां सूर्यश्चास्ताद्रिं प्राप ।

रामो निवृत्तः सौमित्रिं भूपतितं दृष्ट्वा मूर्च्छितः पपात । सुग्रीवादिभिः प्रापितचैतन्यो लक्ष्मणान्तिके निपद्य रुदन्नवादीत् ।
वत्स ! किं बाधते ? ब्रूहि । संज्ञया वा वद । सुग्रीवाद्यास्त्वन्मुखमीक्षन्ते । वाचा, दृशा वाऽमून् किं नाऽनुगृह्णासि ? रावणो जीवन्नगा-
दिति ह्रिया नूनं न वक्षि । रेरे रावण ! दुष्टात्मन् ! तिष्ठ तिष्ठ, क्व यास्यसीत्याद्युक्त्वा धनुरास्फाल्योत्तिष्ठन्कपीशेन सविनयं बभाषे ।
प्रभो निशेयम्, । रावणो लङ्कां ययौ । अस्मत्स्वामी चैष शक्तिघातविधुरः । धैर्यं धेहि । हत एव रावणः । सौमित्रेरेव प्रतिजागरणो-
पायं चिन्तय । भूयो रामोऽभ्यधात् । भार्या हृता । अनुजो हतः, रामोऽयमद्यापि तिष्ठति, शतधा न विदीर्यते । सखे सुग्रीव !
श्रीशैल ! भामण्डल ! नल ! अङ्गद ! विराधाद्याश्च सर्वेऽपि स्वौको यात । सखे विभीषण ! त्वं न कृतार्थितोऽसि । तत्सीतापहारा-
द्भ्रातृवधादप्यधिकं शुचेऽभूः । परं प्रातः पश्येः । त्वां दशास्यवधात्कृतार्थीकृत्य लक्ष्मणमनुयास्यामि । अमुं हि विना किं मम सी-
तया जीवितव्येन वा । विभीषणोऽभाषिष्ट । अधैर्यं त्यज । शक्त्या हतोऽपि रात्रिं जीवति । तन्मन्त्रतन्त्रादिना प्रतीकाराय यत्यताम् ।
आमेति रामेणोक्ते सुग्रीवाद्या विद्यया राघवस्य परितश्चतुर्द्वारान्सप्तवप्रान्व्यधुः ।

प्राच्यां द्वारेषु तत्राऽस्थुः सुग्रीवः पावनञ्जयिः । तारः कुन्दो दधिमुखो गवाक्षो गवयः क्रमात् ॥३७॥

यितुमारेभे । मन्दोदरी यमदण्डं द्वाःस्थं जजल्प । सर्वोऽपि पूर्जनोऽष्टाहानि जिनधर्मरतोऽस्तु, अन्यथा वधात्मको दण्ड इति ल-ङ्कायामाघोषय । स तथा चक्रे । सुग्रीवस्तच्चैरैर्ज्ञात्वा यावद्बहुरूपिणीं विद्यां न साधयति तावत्साध्योऽयमिति रामं व्यज्ञपयत् । पद्मोऽपि स्मित्वोचे । शान्तं ध्यानस्थं तं कथं गृह्णामि । स इव नाहं छली । अङ्गदादयस्तद्रामवचः श्रुत्वा छन्नमेव शान्तिचैत्ये गत्वा विविधानुपसर्गान् व्यधुः । स तु ध्यानान्मनागपि नाऽचालीत् । अङ्गदो जगाद । रामाज्ञीतेन त्वया किमिदं पाखण्डमारेभे । त्वया मद्भर्तुः परोक्षे महासती सीता जह्रे । अहं तु तव पश्यतोऽपि मन्दोदरीं हरामि । इत्युक्त्वा रुदतीं मन्दोदरीं कचेश्वकर्ष । स तु न प्रेक्षां-चक्रेऽपि । विद्या नभो द्योतयन्ती च प्रादुर्भूयोवाच । सिद्धाऽस्मि । किं करोमि विश्वं तव वशे ? कियन्मात्रौ काकुत्स्थौ । रावणः प्रत्युवाच । सर्वं त्वया सिध्यति । स्मृता समागच्छेः । साऽन्तर्दधे । [illegible] साधुः । दशास्यो मन्दोदर्यङ्गदोदन्तं श्रुत्वा हुंकारं कृत्वा स्नातभुक्तो देवरमणोद्याने गत्वा सीतां जजल्प । सुचिरमनुनीताऽसि । सम्प्रति तु त्वत्पतिदेवरौ हत्वा त्यक्तनियमभङ्गभीरुत्वः प्रसह्य त्वां सेविष्ये । सा तद्वाचा मूर्च्छिता कथंचिल्लब्धसंज्ञा [illegible] मेऽनशनमित्यभिजग्राह । दशास्यस्तच्छ्रुत्वा दध्यौ । अस्यां मे रागः स्थले कमलरोपणवत् । मया सुष्ठु न चक्रे । विभीषणो ज्ञातयः, अमात्या न मानिताः, कुलं कलङ्कितम् । अद्य चेदेनां मुञ्चे तदा विवेकः । रामाक्रान्तेन मुक्तेति [illegible] । ततो बद्ध्वाऽत्राऽऽनेष्ये । अमूं चार्पयिष्यामि । इदं धर्म्यं यशश्चेति निश्चित्य तां निशामतीत्यापशकुनैर्वार्यमाणोऽपि युधे चचाल । भूयोऽपि द्वयोः सैन्ययोर्युद्धं प्रवृत्ते । लक्ष्मणोऽपररक्षांसि विधूय दशास्यं विशिखैराच्छादयमास । तद्विक्रमं दृष्ट्वा साशङ्को रावणो बहुरूपां विद्यां सस्मार । स्मृतिमात्राऽऽगतायां तत्र विद्यायां राव-णोऽनेकशो भैरवाणि रूपाणि विचक्रे । लक्ष्मणो भूमौ खे पृष्ठेऽग्रे पार्श्वयोर्नानाऽस्त्रवर्षिणो रावणानेवापश्यत् । स्वयं तार्क्ष्यस्थ एकोऽपि

रावणो विप-
ताग्निशिखैः शर्जयान। रावणो विधुरथकं स्मृत्वा भ्रमयित्वा मुमोच। तत्तु प्रदक्षिणां कृत्वा सौमित्रेर्दक्षिणे करे तस्थौ। रावणो विप- भ्रातश्चेजि-
ष्णो दध्यौ। सत्यं मुनिवचो जज्ञे। विभीषणादीनामालोचनिर्णयश्च सत्योऽभूत्। विभीषणस्तं विपण्णं दृष्ट्वा पुनर्जगौ। भ्रातश्चेजि-
ष्णो दध्यौ। सत्यं मुनिवचो जज्ञे। लक्ष्मणस्तस्येत्थं
र्जीवितुमिच्छ सीताम्। रावणः क्रुद्धोऽभ्यधात्। रे मम किं चक्रमेवाऽस्त्रम्? सचक्रमपि रिपुं मुष्टिना हनिष्यामि। लक्ष्मणस्तस्येत्थं
विप्लुवतो वक्षस्तेनैव चक्रेणाऽपाटयत्। तदा ज्येष्ठकृष्णैकादश्यामह्नः पश्चिमे यामे मृतो दशास्यस्तुर्यं नरकं प्राप। सुरैर्जयजयेति वदद्भिः
सौमित्रेरुपरि पुष्पवृष्टिश्चक्रे। कपयो हर्षान्ननृतुः।

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरित्रे गद्यबन्धे सप्तमे पर्वणि रावणवधो नाम सप्तमः सर्गः ॥

## ॥ अथाष्टमः सर्गः ॥

विभीषणः कान्दिशीकान्राक्षसान्पद्मनारायणावष्टमौ बलहरी श्रयध्वमित्यूचे। तौ च तेषां शिवानां प्रसादं चक्रतुः। विभीषणो
भ्रातरं हतं दृष्ट्वा शोकावेशान्मुमूर्षुः क्षुरिकया स्वकुक्षिं निघ्नन्दा भ्रातर्भातरित्युच्चैः क्रन्दन्मन्दोदर्यादियुतो राघवाभ्यामिति प्रत्यबोधि।
ईदृक् विक्रमी न शोच्योऽयम्। वीरवृत्त्या मृत्युं गतोऽसौ कीर्तिपात्रम्। अस्योत्तरकार्याणि कुरुध्वम्। एवं कुम्भकर्णादयोऽपि प्राप्त-
बन्धनाः प्रबोधिताः। सर्वेऽपि सम्भूय गोशीर्षचन्दनैः कर्पूरागरुसम्मिश्रैर्दशास्याङ्गसंस्कारं चक्रुः। पद्मस्ते च पद्मसरस्येत्य स्नात्वा

न्ध्यसार्थवाहस्यैको महिषोऽध्वन्यतिभारत्रुटितोऽत्रापतत्। पुरीजनस्तच्छीर्षे पादं विन्यस्य चचार। स विपन्नोऽकामनिर्जरायोगाच्छ्वेतंकरपुरेशः पवनपुत्रकाख्यो वायुकुमारः सुरोऽभूत्। क्रुद्धोऽस्मिन्जनपदे व्याधिं व्यधात्। मद्देशवर्तिनोऽपि द्रोणमेघनृपस्य मन्मातुलस्य देशे गृहे च व्याधिर्नाभूत्। मातुलो मया पृष्टो जगौ। मद्भार्या प्रियङ्करा व्याधिबाधिता गर्भे जाते तत्प्रभावाद्व्याधिना मुमुचे। क्रमाच्च विशल्याऽऽख्यां सुतामसूत्। विशल्यास्नानाम्बुसिक्तश्च जातरुगपि लोको मद्देशे नीरुगभूत्। मया सत्यभूतशरणोमुनिः पृष्टः पुत्र्याः प्राग्जन्मतपसः फलमाचख्यौ। व्रणसंरोहणं शल्यापहारो व्याधिक्षयोऽस्याः स्नानाऽम्भसा भावी लक्ष्मणश्च भर्ता। तेनर्षिवचसाऽनुभवाच्चायमस्याः प्रभावो मया निश्चिक्ये। इत्त्युक्त्वा द्रोणमेघो ममापि तत्स्नानजलमार्पयत्। तेन ममापि भूर्नीरुगजनि। त्वं च तत्सिक्तो निःशक्तिशल्यः संरूढव्रणश्चाभूः। तत्प्रभो! आप्रातस्तत्स्नानाम्बु समानयत। त्वर्यतां त्वर्यताम्। ततो रामाज्ञया भामण्डलश्रीशैलाङ्गदा विमानेनाऽयोध्यां प्राप्ताः। प्रासादाङ्के शयानं भरतं दृष्ट्वा सङ्गीतेन प्रबोधयामासुः। भरतपृष्टो भामण्डलो नत्वा कार्यं जगौ। एतन्मया तत्रेयुषा सेत्स्यतीति भरतस्तद्विमानारूढः कौतुकमङ्गलं पुरं प्राप। भरतेनाऽर्थितो द्रोणमेघः लक्ष्मणेन सहोद्वाह्य स्त्रीसहस्रयुतां विशल्यां ददौ। भामण्डलोऽयोध्यायां भरतं मुक्त्वा विशल्यायुतो ज्वलद्दीपविमानस्थोऽर्कोदयभ्रान्त्या भीतैर्निजैः क्षणं दृष्टो लक्ष्मणान्तिकं ययौ। विशल्यया पाणिना स्पृष्टात्सौमित्रेः क्षणाच्छक्तिर्निर्गत्य समुत्पतन्ती हनुमतोत्पत्य गृहीता। सा देवतारूपा प्राह। न मे दोषः। अहं प्रज्ञप्तिस्वसा धरणेनाऽस्मै दत्ता, विशल्याप्राक्तपस्तेजः सोढुमशक्ता यास्यामि। मां प्रेष्यभावादनागसं मुञ्च। सा मुक्ता तिरोधत्त। विशल्या भूयोपि सौमित्रिं पाणिना पस्पर्श। गोशीर्षचन्दनेन च शनैः शनैर्विलिलेप। सौमित्री रूढव्रणो द्राक् सुप्तोत्थित इव रामेण सस्वजे। रामोऽस्मै विशल्याघृत्तं च शशंस। तत्स्नानाम्बुना च स्वान्परांश्चाऽभ्य-

पंचयत्। तदैव रामाज्ञया सौमित्रिः कन्यासहस्रयुतां विशल्यामुपायत। तदा सौमित्रिजीवनोद्वाहजः कोऽप्युत्सवो विद्याधरेशैश्चक्रे।

दशास्यस्तज्ज्ञात्वा मन्त्रिभिरमन्त्रयत्। मम भावोऽयमभूत्। शक्तिहतो लक्ष्मणः प्रातर्मर्ता। तत्स्नेहाद्रामोऽपि। कपयो नंष्ट्वा यास्यन्ति। कुम्भकर्णेन्द्रजिन्मुख्याश्च स्वयमेष्यन्ति। लक्ष्मणो दैववैगुण्याज्जीवितः। कुम्भकर्णाद्याः कथं मोचयितव्याः। मन्त्रिणः प्रोचुः। सीतामोक्षं विना तेषां न मोक्षः। प्रत्युताशिवम्। निजं कुलं रक्ष रक्ष। राममेवानुनय। रावणस्तानवमत्य सामन्तं दूतं सामदानदण्डपूर्वमनुशिष्य रामान्ते प्राहिणोत्। स गत्वा राममूचे। दशास्यस्त्वां वक्ति। मद्बन्धुवर्गं मुञ्च सीतामनुमन्यस्व। राज्यार्धं गृहाण। त्रीणि कन्यासहस्राणि दास्ये। एवं चेन्न तुष्यसि तदा नैतत्सर्वं न च जीवितम्। रामोऽभाषत। नाऽर्थो मे राज्यादिना ... सीतामर्चयित्वा प्रहेष्यति तदा तद्बन्धुवर्गं मोक्ष्ये नान्यथा। सामन्त ऊचे। स्त्रीमात्रकृते स्वं प्राणसंशये मा क्षेप्सीः। चेदेकवारं ... रावणाहतः सौमित्रिर्जीवितोऽद्य कथं स जीविष्यति, त्वं, कपयश्च। रावण एकोऽपि विश्वं हन्तुमलम्। लक्ष्मणः क्रोधाद्बभाषे। रे दूताधम! रावणोऽद्यापि स्वशक्तिं परशक्तिं वा न वेत्ति। हतबद्धपरिवारो भार्याशेषीकृतोऽपि पौरुषं नाटयति। अहो धाष्टर्यम्। ... युद्धाय सन्नाहय। मद्भुजस्तं हन्तुं सज्ज एव। दूतोऽपि विभाषितुकामः कपिभिर्ग्रीवायां धृत्वा निरवास्यत।

दशास्यो दूतात्तच्छ्रुत्वा सचिवान्सम्प्रति किं कार्यमित्यनुयुयोज। तेऽप्यब्रुवन्। सीताऽर्पणमुचितम्। सर्वं कार्यमन्वयव्यतिरेकाभ्यां परीक्ष्यते। व्यतिरेकफलं दृष्टम्। अन्वयफलं पश्य। सीताऽर्पणाद्विमुक्तैरक्षतैर्बन्धुभिः सुतैः सम्पदा चैधस्व। दशास्यस्तेषां सीताऽर्पणगिरा मर्माहत इवान्तर्दूनश्चिरं दध्यौ। बहुरूपाया विद्यायाः साधनं हृदि निर्णीय शान्तकषायीभूय शान्तिचैत्यं ययौ। श्रीशान्तेर्भक्त्या स्नात्रं कृत्वा गोशीर्षचन्दनेनाङ्गरागं दैवतश्च पुष्पैः पूजां चकार। तुष्टाव। पुरोरत्नशिलासीनोऽक्षस्रग्धारी विद्यां साध-

यितुमारेभे। मन्दोदरी यमदण्डं द्वाःस्थं जजल्प। सर्वोऽपि पूर्जनोऽष्टाहानि जिनधर्मरतोऽस्तु, अन्यथा वधात्मको दण्ड इति ल-ङ्कायामाघोषय। स तथा चक्रे। सुग्रीवस्तच्चरैर्ज्ञात्वा यावद्बहुरूपिणीं विद्यां न साधयति तावत्साध्योऽयमिति रामं व्यज्ञपयत्। पद्मोऽपि स्मित्वोचे। शान्तं ध्यानस्थं तं कथं गृह्णामि। स इव नाहं छली। अङ्गदादयस्तद्रामवचः श्रुत्वा छन्नमेव शान्तिचैत्ये गत्वा विविधानुपसर्गान् व्यधुः। स तु ध्यानान्मनागपि नाऽचालीत्। अङ्गदो जगाद। रामाद्भीतेन त्वया किमिदं पाखण्डमारेभे। त्वया मद्भर्तुः परोक्षे महासती सीता जह्रे। अहं तु तव पश्यतोऽपि मन्दोदरीं हरामि। इत्युक्त्वा रुदतीं मन्दोदरीं कचैश्चकर्ष। स तु न प्रेक्षां-चक्रेऽपि। विद्या नभो द्योतयन्ती च प्रादुर्भूयोवाच। सिद्धाऽस्मि। किं करोमि विश्वं तव वशे? कियन्मात्रौ काकुत्स्थौ। रावणः प्रत्युवाच। सर्वं त्वया सिध्यति। स्मृता समागच्छेः। साऽन्तर्दधे। कपयः स्वसैन्यं प्रापुः। दशास्यो मन्दोदर्यङ्गदोदन्तं श्रुत्वा हुंकारं कृत्वा स्नातभुक्तो देवरमणोद्याने गत्वा सीतां जजल्प। सुचिरमनुनीताऽसि। सम्प्रति तु त्वत्पतिदेवरौ हत्वा त्यक्तनियमभङ्गभीरुत्वः प्रसह्य त्वां सेविष्ये। सा तद्वाचा मूर्च्छिता कथंचिल्लब्धसंज्ञा रामसौमित्र्योश्चेन्मृत्युस्तदा मेऽनशनमित्यभिजग्राह। दशास्यस्तच्छ्रुत्वा दध्यौ। अस्यां मे रागः स्थले कमलरोपणवत्। मया युक्तं न चक्रे। यद्विभीषणोऽवज्ञातः, अमात्या न मानिताः, कुलं कलङ्कितम्। अद्य चेदेनां मुञ्चे तन्न विवेकः। रामाक्रान्तेन मुक्तेति प्रत्युताऽयशः। तत्तौ बद्ध्वाऽत्राऽऽनेष्ये। अमूं चार्पयिष्यामि। इदं धर्म्यं यशश्चेति निश्चित्य तां निशामतीत्यापशकुनैर्वार्यमाणोऽपि युधे चचाल। भूयोऽपि द्वयोः सैन्ययोर्युद्धं प्रववृते। लक्ष्मणोऽपररक्षांसि विधूय दशास्यं विशिखैराच्छादयमास। तद्विक्रमं दृष्ट्वा साशङ्को रावणो बहुरूपां विद्यां सस्मार। स्मृतिमात्राऽऽगतायां तत्र विद्यायां राव-णोऽनेकशो भैरवाणि रूपाणि विचक्रे। लक्ष्मणो भूमौ खे पृष्ठेऽग्रे पार्श्वयोर्नानाऽस्त्रवर्षिणो रावणानेवापश्यत्। स्वयं तार्क्ष्यस्थ एकोऽपि

स्त्रीभिर्भिन्नः शरैर्जघान। रावणो विधुरश्चक्रं स्मृत्वा भ्रमयित्वा मुमोच। तत्तु प्रदक्षिणां कृत्वा सौमित्रेर्दक्षिणे करे तस्थौ। रावणो विषण्णो दध्यौ। सत्य मुनिवचो जज्ञे। विभीषणादीनामालोचनिर्णयश्च सत्योऽभूत्। विभीषणस्तं विषण्णं दृष्ट्वा पुनर्जगौ। भ्रातश्चेज्जिजीविषुस्तन्मुञ्च सीताम्। रावणः क्रुद्धोऽभ्यधात्। रे मम किं चक्रमेवाऽस्त्रम्? सचक्रमपि रिपुं मुष्टिना हनिष्यामि। लक्ष्मणस्तस्येत्थं विस्फुरतो वक्षस्तेनैव चक्रेणाऽपाटयत्। तदा ज्येष्ठकृष्णैकादश्यामह्नः पश्चिमे यामे मृतो दशास्यस्तुर्यं नरकं प्राप। सुरैर्जयजयेति वदद्भिः सौमित्रेरुपरि पुष्पवृष्टिश्चक्रे। कपयो हर्षान्ननृतुः।

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरित्रे गद्यबन्धे सप्तमे पर्वणि रावणवधो नाम सप्तमः सर्गः ॥

## ॥ अथाष्टमः सर्गः ॥

विभीषणः कान्दिशीकान्राक्षसान्पद्मनारायणावष्टमौ बलहरी श्रयध्वमित्यूचे। तौ च तेषां श्रितानां प्रसादं चक्रतुः। विभीषणो भ्रातरं हतं दृष्ट्वा शोकावेशान्मुमूर्षुश्छुरिकया स्वकुक्षिं निघ्नन् भ्रातर्भ्रातरित्युच्चैः क्रन्दन्मन्दोदर्यादियुतो राघवाभ्यामिति प्रत्यबोधि। ईदृग् विक्रमी न शोच्योऽयम्। वीरवृत्त्या मृत्युं गतोऽसौ कीर्तिपात्रम्। अस्योत्तरकार्याणि कुरुध्वम्। एवं कुम्भकर्णादयोऽपि प्राप्तबन्धनाः प्रबोधिताः। सर्वेऽपि सम्भूय गोशीर्षचन्दनैः कर्पूरागरुसम्मिश्रैर्दशास्याङ्गसंस्कारं चक्रुः। पद्मस्ते च पद्मसरस्येत्य स्नात्वा

दशास्याय जलाञ्जलिं ददुः। रामकुम्भकर्णादीन्स्वस्वराज्यानि श्रयध्वमित्याह। तेऽपि शोकविस्मयभृतो गद्गदाक्षरं जगदुः। नाऽर्थो राज्येन प्रव्रज्यां ग्रहीष्यामः।

अत्रान्तरे कुसुमायुधोद्यानेऽप्रमेयबलाख्यश्चतुर्ज्ञानी मुनिराययौ। तत्रैव रात्रौ तस्य केवले ज्ञाने जाते सुरा महिमानं चक्रुः। राघवौ कुम्भकर्णाद्याश्च प्रातर्गत्वा नत्वा धर्मं शुश्रुवुः। विरक्तौ शक्रजिन्मेघवाहनौ स्वभवान्पप्रच्छतुः। मुनिराह। कौशाम्ब्यां प्रथमपश्चिमौ युवां निःस्वौ बन्धू। भवदत्तर्षेः प्रव्रज्य विजह्रथुः। अन्येद्युः कौशाम्ब्यां गतौ मधूत्सवे इन्दुमुख्या पत्न्या क्रीडन्तं नन्दीघोषनृपं ददृशथुः। पश्चिमस्तं दृष्ट्वा ईदृक्क्रीडापरोऽनयोः पुत्रो भूयासमिति कृतनिदानस्तयोः सुतो रतिवर्धनोऽभूत्। उद्यौवनः प्राप्तराज्यः पितेव विविधं रेमे। प्रथमर्षिस्तु ब्रह्मकल्पे सुरीभूतो मुनिरूपेणाऽऽगत्य तं प्रबोधयति स्म। ततः प्रव्रज्य ब्रह्मलोके सुरत्वं प्राप। ततो द्वावपि च्युतौ विबुद्धनगरे भ्रातरौ। भूपौ प्रव्रज्याच्युते सुरीभूय दशास्यसुतौ युवां जज्ञाथे। रतिवर्धनमातेन्दुमुखी तु भवं भ्रान्त्वा मन्दोदरी युवयोर्जननी जज्ञे। कुम्भकर्णेन्द्रजिन्मेघवाहनाद्या मन्दोदर्यादयश्च तच्छ्रुत्वा प्राव्रजन्। रामस्तु सानुजसुग्रीवो विभीषणेन वेत्रिणा दर्श्यमानपथः खेचरीभिः कृतमङ्गलो महत्या ऋध्या लङ्कां विवेश। पुष्पगिरेर्मूर्धन्युद्याने हनुमता यथाऽऽख्यातां सीतां ददर्श। तामुत्क्षिप्य निजाङ्के धारयामास। सिद्धगन्धर्वाद्या इयं सीता महासती जयत्विति व्योम्नि जुघुषुः। सीता नमन्तं सौमित्रिं चिरं जीवेत्यादि ब्रुवाणा मूर्धनि जघ्रौ। भामण्डलमपि नमन्तमाशिषाऽनन्दयत्। सुग्रीवविभीषणश्रीशैलाऽङ्गदाद्या अपि स्वनामाख्यानपूर्वं तां नेमुः। रामः सप्रियो भुवनालङ्कारं गजमध्यास्य कपीशादिवृतो दाशास्यं धाम गतः। तत्र श्रीशान्तिचैत्ये विभीषणाऽर्पितैरुपहारैः श्रीशान्तिमानर्च। ततः सपरिवारोऽपि विभीषणाऽभ्यर्थितो विभीषणगृहे गत्वा देवार्चनस्नानभोज-

नाद्रि चक्रे । विभीषणो द्वे वाससी परिधाय कृताञ्जलिः सिंहासनासीनं रामं जगाद । रत्नादिः कोशोऽयमिदं हस्तिहयादि, राक्षसद्वीपश्चायं गृह्यताम्, त्वत्पत्तिरस्मि । तत्र राज्याभिषेकं कुर्महे । लङ्कां पवित्रय । मामनुगृहाण । रामोऽभ्यधात् । मया लङ्काराज्यं पुरा ते दत्तम् । भक्तिमोहितः किं व्यस्मार्षीः ? इत्युक्त्वा तदैव तं लङ्काराज्येऽभिषिषेच । स्वयं सपरिवारो रावणौकोे ययौ तत्र राघवो सिंहोदरादीनां प्राक् स्वप्रतिपन्नाः कन्या रामाज्ञया विद्याधरैरानीता यथाविधि व्यवाहयताम् । सुग्रीवाद्यैः सेव्यमानौ षड्वर्षीमतिचक्रमतुः ।

अत्रान्तरे विन्ध्यस्थल्यामिन्द्रजिन्मेघवाहनौ सिद्धौ । तन्मेघरवं तीर्थं जज्ञे । कुम्भकर्णो नर्मदानद्यां सिद्धः । तत्तीर्थं पृष्ठरक्षिताख्यं बभूव । इतश्च साकेतपुरे रामलक्ष्मणाम्बे शुद्धिमजानत्यौ दुःखिते तस्थतुः । तदा च धातकीखण्डात्तत्राऽऽगतो नारदस्ते दुःखहेतुं पप्रच्छ । अपराजिता जजल्प । मत्सुतौ वनं यातौ । सीताऽपहारे रावणेन रणे शक्त्या ताडिते सौमित्रौ विशल्या तत्राऽऽनायि । ततो न विद्मो वत्सो जीवति नवेत्युक्त्वा हा वत्स वत्सेति रुदन्ती सुमित्रामप्यरोदयत् । नारदः प्राह । युवां सुस्थिते भवतम् । युष्मत्पुत्रावनुपेष्यामि । आनेष्यामि । ततो नारदो लङ्कायां गत्वा रामाय मातृवृत्तमाचख्यौ । रामो विभीषणं प्राह । मातृणां दुःखं विस्मृत्य त्वद्भक्त्या निरमस्थाम् । यावन्मातरोऽस्मद्दुःखान्न विपद्यन्ते तावत्तत्राऽद्य यामः । अनुजानीहि । लङ्केशो नत्वोचे । षोडशाहान्यत्र तिष्ठ । यावच्छिल्पिभिरयोध्यां स्वःपुरीसमां विदधे । एवमस्त्विति रामेणोक्ते स तथा चक्रे । तदा रामेण विसृष्टो नारदो गत्वा मातॄणां पुत्राऽऽगमोत्सवमाख्यात् । षोडशेऽह्नि राघवौ सान्तःपुरौ पुष्पकारूढौ लङ्केशसुग्रीवभामण्डलादिवृतौ क्षणादयोध्यामीयतुः ।

भरते गजारूढे सानुजेऽभ्यागते पुष्पकं रामाज्ञयोपक्ष्मं जगाम । भरते सानुजे पूर्वमेवेभादुत्तीर्णे तौ सोत्कण्ठौ पुष्पकादुत्तेरतुः ।

रामो भरतशत्रुघ्नौ पादान्ते लुठन्तावुत्थाप्य परिषस्वजे । लक्ष्मणोऽपि तौ नमन्तावालिलिङ्ग । रामस्त्रिभिरनुजैः सार्धं पुष्पकमारुह्याऽयोध्याप्रवेशाय समादिदेश । रामसौमित्री महामहेन स्वप्रासादं जग्मतुः । रामः ससौमित्रिः पुष्पकादुत्तीर्य मातृगृहेऽपराजितां देवीमपरश्च मातृवर्गं ननाम । ता आशिषो ददुः । सीताविशल्याद्याः श्वश्रूर्नमन्त्यस्ताभिरस्मद्वद्वीरप्रसविन्यो भूयास्तेत्याशास्यन्त । अपराजिता देवी भूयोऽपि लक्ष्मणं पाणिना स्पृशन्ती मूर्ध्नि चुम्बन्ती चैवमुवाच । दिष्टया दृष्टोसि । पुनर्जातोसि । त्वत्परिचर्यया रामसीताभ्यां तानि तानि वनवासकष्टान्यतिनीतानि । लक्ष्मणोऽवदत् । तातेनेवार्येण त्वयेव सीतया लालितो वनेऽपि सुखमस्थाम् । मद्दुर्ललितादेव सीताऽपहारः । परमार्यः सपरिवारोऽपि युष्मदाशीर्भिर्वैरवार्धिं लङ्घित्वा क्षेमेण ययौ । भरतोऽयोध्यायामुत्सवमकारयत् ।

अन्यदा भरतो रामं नत्वोवाच । आर्य ! त्वदाज्ञयेयत्कालं राज्यं धृतम् । चेदार्याज्ञा राज्यपालनेऽर्गला नाऽभविष्यत् तत्तातपादैः सहैव प्राव्रजिष्यम् । व्रतायानुमन्यस्व । राज्यं प्रतीच्छ । भवोद्विग्नस्त्वयि प्राप्ते स्थातुं नोत्सहे । रामः साश्रुः प्राह । वत्स ! किं वक्षि ? राज्यं त्वमेव कुरु । वयं त्वय्युत्काः समागताः । स्वविरहव्यथां मा दाः । तिष्ठ । ममाज्ञां प्राग्वत्कुरु । इत्याग्रहपरं रामं ज्ञात्वा नत्वा स चलन्सौमित्रिणोत्थाय पाणिना दध्रे । भरतं व्रताय यान्तं ज्ञात्वा सीताविशल्याद्याः ससम्भ्रमास्तत्राऽऽजग्मुः । भरतस्य व्रताग्रहं विस्मारयितुकामा जलक्रीडार्थमर्थनां चक्रुश्च । स च सान्तःपुरोऽपि तासामुपरोधेन क्रीडासरसि मुहूर्तं चिक्रीड । भरते जलान्निर्गत्य तीरस्थे स्तम्भमुन्मूल्य तत्राऽऽगतो भुवनाऽलङ्कारो मदान्धोऽपि भरतदर्शनादमदोऽभूत् । तद्दर्शनाद्भरतोऽपि मुमुदे च । रामसौमित्री ससम्भ्रमौ ससामन्तौ तद्बन्धनायाऽऽजग्मतुः । रामाज्ञया हस्तिपकैः स स्तम्भे निन्ये ।

देशभूषणकुलभूषणर्षी आगतौ । तन्नत्यै रामसौमित्रिभरताः सपरिवारा ययुः । रामोऽपृच्छत् । भरतदर्शनाद् भुवनालङ्कारः करी

कथं निर्मदः। देशभूषणः केवली जगौ। ये श्रीनाभेयेन सह चत्वारो नृपसहस्राः प्राव्रजन्, ते निर्विण्णास्तापसा बभूवुः। तेषु प्रह्लादनासुप्रभनृपसुतौ तापसौ चन्द्रोदयसूरोदयौ चिरं भवं भ्रेमतुः। चन्द्रोदयो गजपुरे कुलङ्करो राजाऽभूत्। सूरोदयोऽपि तत्रैव श्रुतिरतिर्द्विजः। अन्यदा कुलङ्करनृपस्तापसाश्रमं गच्छन्नभिनन्दनर्षिणाऽवधिज्ञानेनोचे। पञ्चाग्नितपः कुर्वता तपस्विना दग्धुमानीतस्य काष्ठस्यान्तस्तव पूर्वभवपितामहः सर्पस्तिष्ठति। तं रक्षेः। स तत्र गतो दारुदारणात् तं तथा दृष्ट्वा विस्मितः प्रवित्रजिषुः श्रुतिरतिद्विजेन नाऽयं युष्माकमाम्नायको धर्मः, तव च चेन्निर्बन्धस्तदन्तिमे वयसि दीक्षा ग्राह्येति निषिद्धः किं कर्तव्यमिति ध्यायन्नभूत्। पुरोधःसक्तया राज्या विषदानान्मारितश्च। श्रुतिरतिरपि क्रमान्मृतः। द्वावपि भवं भ्रान्त्वा राजगृहे कपिलविप्रसुतौ विनोदरमणौ जातौ। रमणो देशान्तरे वेदमधीत्य निशि राजगृहमागतो बहिरेव यक्षगृहे सुष्वाप। विनोदभार्या शाखा तदा दत्तद्विजेन कृतसङ्केता तत्राऽऽगता। विनोदोऽपि तामन्वाययौ। सा दत्तबुद्ध्या रमणमुत्थाप्यारमयत्। विनोदोऽप्यसिना तं जघान। शाखया रमणच्छुर्या विनोदोऽपि जघ्ने। तौ चिरं भवं भ्रेमतुः। विनोदो धनाख्येभ्यपुत्रोऽभूत्। रमणस्तु धनसुतो भूषणाऽऽख्यः। धनाज्ञया परिणीतद्वात्रिंशत्कन्यः क्रीडन्नेकदा रात्रेस्तुर्ये यामे श्रीधरर्षेः केवलज्ञाने जाते देवैरारब्धमुत्सवं दृष्ट्वा जातधर्मबुद्धिः सौधादुत्तीर्य नन्तुं चलितो मार्गे सर्पदष्टश्चिरं शुभगतिर्बभ्राम। जम्बूद्वीपापरविदेहे रत्नपुरेऽचलचक्रिसुतः प्रियदर्शनः प्रवित्रजिषुस्ताताऽऽग्रहात्परिणीतकन्यात्रिसहस्रः संविग्नस्तस्थौ। चतुःषष्टिवर्षसहस्राणि गार्हस्थ्येऽपि तपस्तप्त्वा ब्रह्मकल्पे सुरोऽजनि। धनोऽपि भवं भ्रान्त्वा द्विजसुतो मृदुमतिर्द्यूतव्यसनी वेश्यासक्तो धूर्तोऽन्ते व्रताद् ब्रह्मलोके देवोऽभूत्। च्युत्वा पूर्वभवमायादोषार्जिताढ्याद्रावयं गजो जातः। प्रियदर्शनजीवस्तु च्युत्वा भरतोऽयम्। तेन भरतदर्शनाज्जातजातिस्मृतिरयं। गजो विवेकादमदः।

तच्छ्रुत्वा भरतो राजसहस्रेण व्रतं ललौ, मुक्तश्च। राजसहस्रमपि नाना लब्धीः प्राप्योचितं पदं प्राप। कुञ्जरोऽपि नानातपः कृत्वाऽनशनी ब्रह्मलोके ययौ। भरताऽम्बा कैकेय्यपि व्रतादव्ययं पदं लेभे। भरते दीक्षिते भूचरखेचरा भूपा राममभिषेकाय प्रार्थयन्। रामादेशात्सौमित्रेर्वासुदेवत्वाभिषेकं चक्रुः। रामस्य बलदेवत्वाभिषेकश्च। रामो विभीषणाय रक्षोद्वीपं, सुग्रीवाय कपिद्वीपं, हनुमते श्रीपुरं, विराधाय पाताललङ्कां, नीलाय ऋक्षपुरं, प्रतिसूर्याय हनूपुरं, रत्नजटिने देवोपगीतनगरं, भामण्डलाय वैताढ्ये रथनूपुरमन्येभ्योऽप्यन्यानि पुराणि दत्त्वा वत्स! ते यो रोचते तं देशं प्रार्थयेति शत्रुघ्नं प्राह। स च मथुरां ययाचे। रामोऽभ्यधात्। वत्स! दुःसाधा सा पुरी। तत्र मधुराजस्य चमरार्पितं शूलं दूराद्रिपून्हत्वा तत्करेऽभ्येति। शत्रुघ्नः प्राह। त्वद्भ्राताऽस्मि। करिष्ये मधोः प्रतीकारम्। रामः शत्रुघ्नमाग्रहिणं ज्ञात्वाऽन्वशात्। अपशूलः स योधनीय इति। रामोऽस्मा अक्षय्यशरौ तूणौ ददौ। कृतान्तवदनं च सेनान्यं सहाऽऽदिदेश। लक्ष्मणोऽपि तस्मा अग्निमुखान्शरानर्णवावर्तं च धन्वापर्यत्। शत्रुघ्नः प्रस्थितो गत उपमधूपघ्नं नदीतटेऽवात्सीत्। चराश्चाऽभ्यधुः। मधुः पुरीपूर्वदिक्स्थे कुबेरोद्याने जयन्त्या पत्न्या क्रीडति। शूलं शस्त्राऽऽगारेऽस्ति। तद्योधनेऽयं कालः। छलज्ञः शत्रुघ्नो निशि मथुरां विवेश। मधुं च विशन्तं स्वयं बलै रुरोध। रण आदौ मधुसुतं लवणमवधीत्। मधौ क्रुद्धे युध्यमाने लक्ष्मणदत्तं धनुः शरांश्च सस्मार। स्मृतोपनतं तच्चापमधिज्यीकृत्याऽग्निशरैस्तं जघान। मधुर्घातविधुरो दध्यौ शूलं करे नाऽऽययौ, रिपुर्न जघ्ने, मुधा जन्म गतं, जिनेन्द्रो नाऽर्चितः, चैत्यानि न कारितानि, पात्रेभ्यो नो दत्तमिति ध्यायन्नात्तदीक्षो नमस्कारं स्मरन्मृत्वा सनत्कुमारे देवो जज्ञे। तद्विमानसुरा मधुदेहस्योपरि पुष्पाणि ववृषुः। मधुदवो जयत्विति जुघुषुश्च। तच्छूलं देवतारूपं चमरान्तिके गत्वा शत्रुघ्नाच्छलोत्पन्नां मधुमृतिं शशंस। क्रुद्धश्चमरः स्वयं चलन्सुपर्णेशेन वेणुदारिणा क्व यासीति पृष्टः प्राह। शत्रुघ्नं हन्तुं यास्यामि।

नार्दयशो जगौ। सौमित्रिणाऽर्धचक्रिणा धरणेन्द्रदत्ता दशास्यमुक्ता शक्तिरपि जिग्ये, रावणोऽपि जघ्ने, तत्पत्तिर्मधुः कियान्। सौमित्रिणा यच्छक्तिजिता स विशल्यायाः कन्यायाः प्रभावः। तस्याश्चाऽब्रह्मचारिण्याः स प्रभावोऽधुना गतः। किं वा तवाऽनेन। मित्रारिं हन्तुं यास्यामि। चमरो रोषादागतः। सौराज्यसुस्थितं लोकं दृष्ट्वा प्राक् प्रजोपद्रवेणाऽमुं रिपुनृपश्चर्यार्मीति प्रजासु रोगान्व्यधात्। शत्रुघ्नः कुलदेवतातस्तज्ज्ञात्वाऽयोध्यां ययौ।

तदा तौ देशभूषणकुलभूषणर्षी आगतौ। रामाद्यास्तौ नेमुः। रामः पप्रच्छ। शत्रुघ्नः कुतो मथुरां प्रत्याग्रही ? देशभूषणः प्राह। शत्रुघ्नजीवोऽनेकशो मथुरायामुत्पद्य श्रीधरो विप्रो रूपवान्साधुसेवकोऽभूत्। राजमहिष्या ललितया रन्तुं तत्र स्वान्तिकमानीतेऽतर्किते च राज्ञ्यागते चौरोऽयमिति पूत्कृते। राजाज्ञया धृत्वा वध्यस्थानं नीयमानः प्रतिज्ञातव्रतः कल्याणमुनिना मोचितः। प्रव्रज्य देवो भूत्वा च्युत्वा मथुरायां चन्द्रभद्रनृपकाञ्चनप्रभासुतो राज्ञोऽत्यन्तवल्लभोऽचलाख्य आसीत्। सोऽष्टभिः सापत्नैरग्रजैर्भानुप्रभाद्यैर्नृपोऽयं माभूदिति जिघांसितो नंष्ट्वाऽगात्। वने कण्टकेन विद्धः क्रन्दन् श्रावस्तीवासिना पितृनिर्वासितेनैधोभारधारिणाङ्कनाम्ना निष्कण्टकः कृतो जहर्ष। कण्टकं च दत्त्वोवाच। मथुरायां यदाऽचलनृपं शृणोषि, तदा तत्राऽऽगच्छेः। ततः कौशाम्ब्यां गतः। सिंहगुराविन्द्रदत्तनृपं धानुष्कत्वं शिक्षयति स्वधानुष्कत्वमदर्शयत्। इन्द्रदत्तात्पुत्रीं भुवं च लब्ध्वा देशान्साधयन्मथुरायां रणेऽष्टावपि भ्रातॄन्बद्ध्वाऽग्रहीत्। चन्द्रभद्रेण तत्पूत्कृत्य महितानां मन्त्रिणां पुरः स्ववृत्तमाख्यत्। ज्ञातवृत्तो हृष्टश्चन्द्रभद्रस्तं पुर्यामवीविशत्। राज्यं च ददौ। पित्रा निर्वास्यमानान्भ्रातॄनरक्षित्वाऽदृष्टसेवकांश्चकार। अन्यदा नटरङ्गस्थः प्रतिहारैर्हन्यमानमङ्कं दृष्ट्वा स्वान्तिके नीत्वा श्रावस्तीं ददौ। द्वावपि सुहृदौ राज्यं कृत्वा समुद्राऽऽचार्यान्ते प्रव्रज्य ब्रह्मलोकं गतौ। ततश्च्युत्वाऽचलजीवः शत्रुघ्नः प्राग्जन्ममोहेन मथुराऽऽग्रही

जज्ञे । अङ्कजीवस्तु त्वत्सेनापतिः कृतान्तवदनः ।

इतश्च प्रभापुरपुरेशश्रीनन्दनस्य धारणीपत्न्यां सप्त सुता जाताः । सुरनन्दः, श्रीनन्दः, श्रीतिलकः, सर्वसुन्दरः, जयन्तः,चमरः, जयमित्रश्च । श्रीनन्दो मासजातं सुतं राज्ये न्यस्य तैः सुतैः सह प्रीतिकराऽऽचार्यान्ते प्राव्राजीत् । श्रीनन्दनः सिद्धः । सुरनन्दाद्यास्तु सप्तर्षयस्तपःशक्त्या जङ्घाचारणलब्धय आसन् । ते सप्तर्षयो मथुरां गताः प्रावृषि शैलगुहाश्रयं कृत्वा तस्थुः । षष्ठाष्टमादीनि तपांसि तेनुः । उत्पत्य दूरदेशेषु पारणं चक्रुश्च । भूयोऽपि तत्रैत्य तस्थुः । तत्प्रभावाच्चमरोत्थो व्याधिस्तत्र चिक्षिये । अन्यदा ते पारणायाऽयोध्यायामर्हद्दत्तश्रेष्ठिगृहं प्रापुः । श्रेष्ठी सावज्ञं नत्वा दध्यौ । केऽमी वर्षास्वपि चारिणः । पृच्छामि । यद्वा पाखण्डैर्भाषितैरलम् । तस्मिन्नेवं ध्यायति तद्वध्वा प्रतिलम्भितास्ते द्युतेराचार्यस्य वसतौ जग्मुः द्युतिना सगौरवं नतास्तत्साधुभिरकालचारित्वादनताः पारणकं व्यधुः । मथुराया आगतास्तत्र च यास्याम इत्युक्त्वोत्पत्य ययुः । द्युतौ तान्स्तुवति कृतावज्ञास्तत्साधवः पश्चात्तापं चक्रुरर्हद्दत्तश्च । अन्यदाऽर्हद्दत्तः कार्तिकश्वेतसप्तम्यां मथुरां गतश्चैत्यान्यर्चित्वा सप्तर्षीन्नत्वाऽक्षमयत् । शत्रुघ्नोऽपि ज्ञातवृत्तो मथुरां ययौ । तान्नत्वोवाच । भिक्षा मद्गृहे गृह्यताम् । तै राजपिण्डो न कल्पत इत्युक्ते भूयो बभाण । युष्मत्प्रभावान्मद्देशे दैविको रोगः शान्तः । तल्लोकहितायाऽद्यापि किञ्चित्तिष्ठत परानुग्रहपरा यूयम् । तेऽप्यूचिरे प्रावृड्गता, तीर्थयात्रया विहरिष्यामः । मुनयो नैकत्र स्थिराः । गृहिणां गृहे गृहे त्वमार्हतं बिम्बमत्र कारयेः । ततो जातु व्याधिर्न भावी । तेऽन्यत्र ययुः शत्रुघ्नस्तथा चक्रे । लोको नीरुग् जज्ञे । स च मथुरायाश्चतसृष्वपि दिक्षु सप्तर्षीणां रत्नमयीः प्रतिमाश्चक्रे ।

इतश्च वैताढ्यदक्षिणश्रेणौ रत्नपुरे रत्नरथो राजा । तस्य चन्द्रमुखीकुक्षिजा मनोरमा कन्या । कस्येयं दातव्येति मन्त्रपरे नृपे

लक्ष्मणस्येयमर्हति नारदवचः श्रुत्वा रत्नरथपुत्रा गोत्रवैराद् भ्रूसंज्ञया कुट्यतां विटोऽयमिति भृत्यानादिदिशुः। नारदस्तान्जिघांसूनुत्थितो ज्ञात्वा गमुत्पत्योपलक्ष्मण आसत्ता पटे लिखित्वा दर्शयन् स्ववृत्तमाचख्यौ। लक्ष्मणो जातरागः सरामो रक्षःखेचरवृतस्तत्र गत्वा तं जिगाय। स च रामाय श्रीदामां लक्ष्मणाय च मनोरमां ददौ। राघवौ सर्वां वैताढ्यदक्षिणश्रेणिं जित्वाऽयोध्यामीयतुः। सौमित्रेः षोडशान्तःपुरवधूसहस्रायामष्ट महिष्यो बभूवुः। विशल्या, रूपवती, वनमाला, कल्याणमाला, रतिमाला, जितपद्मा, अभयवती, मनोरमा। तनयो द्वे शते सार्धे। तेष्वग्रमहिषीभवाः क्रमेण श्रीधरः, पृथिवीतिलकः, अर्जुनः, मङ्गलः, विमलः, श्रीकेशी, सत्यकीर्तिः, सुपार्श्वकीर्तिः। तथा रामस्य चतस्रो महादेव्यः। मैथिली, प्रभावती, रतिनिभा, श्रीदामा।

अन्यदा ऋतुस्नाता सीता निशान्ते स्वप्ने विमानाच्च्युतौ शरभौ मुखे विशन्तौ ददर्श। रामो व्याख्यत्। विमानाच्च्युतौ वीरौ ते सुतौ भाविनौ। यत्तु शरभौ तन्न मम मुदे। सीतोचे। धर्ममाहात्म्यात्सर्वं ते शुभं भावि। गर्भं च दधार। मातृगर्भा सा रामस्यात्यन्तं प्रियाऽभूत्। सपत्न्यस्तस्यामीर्ष्यालवो मायया कीदृग्रूपो रावणस्तं लिखित्वा दर्शयेत्यवदन्। सीता प्राह। मया सर्वाङ्गं न दृष्टः। तत्पादावेव दृष्टौ। कथं तं लिखामि? ता ऊचुः। तत्पादावप्यालिख। तद्दर्शने नः कौतुकम्। साऽपि प्रकृतिऋजुर्दशास्यांघ्री लिलेख। तत्राऽऽगतो रामस्ताभिर्बभाषे। अद्यापीयं दशास्यस्य स्मरति। अनया लिखितौ तत्पादौ पश्येति। रामो गम्भीरस्तदा दृष्ट्वाऽपि सीतायां तथैव वश्रृते। सपत्न्यस्तत्सीतादोषपदं स्वैर्दासीजनैर्जने माकाशयन्।

रामो वसन्ते सीता जगौ। महेन्द्रोदयोद्यानं रन्तुं व्रजामः। सीतोचे। मम देवतार्चनो दोहदः उद्यानभवैर्नानापुष्पैस्तं पूरय। रामो देवपूजा कारयित्वा ससीतः सपरिच्छदो महेन्द्रोदयोद्यानं गतः। अत्रान्तरे सीताया दक्षिणं चक्षुरस्फुरत्। रामेण नेदं साध्वि-

त्युक्ते विधिरद्यापि मम रक्षोद्वीपवासार्त्कि न तुष्टः । त्वद्विरहदुःखादप्यधिकं किं दुःखं दातेति सीता प्राह । रामस्तामूचे । मा खेदं वह । कर्माधीने शुभाशुभेऽवश्यं भोक्तव्ये, गृहे गच्छ । देवार्चनपात्रदानादिधर्मं कुरु । सीताऽपि तथा चक्रे । पुरीवृत्तज्ञापनाधिकारिणो राजधानीमहत्तरा विजयः, शूरदेवो, मधुमान्, पिङ्गलः, शूलधरः, काश्यपः, कालः, क्षेम इत्येते रामं नत्वा पुरो वेपमानास्तस्थुः, न तु व्यज्ञपयन् । राजतेजो दुःसहम् । रामस्तानूचे । ब्रूत । अभयं वः । विजयो व्यज्ञपयत् । स्वामिन् ! अवश्यविज्ञप्यं चेन्न विज्ञप्यते तदा प्रभुर्वंचितः स्यात् । विज्ञप्तं च दुःश्रवम् । देव्यां प्रवादोऽस्ति । युक्तियुक्तं श्रद्धेयम् । रावणेन हृता सीता एकैव तद्गृहे चिरमुवास ।

**सीता रक्ता विरक्ता वा संवित्त्या वा प्रसह्य वा । स्त्रीलोलेन दशास्येन नूनं स्याद्भोगदूषिता ॥४१॥**

लोका एवं प्रवदन्ति । युक्तियुक्तं तत्प्रवादं मा सहस्व । कीर्तिं मा मलिनय । रामो दुःखात्तूष्णींभूय धैर्यं प्रपद्य महत्तरानाह । युक्तं विज्ञप्तम् । स्त्रीमात्रार्थमयशो न सहिष्ये । रामो निशिच्छन्नो लोकमुखादपि तथैवाऽश्रृणोत् । गृहं गतः, पुनः सीतानिर्वादश्रुत्यै चरानादिदेश । दध्यौ च । यस्याः कृते रक्षःकुलक्षयोऽकारि तस्याः किमिदमागतम् ।

**जाने महासती सीता स्त्रीलोलः स च रावणः । कुलं च मे निष्कलङ्कं हा रामः किं करोत्वसौ ॥४२॥**

॥४१॥ चरा अपि श्रुतसीतानिर्वादा रामस्य सानुजकपिरक्षोराजस्य तत्तथैवाऽब्रुवन् । लक्ष्मणः क्रुद्धः स्माह । ये हेतुभिर्दोषान्सङ्कल्प्य सतीं सीतां दूषयन्ति तेषामेषोऽन्तकोऽस्मि । रामोऽप्यूचे । महत्तरैरिदं व्यज्ञपि । स्वयमश्रावि । चरैः संवादः कृतः । जनोऽयं सीतास्वीकार इव सीतात्यागे मापवादीत् । लक्ष्मणः प्रोचे । लोकगिरा सीतां मा त्यज । अबद्धमुखो लोकः सौराज्यसुस्थोऽपि राजदोषान् वक्ति । ॥४१॥

भूभुजां शिक्षणीय उपेक्षणीयो वा । रामः प्राह । सत्यमिदं, सर्वलोकविरुद्धं तु यशोऽर्थिना त्याज्यमेव । कृतान्तवदनं सेनान्यं प्रत्याह । सीतामरण्ये त्यज । लक्ष्मणः पादयोः पतित्वा नोचितमिति वदन् रुदन्रामेण नातः परं वाच्यमित्युक्तः स्वगृहं ययौ । रामः कृतान्तवदनमशिक्षयत् । सीतायाः सम्मेतयात्रायां दोहदोऽस्ति तद्व्याजेन वने नय । सोऽपि सम्मेतयात्रायै रामशासनमुक्त्वा सीतां रथ आरोप्य प्रास्थित । दुर्निमित्तप्वशकुनेष्वपि सीता सरलत्वादशङ्किता दूरं प्राप । गङ्गासागरमुत्तीर्य सिंहनिनादारण्ये गत्वा सेनानीं किञ्चिच्चिन्तयंस्तस्थौ । तं सास्रं म्लानवक्त्रं दृष्ट्वा सीता हेतुं पप्रच्छ । सेनानीरूचे । दुर्वचं कथं वच्मि ? प्रेष्यत्वाद्दुष्करमकार्षम् । रामेण लोकगिरा भीतेन सौमित्रिनिषिद्धेनाऽपि वने त्याजिताऽसि । मया परतन्त्रेण पापेनाऽत्र त्यक्ता । स्वप्रभावाज्जीविष्यसि । सा मूर्च्छिता रथान्यपात । सेनानीर्मृतेतिबुद्ध्या पापंमन्यो रुरोद । सीताऽपि वनवातेन संज्ञां प्राप । पुनर्मुमूर्च्छ । पुनश्चेतनां प्राप । कथंचित्सुस्थीभूताऽयोध्या कियद्दूरे, रामः कुत्र तिष्ठतीति पप्रच्छ । सेनानीर्जगौ । दूरेऽयोध्या । उग्राज्ञस्य रामस्य वार्तयाप्यलम् । सा रामभक्ता भूयोऽभाषिष्ट । रामस्य मद्वाचिकं शंसेः । परीक्षां किं नाकृथाः ? स्वकर्माणि भोक्ष्ये । त्वन्तु विवेकस्य कुलस्य चोचितं नाकार्षीः ।

तया खलगिराऽत्याक्षीः स्वामिन्नेकपदेऽपि माम् । तथा मिथ्यादृशां वाचा मा धर्मं जिनभाषितम् ॥४३॥

इत्युक्त्वा मुमूर्च्छ । उत्थाय च जजल्प । मया विना रामः कथं जीविष्यति ? रामाय स्वस्ति । लक्ष्मणस्याऽऽशिषं शंसेः । शिवास्ते पन्थानः । गच्छ रामान्तिकम् । सेनानीस्तां नत्वा नूनं सतीयमिति ध्यायन् कथंचिद्ववले ।

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते गद्यबन्धे सप्तमे पर्वणि सीतापरित्यागो नामाऽष्टमः सर्गः ॥

## ॥ अथ नवमः सर्गः ॥

सीता भयोद्भ्रान्ता इतस्ततो भ्रमन्ती स्वं निन्दन्ती रुदती स्खलन्ती समाऽऽगच्छन्महत्सैन्यं ददर्श मृत्युजीवितयोस्तुल्याशा तत्सैन्यं दृष्ट्वा नमस्कारं ध्यायन्ती निर्भयैव तस्थौ। सैनिकास्तां दृष्ट्वा केयं दिव्यरूपेति विभ्यति स्म। तत्सेनानृपः स्वरवित्तरुदितं श्रुत्वा कापीयं गुर्विणी महासतीत्यूचे। तस्मिन्कृपालावन्तिकस्थे सभया सीता स्वं नेपथ्यमढुढौकत्। राजोचे। मा भैषीः। स्वसस्तवैवाङ्गे भूषणानि तिष्ठन्तु। का त्वम्? को निर्घृणधुर्यस्त्वां वनेऽत्याक्षीत्। ब्रूहि। त्वद्दुःखदुःखितोऽस्मि। तन्मन्त्री सुमतिः सीतां जगाद। गजवाहननृपबन्धुदेवीसुतः पुंडरीकपुरेशोऽयं वज्रजङ्घो महार्हतः परनारीसहोदरो गजान्लातुमत्राऽऽगतः। कृतार्थो व्रजन् त्वद्दुःखदुःखितोऽत्राऽऽगात्। स्वं दुःखं वद। सीताऽपि रुदती तौ रोदयन्ती स्ववृत्तमुवाच। नृपः प्रत्यूचे। धर्मस्वसाऽसि। मम भामण्डलस्येव गृहे तिष्ठ। रामोऽपि लोकवादादेव त्वां तत्याज, न स्वयम्। सोऽप्यद्य पश्चात्तापवान् त्वां गवेषयिष्यति। सीताऽपि तदाऽऽनायितां शिबिकामारुह्य पुण्डरीकपुरं गता तद्दर्शिते गृहेऽन्वहं धर्मशीला तस्थौ।

इतश्च रामसेनानीर्गत्वा रामाय सीतापरित्यागस्वरूपं तन्मूर्च्छावाचिकादिकं जगाद। रामो मूर्च्छितो लक्ष्मणेन चन्दनाम्भसा सिक्त उत्थाय विललाप। सा क्व सीता? मया लोकानां वचसोज्झितेति। लक्ष्मण ऊचे तत्रारण्ये गत्वा गवेषयित्वाऽऽनीयते यावत्त्वद्विरहान्न विपद्यते। रामस्तेनैव सेनान्या खेचरैश्च सह व्योमयानेन तत्र गतः। स्थलजलशैलद्रुमादिषु गवेषयन्नपि तामदृष्ट्वा नूनं



॥४२॥

व्याघ्रादिना भक्षितेति ध्यायन्मुक्ताश्रुः स्वपुरीं ययौ। पौरैः सीता गुणग्राहं निन्द्यमानः प्रेतकार्यं चकार। हृदि, दृशोरग्रे, वाचि च तस्य सैवाऽभूत्।

इतश्च सीताऽनङ्गलवणं मदनाङ्कुशं च युग्मिनौ सुतौ सुषुवे। मुदितेन वज्रजङ्घेन कृतजन्मनामोत्सवौ तौ धात्रीभिर्लाल्यमानौ ववृधाते। कलाग्रहणयोग्यौ जातौ। तदा च सिद्धार्थाख्यः सिद्धपुत्रकोऽणुव्रती विद्याबलर्धियुक्तः कलागमनिपुणस्त्रिसन्ध्यमपि मेर्वद्रौ चैत्ययात्रायाकाशगामी भिक्षार्थं सीतागृहमाययौ। तया भक्तपानाद्यैः श्रद्धया भोजितः। सुखविहारं च पृष्टः। तेनाऽपि पृष्टा सीता स्ववृत्तान्तं मूलादगाद्। सोऽष्टाङ्गनिमित्तज्ञोऽजल्पत्। किं ताम्यसि यस्या लवणाङ्कुशौ साक्षाद्रामलक्ष्मणाविव सुतौ। सीता कृताग्रहा पुत्राऽध्यापनाय तं स्वगृहेऽधारयत्। तौ तेन सर्वाः कला ग्राहितौ द्युसदामपि दुर्जयौ जातौ। यौवनं च प्रपन्नौ। वज्रजङ्घः शशिचूलां स्वां पुत्रीमन्याश्च द्वात्रिंशतं कन्या लवणेनोद्वाहयति स्म। अङ्कुशाय तु पृथ्वीपुरपतेः पृथोः कनकमालां कन्यां ययाचे। सोऽज्ञातवंशत्वात्तस्मै न ददौ। वज्रजङ्घोऽभ्यषेणयत्। पृथुगृह्यं व्याघ्ररथं नृपं युद्धे बद्ध्वाऽग्रहीच्च। पृथुः साहाय्यार्थं स्वमित्रं पोतनेशमाह्वयति स्म। वज्रजङ्घेनाऽऽहूतेषु स्वपुत्रेषु वार्यमाणावपि लवणाङ्कुशौ सहैयतुः। युद्धे वज्रजङ्घसैन्ये भग्ने मातुलचमूभङ्गक्रुद्धौ लवणाङ्कुशावधावताम्। पृथौ ससैन्ये भग्ने तौ स्मेरमूचतुः। भो ज्ञातवंशा ! अज्ञातवंशाभ्यामावाभ्यां कथं पलायध्वे। पृथुर्वलित्वा विक्रमेण ज्ञातो वंश इत्युक्त्वाऽङ्कुशाय तां कन्यां ददौ। वज्रजङ्घः सैन्यं निवेश्य तत्र तस्थौ। आयातो नारदो वज्रजङ्घेन सत्कृत्य निषण्णेषु राजसु प्रोचे। पृथुरङ्कुशाय स्वां कन्यां दास्यति। तदस्य प्रीत्यै लवणाङ्कुशयोर्वंशमाख्याहि। नारदः स्मित्वोचे। कोऽनयोर्वंशं न वेद। यस्य ऋषभस्वामी वंशस्य कन्दः। यद्वंश्या भरताद्याश्चक्रिणः प्रविचाराः। अनयोस्तातौ रामलक्ष्मणौ को न वेद ? गर्भस्थयोरप्यनयोर्लोकप्रवादाद्रा-

मेण सीता त्यक्ता। अङ्कुशः स्मित्वाऽऽह। ब्रह्मन्! सीतां वने त्यजता रामेण साधु न चक्रे। अपवादहेतवो हि विचित्राः। लवणोऽपृच्छत्। सा पुरी कियति दूरे यत्र सानुजो मत्तातः। मुनिराह। साऽयोध्या इतः षष्ठ्यधिकं योजनशतम्। लवणो वज्रजङ्घं जगाद। तत्र गत्वा रामलक्ष्मणौ दिदृक्षावहे। स तद्वाचं स्वीकृत्याङ्कुशं कनकमालया पर्यणाययत्। लवणाङ्कुशौ वज्रजङ्घपृथुयुतौ बहून्देशान्साधयन्तौ लोकाक्ष्यपुरे कुबेरकान्तनृपं, लम्पाकेष्वेककर्णं, विजयस्थल्यां भ्रातृशताभिधं जिग्याते। गङ्गामुत्तीर्य कैलाशस्योत्तरां दिशं प्राप्तौ नन्दचारूणां देशानां जयं चक्रतुः। रुषकुंतलादीन्भूपान्जयन्तौ सिन्धोः परकुलं प्रापतुः। तत्राऽऽर्याऽनार्यान्नृपान्साधयामासतुः। एवं बहुदेशेश्वराञ्जित्वा निवृत्य पुण्डरीकपुरं ययतुः। अहो धन्यो वज्रजङ्घो, यदियौ जामेयावीदृशाविति जल्पद्भिः पौरैर्वीक्ष्यमाणौ स्वगृहं गत्वा मातुः पादौ नेमतुः। रामलक्ष्मणसमौ भूयास्तमिति सीताऽऽशिषं ददौ।

तौ वज्रजङ्घमूचतुः। मातुल! त्वयाऽऽवयोरयोध्यायां गमनं मेने, तत्संप्रत्यनुतिष्ठ। लम्पाकरुषकालाम्बुकुन्तलाद्या आज्ञाप्यन्ताम्। प्रयाणभम्भा वाद्यन्ताम्। दिशः सैन्यैश्छाद्यन्ताम्। जननीत्यक्तुर्विक्रमो वीक्ष्यः। सीता रुदती सगद्गदं जगाद। वत्सौ! केयमनर्थेच्छा। युवयोः पितृपितृव्यौ शूराणामपि दुर्जयौ त्रैलोक्यकण्टकान्तकौ यदि वां तातं द्रष्टुमुत्कण्ठा तद्विनीतीभूय यातम्। तावूचाते। त्वत्त्याजिनि द्विषत्पदप्राप्ते कथं विनयः। तव पुत्रावावामायाताविति तस्य पुरः स्वयं गत्वा ह्रीकरं वचो वदामः। युद्धाह्वानं तु तातस्याऽप्यानन्दकं कुलद्वययशस्करं युज्यते। इत्युक्त्वा तौ महासत्त्वौ महासैन्यौ सीतायां रुदत्यामप्ययोध्यां प्रति प्रतस्थाते। कुठारकुद्दालभृतां नृणां दशसहस्राणि पथि वृक्षादिच्छित्वा समां क्ष्मां व्यधुः। तौ युयुत्सू उपायोध्यं स्थितौ। राघवौ वैरिबलं श्रुत्वा विस्मितौ स्मितौ च जातौ। सौमित्रिः प्राह। मुमूर्षवोऽमी। सरामः सुग्रीवादिवृतः सौमित्रिर्युद्धे चचाल।

इतश्च भामण्डलो नारदाच्छ्रुत्वा पुण्डरीकपुरं ययौ। सीता रुदती प्राह। आर्तमां रामस्तत्याज। मत्यागमसहिष्णू त्वज्ञामेयौ तद्युधे गतौ। भामण्डलः प्राह। रामो रभसा त्वत्त्यागं चक्रे। द्वितीयं तु पुत्रयोर्वधं मा कार्षीत्। तौ सुतावविदन् राघवो यावन्न हन्ति, उत्तिष्ठ तावत्तत्र द्रुतं गच्छावः। भामण्डलः सीतां विमानमधिरोप्य तयोः सैन्यं ययौ। तौ सीतां नत्वा सीताऽऽख्यातं मातुलं भामण्डलं नेमतुः। स तौ मूर्ध्नि चुम्बित्वाऽङ्कमारोप्य सपुलकतनुः सगद्गदमूचे। मत्स्वसा पुरा वीरपत्नी सम्प्रति तु युवाभ्यां वीरसूरभूत्। युवां वीरसुतौ वीरौ च। तथाऽपि पितृपितृव्याभ्यां रणं मा कृपाथाम्। रावणान्तकाभ्यां युद्धं किमारेभे। तावूचतुः। मातुल! अस्मद्भ्यात्कातरं वचो वदसि। तातयोः कोऽपि न मह्य इति जानीवः। युद्धं त्यक्त्वा तयोरेव कथं ह्रियं जनयावः। तयोरेवं ब्रुवाणयोरेव सैन्याना रामसैन्यैः सह युद्धं प्रववृते। सुग्रीवाद्यैः खेचरैरनयोर्भूचर सैन्यं माऽघानीति भामण्डलो युधि ययौ। तावपि कुमारौ मनोगाढौ युद्धायोत्तस्थाते। सुग्रीवाद्या निःशंकं युध्यमाना भामण्डलं युधि दृष्ट्वा काविमाविति पप्रच्छुः। तस्माद्रामपुत्राविति विज्ञाय गत्वा सीतां नत्वा पुरो भुवि निपेतुः।

इतश्च लवणाङ्कुशौ यत्र यत्र भ्रेमतुस्तत्र रथी, सादी, निषादी वा धृताऽस्त्रो न तस्थौ। एवं रामसैन्यं हतविद्रुतं कृत्वा केनाऽप्यस्खलितौ रामं लक्ष्मणं चेयतुः। राघवौ तौ दृष्ट्वा मिथःप्रोचतुः कावेतावभिरामौ? मनो निसर्गात्स्निह्यति। बलाद् द्रुह्यति। किमाश्लेष्टुं योधयितुं वा उपच्छावः। इति व्याहारिणं रथस्थं रामं रथी लवणोऽङ्कुशश्च लक्ष्मणमुवाच। अहं युद्धश्रद्धालुर्जगदजय्यस्य दशाननस्याऽपि जेतार दिष्ट्या त्वां चिराद्द्राक्षम्। तव युद्धश्रद्धा रावणेनाऽपि नापूर्यत। अहं पूरयिष्यामि। त्वं च मे पूरयिष्यसीत्युक्त्वा चत्वारोऽपि स्वं स्वं धनुरास्फालयामासुः। कृतान्तः सारथी रामरथं, वज्रजङ्घनृपो लवणरथमभ्यढौकयताम्। विराधो लक्ष्म-

णरथं, पृथुरङ्कुशरथं, मिथोऽभ्यमित्रीणं चक्राते। ते चत्वारः सारथयो रथांश्चतुरं भ्रमयामासुः। ते चत्वारो वीरा विविधं प्रजह्रुः। लवणाङ्कुशौ ज्ञातसम्बन्धौ सापेक्षं युयुधाते। राघवौ त्वज्ञानान्निरपेक्षौ। रामो विविधैरायुधैर्युध्वा युद्धाऽन्तेच्छुः कृतान्तवदनं प्राह। रथं प्रतिरिपु वाहय। स ऊचे। खिन्ना हयाः। सर्वाङ्गं विशिखैर्विद्धाः। कशाहता अपि न त्वरन्ते। मुशलरत्नं कणकण्डनार्हं बभूव। हलरत्नं भूपाटनोचितमासीत्। देवताश्रितानां वैरिक्षयकृतां तेषामेवाऽस्त्राणां केयं दशा। एवं लक्ष्मणस्याप्यङ्कुशं प्रति मोघास्त्रताऽभूत्। अङ्कुशेन सौमित्रिरुरसि बाणहतो मुमूर्च्छ। विराधः प्रत्ययोध्यं रथमचालयत्। प्राप्तसंज्ञो लक्ष्मणः प्राह। विराध ! किं नवम कार्षीः। रामभ्रातुरनुचितमिदम्। अभ्यरि रथं नय। चक्रेण तच्छिरश्छिनद्मि। तथा कृते सौमित्रिरङ्कुशाय चक्रं मुमोच। अङ्कुशलवणाभ्यामस्त्रैर्हतं न प्रत्यहन्यत। तच्चक्रमागत्याऽङ्कुशस्य प्रदक्षिणां कृत्वा लक्ष्मणहस्तेऽगात्। भूयोऽपि मुक्तं तथैव लक्ष्मणहस्तं भेजे। राघवौ विषण्णौ दध्यतुः। किमेतौ बलहरी, नावाम् ?

अत्राऽन्तरे नारदः सिद्धार्थेन सहाऽऽगत्य खिन्नौ राघवावुवाच। हर्षपदे वां किं खेदः। पुत्रात्पराजयो वंशोद्योतनाय। सीताकुक्षिजौ त्वत्पुत्राविमौ युद्धव्याजेन त्वां द्रष्टुमागतौ। चक्रं यन्न प्रबभूव तदभिज्ञानम्। पुरा हि भारतं चक्रं बाहुबलौ मुधाऽभूत्। नारदेन सीतात्यागादारभ्य सर्वस्मिन्वृत्तान्त उक्ते रामो विस्मयव्रीडाहर्षखेदाकुलो मुमूर्च्छ। लब्धसंज्ञः सलक्ष्मणः सुतयोरन्तिकं ययौ। तावपि विनीतौ त्यक्तास्त्रौ तयोः पादेषु पेततुः। रामस्तावाऽऽश्लिष्याङ्कमारोप्य शोकस्नेहाकुलो रुरोद। लक्ष्मणोऽपि रामाङ्कात्तौ निजाङ्कमारोप्य मूर्धनि चुम्बन्नुदश्रुः परिरेभे। शत्रुघ्नोऽपि तौ पादपतितावालिलिङ्ग। सर्वे भूपा मुमुदिरे। सीतासुतयोर्विक्रमं पित्रा सङ्गमं च दृष्ट्वा हृष्टा विमानेन पुण्डरीकपुरं गता भामण्डलाऽऽख्यातो वज्रजङ्घोऽपि नमन्रामेणोचे। भामण्डलतुल्योऽसि। यः

पुत्रावनर्थय: । इत्युक्त्वा सलक्ष्मणो रामोऽर्धासनोपविष्टाभ्यां सुताभ्यां सह पुष्पकारूढः पुरीं विवेश । गृहं गतो महामहमकारयत् । यथा-

अथ सौमित्रिकपीशलङ्केशवर्धीशलाङ्गदाद्याः सम्भूय रामं व्यजिज्ञपन् । परदेशस्था देवी सुताभ्यां वियुक्ता दुःखेन तिष्ठति । लोक-दिशासि तदद्याऽऽनयाम: । पतिपुत्रोज्झिता विपत्स्यते । रामः किञ्चिद्विचिन्त्योचे । लोकापवादो बली । जानेऽहं सती सीता । लोक-समक्षं दिव्यशुद्धया तया पुनर्गृहवासोऽस्तु । तेऽप्येवमस्त्वित्युक्त्वा पुर्या बहिः समञ्चान्विशालान्मण्डपानकारयत् । तत्र खेचरा भूचराश्च भूपाः पौराऽमात्याद्याश्चोपाविशन् । रामाज्ञया सुग्रीवो गत्वा नत्वा सीतामूचे । देवि ! त्वदर्थं रामेण पुष्पकं प्रैषि । इदमा-रुह्य रामान्तिकमेहि । साप्यूचे । दुःखदायिना किं रामेण ? स आह । मा कुपः । रामस्तव शुद्धयै सपौरनृपो मञ्चारूढोऽस्ति । सीता शुद्धिकाङ्क्षिणी अयोध्यायां पुष्पकेनाऽऽगत्य महेन्द्रोदयोद्याने उत्तीर्णा लक्ष्मणेन दत्तार्घा नृपैरपि च नेमे । सौमित्रिः पुरो निपद्य नृपैः समभाद । स्वा पुरीं वेश्म च पविश्य । सीतोचे । मामशुद्धिः प्रवेक्ष्यामि । रामस्तां सीतां(स)सन्धां श्रुत्वा तत्रैत्यैवमूचे । शुद्धये दिव्यं कुरु । सोचे । विज्ञोऽसि । दण्डं कृत्वा परीक्षा कुरुषे । रामो विलक्षः प्राह । जाने नास्ति ते दोषः । लोकप्रवादोच्चारणायेदमुच्यते । सीता जगौ । मया दिव्यपञ्चकं स्वीचक्रे । वह्नौ विशामि । तण्डुलान्भक्षयामि । तुलामधिरोहामि । तप्तं कोशं पिबामि । जिह्वया फालं गृह्णामि । वद किं ते रोचते । अत्रान्तरे नभस्थो नारदः सिद्धार्थश्च सर्वो लोकश्च तुमुलं निवार्याऽभाषत । भो भो राघव ! सीता सती सती, मा विकल्पं कार्षीः । रामः प्रोचे । भो लोका युष्माकं काऽपि न मर्यादा । युष्माभिरेव पुरा दूषिता । अधुना कथं शील-धनी । भूयोऽपि दोषं गृह्णतां वः काऽप्यर्गला नास्ति । ततः प्रत्ययाय सीता ज्वलितेऽग्नौ विशतु । इत्युक्त्वा पुरुषद्वयदघ्नं हस्तशत-प्रयं गर्तं खानयित्वा चन्दनेन्धनैरपूरयत् । अत्रान्तरे वैताढ्योत्तरश्रेणौ हरिविक्रमनृपात्मजो जयभूषण उद्वाहष्टशतकन्यः किरणमण्डलां

पत्नीं मातुलसुतहेमशिखेन मुक्तां निर्वास्य प्रवव्राज। सा च मृत्वा विद्युद्दंष्ट्रा राक्षसी बभूव। तदा च जयभूषणोऽयोध्याया बहिः प्रतिमास्थस्तया कृतोपसर्गः केवली जज्ञे। तत्रेन्द्राद्याः समागताः। इन्द्रो देवेभ्यो ज्ञातसीतावृत्तस्तत्सान्निध्याय पत्त्यनीकेशमादिश्य स्वयं तस्योपेर्ज्ञानमहं चकार। रामो ज्वालाकरालं तं गर्तं प्रेक्ष्य दध्यौ। अहो किमिदं मेऽत्यन्तविषममुपस्थितम्। दिव्यस्य हि विषमा गतिः।

**मया सहाऽस्या निर्वासो हरणं रावणेन च। वने त्यागो मया भूयो भूयोऽप्येतच्च मत्कृतम् ॥४४॥**

सीतोपाग्नि स्थित्वा सर्वज्ञं स्मृत्वा हे लोकपालाः! लोकाश्च शृणुत। यद्यहं रामादन्यमभ्यलषंस्तदग्निर्दहतु, अन्यथा वारीवास्त्विति सत्यापनां विधाय स्मृतनमस्कारा झम्पां ददौ। वह्निर्विध्यातः। गर्तः स्वच्छाम्बुपूर्णो वापीत्वं प्राप। सीता जलान्तः पद्मोपरि सिंहासने तस्थौ। तज्जलं क्वचिद् गुलगुलारावं, क्वचिद्भम्भायितध्वानं, क्वचित्खलखलास्वनं सावर्तं मञ्चानपि प्लावयितुं प्रारेभे। खेचरा उत्पत्य खं ययुः। भूचरा महासति! पाहि पाहीत्यूचुः। सीताऽपि तदुत्तीर्णं जलं पाणिभ्यां पस्पर्श। वापीदघ्नं चाभूत्। सा वापी कुमुदपद्माद्यैर्निरन्तरा रममाणहंसा भृङ्गगीतिबन्धुराऽऽस्फलद्वीचिनिचयमणिसोपाना रत्नोपलैर्बद्धोभयतटा बभूव। नारदाद्याः सीताशीलश्लाघिनः खे ननृतुः। सुराः सीतोपरि पुष्पवृष्टिं व्यधुः। लोके अहो सीतायाः शीलमिति प्रघोषोऽभूत्। लवणाङ्कुशौ हृष्टौ तरन्तौ सीतासमीपं प्रापतुः। सीतया तौ मूर्द्धन्याघ्राय पार्श्वयोरुपवेशितौ। लक्ष्मणशत्रुघ्नभामण्डललङ्केशकपीशाद्याः सभक्तयो गत्वा तां नेमुः। रामः पश्चात्तापत्रपापूर्णः सीतामेत्य कृताञ्जलिरूचे। लोकापवादात्त्यक्ताऽसि। तत्क्षमस्व। श्वापदोऽग्रेऽप्यरण्ये त्यक्ता यदजीवः, तदप्येकं दिव्यमासीत्तन्नाज्ञासिषम्। सर्वं क्षान्त्वा पुष्पकमध्यास्य स्ववेश्मैहि सीताऽप्यूचे। तव लोकस्य च न दोषः, किन्तु मत्प्राक्-

॥४५॥

कर्मणा, तदुच्छित्यै प्रव्रजिष्यामि । इत्युक्त्वा मुष्टिना केशानुत्खन्य रामस्याऽर्पयत् । रामे मूर्च्छिते सीता जयभूषणकेवलिनः पार्श्वे गत्वा दीक्षां जग्राह । सुप्रभागणिनीपरिच्छदे चाऽभूत् ।

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टीशलाकापुरुषचरिते गद्यबन्धे सप्तमे पर्वणि सीताशुद्धिव्रतग्रहणो नाम नवमः सर्गः ॥

## ॥ अथ दशमः सर्गः ॥

अथ चन्दनसिक्तो लब्धसंज्ञो रामः प्रोवाच । क्व सीता देवी ? भो भूचराः ! खेचराः ! यदि जिजीविषवस्तत्तां लुञ्चितकेशामपि दर्शयत । वत्स ! वत्स ! सौमित्रे ! तूर्णं तूर्णं, धनुः धनुः, मयि दुस्थिते यदमी उदासीना, इत्युक्त्वा धनुर्गृह्णन्तं तं नत्वा लक्ष्मणोऽगादत् । आर्य ! आर्य ! किमिदम् । लोकोऽयं त्वद्दासः । सीता दीक्षां ललौ । एहि मुनेः केवलिमहिमां कुर्मः । तत्र सीताचत्रताऽऽनने । रामः प्रकृतिमालम्ब्योचे । साधु साधु भत्प्रिया व्रतं जग्राह । तत्र सपरिवारो गत्वा देशनां श्रुत्वा भव्योऽहमभव्यो वेति पप्रच्छ । केवल्याख्यत् । चरमदेहोऽसि । रामः पुनः पप्रच्छ । मोक्षो दीक्षया । सा च सर्वत्यागेन । लक्ष्मणस्तु मम दुस्त्यजः । मुनिः प्राह । बलसम्पदां भुक्त्वान्ते त्यक्तसङ्गः प्रव्रज्य शिवं प्राप्स्यसि । विभीषणोऽप्राक्षीत् । रावणः केन कर्मणा सीतां जहार, लक्ष्मणस्तं चाऽहन ? कुतश्च सुग्रीवभामण्डलौ लवणाङ्कुशावहं च राघवे भक्ता इति । मुनिः प्राह । अत्र दक्षिणभरतार्धे क्षेमपुरे नयदत्तवणिजः

सुतौ धनदत्तवसुदत्तावभूताम्। तयोर्मित्रं याज्ञवल्क्यो द्विजः। तथा तत्र पुरे सागरदत्तो वणिक्। तत्सुतो गणधरः। सुता गुणवती। सा सागरदत्तेन नयदत्तात्मजाय धनदत्ताय दत्ता। मात्रा तु तत्रत्याय श्रीकान्तायाऽऽढ्यायाऽर्थलोभाच्छन्नं दत्ता। याज्ञवल्क्यस्तु तज्ज्ञात्वा स्वमित्रयोराचख्यौ। वसुदत्तो गत्वा निशि श्रीकान्तं जघान। श्रीकान्तोऽपि च तं खड्गेन निपातितवान्। द्वावपि विन्ध्याटव्यां मृगौ जातौ। गुणवत्यप्यनूढैव मृत्वा तत्र मृगी बभूव। तौ तस्याः कृते युद्ध्वा मम्रतुः। एवं मिथो वैरेण बहुभवं भ्रेमतुः।

धनदत्तोऽपि स्वभ्रातृवधार्तोऽटन् क्षुधितो निशि साधून्दृष्ट्वा भोजनं ययाचे। तैः प्रबोधितः श्राद्धीभूय सौधर्मे सुरोऽभूत्। च्युत्वा महापुरे पद्मरुचिः श्रेष्ठी परमः श्रावकोऽजनि। सोऽन्यदा गोकुलं गच्छन्नश्वारूढः पथि पतितं मुमूर्षुं जरद्गवं दृष्ट्वाऽश्वादवरुह्य तस्य कर्णमूले नमस्कारान्ददौ। स जरद्गवो मृत्वा तत्र वृषभध्वजो राजाऽभूत्। जरद्गवमृतिस्थानदर्शनाज्जातजातिस्मृतिस्तत्र चैत्यमकारयत्। तत्र चैकत्र भित्तौ मुमूर्षुं जरद्गवं तत्कर्णान्ते नमस्कारदं नरं तदन्तिके च तदीयं सपर्याणमश्वं लेखयामास। तत्र चारक्षकानादिशत्। य इदं चित्रं विदन्नुदीक्षेत स मम ज्ञाप्यः। अन्यदा स श्रेष्ठी तच्चित्रमुदीक्ष्यमाणो विस्मितस्तै राज्ञे ज्ञापितः। राज्ञा पृष्टो मद्वृत्तान्तोऽयं केनाऽपि लेखित इत्यूचे। राजा विनयान्नत्वा स्वं जरद्गवमजिज्ञपत्। त्वं गुरुस्त्वं दैवतमित्युक्त्वा श्रेष्ठिना सह श्रावकत्वं पालयन् राज्यमभुक्त। ततस्तौ मृत्वा ईशाने सुरौ जातौ। पद्मरुचिश्च्युत्वा वैताढ्ये नयनानन्दो राजा भूत्वा प्रव्रज्य माहेन्द्रे देवोऽजनि। ततश्च्युत्वा प्राग्विदेहेषु क्षेमापुर्यां श्रीचन्द्रो नाम राजा समाधिगुप्तर्षेरन्ते प्रव्रज्य ब्रह्मलोकेन्द्रोऽजनि। ततश्च्युतो बलभद्रोऽयम्। जरद्गवजीवस्त्वयं क्रमात्सुग्रीवो जज्ञे।

श्रीकान्तजीवो भ्रान्त्वा मृणालकंदपत्तने शंभुर्नृपो बभूव। वसुदत्तजीवस्तु भ्रान्त्वा तस्यैव नृपस्य श्रीभूतिः पुरोधाः। गुणवती-

मुनिं प्रमदावनस्थं सुदर्शनर्षिं जनैर्वन्द्यमानं दृष्ट्वा सोपहासं जगौ।
सा यौवनस्था प्रतिमास्थं सुदर्शनर्षिं जनैर्वन्द्यमानं दृष्ट्वा सोपहासं जगौ ।
मो यौवनस्था प्रतिमास्थं सुदर्शनर्षिं जनैर्वन्द्यमानं दृष्ट्वा सोपहासं जगौ ।

भो भो जनाः कथं वन्दध्वं ... ॥४५॥

रतिवर्धननृपसुतौ सुदर्शनाकुक्षिजौ प्रियङ्करशुभंकरौ राज्यं प्रपाल्य प्रव्रज्य ग्रैवेयके सुरौ जातौ । ततश्च्युतौ लवणाङ्कुशौ । प्राग्भवाम्बा सुदर्शना चिरं भवं भ्रान्त्वाऽनयोरध्यापकः सिद्धार्थोऽजनि । इति मुनिवचः श्रुत्वा बहवः संवेगं ययुः । कृतान्तवदनो रामसेनानीस्तदैव प्राव्रजत् । रामो जयभूषणं नत्वा सीतोपान्तं गतो दध्यौ । असौ मृद्वङ्गी सीताऽऽतपादि कथं सोढा । संयमभारं कथमुद्वक्ष्यति यद्वा यस्याः सतीव्रतं रावणोऽपि न भङ्क्तुमलं सा संयमप्रतिज्ञामपि पारयिष्यत्येव एवं विमृश्य सीतां ववन्दे । एवं लक्ष्मणोऽन्येऽपि राजानो नेमुः । रामोऽयोध्यां ययौ । कृतान्तस्तपस्तप्त्वा ब्रह्मलोकं ययौ । सीता षष्ठि वर्षाणि तपस्तप्त्वा त्रयस्त्रिंशदहान्यनशनं विधाय द्वाविंशत्यर्णवायुरच्युतेन्द्रोऽजनि ।

इतश्च वैताढ्ये काञ्चनपुरे कनकरथः खेचरेशः, मन्दाकिनीचन्द्रमुख्योः कन्ययोः स्वयंवरे रामलक्ष्मणादीन्सपुत्रान्नृपानाजुहाव । तत्र मन्दाकिन्या अनङ्गलवणश्चन्द्रमुख्या चाङ्कुशो वव्रे । तत्र सौमित्रेः सुताः श्रीधरादयः सार्धे द्वे शते क्रोधाद्युगपद्युद्धायोत्तस्थिरे । लवणाङ्कुशौ तान्सन्नह्यतः श्रुत्वा प्रोचाते । भ्रातृभिः को योत्स्यते । ज्येष्ठकनिष्ठयोस्ताततयोर्यथा न भेदस्तथा तत्पुत्राणामस्माकमपि भेदो मास्तु । ते चरेभ्यस्तज्ज्ञात्वा ह्रीणाः स्वं निनिन्दुः । संविग्ना महाबलमुनेः पार्श्वे प्राव्रजंश्च । लवणाङ्कुशौ तु जातोद्वाहौ सीरिशाङ्गियुतावयोध्यामीयतुः ।

इतश्च भामण्डलः स्वपुरे हर्म्यमूर्ध्नि स्थितः श्रेणिद्वयं वशीकृत्य सर्वत्र लीलया विहृत्य प्रान्ते व्रतात्पूर्णकामो भवेयमिति ध्यायंस्तडित्पातान्मृतो देवकुरुयुगलिषूत्पेदे । हनुमांश्चैत्यनतये मेरुं गतो निवृत्तः सूर्यास्तदर्शनात्संविग्नः स्वपुरे गत्वा सुते राज्यं न्यस्य धर्मरत्नाचार्यान्ते प्रवव्राज । राज्ञां सार्धसप्तशतानि तमनु प्राव्रजन् । दीक्षिताश्च तत्पत्न्य आर्यालक्ष्मीवतीपार्श्वेऽस्थुः । हनुमाञ्छिवं

ययौ। रामः श्रीशैल प्रव्रजितं श्रुत्वा दध्यौ । भोगसुखं हित्वा किमयं कथां दीक्षामाददे । शक्रस्तां रामचिन्तां ज्ञात्वान्तःसभमूचे । अहो कर्मणां विषमा गतिः । चरमदेहोऽपि रामो यत्स्वयं धर्मं हसति । विषयजं सुखं प्रशंसति। यद्वा ज्ञातं रामलक्ष्मणयोर्मिथः स्नेहो महान्निर्निदेहतुः । द्वौ देवौ कौतुकात्तयोः स्नेहं परीक्षितुं लक्ष्मणगृहमीयतुः । सद्यो मायया सर्वमन्तःपुरस्त्रैणं क्रन्दत्सौमित्रे दर्शयामासतुः ।

हा पद्म ! पद्मनयन ! बन्धुपद्मदिवाकर !। अकाण्डमृत्युः कोऽयं ते विश्वस्याऽपि भयंकरः ॥४६॥

एवं रुदतीर्वक्षांसि घ्नतीर्मुक्तकेशा अन्तःपुरवधूः प्रेक्ष्य विषण्णो लक्ष्मणः प्राह । मद्भ्राता किं मृतः ? दैवेन पिशुनेन किं कृतम् ? एवं वदन एव तस्य वचसा सह जीवितं निर्ययौ। स सिंहासनेऽपि स्वर्णस्तम्भमवष्टभ्य स्थितः प्रसारिताक्षोऽस्थात् । तौ सुरावपि तं परासुं प्रेक्ष्य विषण्णौ किमावाभ्यां कृतमिति मिथः प्रोचतुः । स्वं निन्दन्तौ स्वं कल्पं जग्मतुश्च । तत्रान्तःपुरस्त्रियस्तं मृतं दृष्ट्वा मुक्तकेशाश्चक्रन्दुः । रामस्तत्क्रन्दितं श्रुत्वा तत्राऽऽगतः प्रोचे । अविज्ञायाप्यमंगलं किमारब्धम् । एष जीवामि । एष चानुजो जीवति । कोऽपि व्याधिरमुं बाधते । इत्युक्त्वा वैद्यान् ज्योतिषिकांश्चाकार्य मंत्रतन्त्राणां प्रयोगं कारयामास । तद्वैफल्ये मूर्च्छितः प्राप्तसंज्ञो रुरोद । विभीषणसुग्रीवप्रमुखा अप्युच्चै रुरुदुः । प्रतिमार्गं प्रतिगृहं प्रत्यट्टं क्रन्दनात्तदा शोकाद्वैतं बभूव । लवणाङ्कुशौ रामं नत्वोचाते । कनीयस्तातमृत्युना भीतौ स्वः । अकस्मादेव मृत्युरापतति । इत्याद्युक्त्वा रामं नत्वाऽमृतघोषपार्श्वे दीक्षां गृहीत्वा शिवं प्रापतुः । रामो भ्रातृविपत्त्या सुतयोश्च वियोगेन भूयो भूयो मुमूर्च्छ मोहाज्जगाद च। बन्धो मया किं क्वचिदपमानना चक्रे ? किं मौनी स्थितोऽसि ?। त्वयैवं स्थितेऽहं पुत्राभ्यामप्युज्झितः । विभीषणाद्याः सम्भूय रामं सगद्गदं जगदुः । प्रभो धैर्यं भज । सौमित्रेरङ्गसंस्कारपूर्वमौर्द्ध-

देहिकं सम्प्रति कर्तव्यम्। इत्युक्त्वा क्रुद्धो रामस्तानूचे। रे खलाः किमिदम् ? मद्भ्राता जीवति। सर्वेषां युष्माकं मृतकार्यं कर्तव्यम्। ममानुजो दीर्घायुः स्तात्। भ्रातर्भ्रातर्वत्स! ब्रूहि। खलानां प्रवेशोऽस्ति। किं मां खेदयसि ? यद्वा वत्स! खलसमक्षं तव कोपो नोचितः। इत्युक्त्वा स्कन्धे तमारोप्याऽन्यत्र ययौ। कदाचित्स्वयमस्नपयत्। कदाचिद्विलेपनैर्विलिलेप। कदाचित्तस्य पुरो दिव्यभोज्यैः स्थालं सम्पूर्य मुमोच। कदाचिदंके कदाचित्तल्पे न्यास्थत्। कदाचित्स्वयमाभाष्य स्वयं प्रतिबभाषे। कदाचित्संवाहकीभूय स्वय ममर्द। इत्यादिविफलाश्चेष्टाः कुर्वतो विस्मृतान्यकृत्यस्य षण्मासा ययुः। इन्द्रजित्सुन्दात्मजास्तमुन्मत्तं श्रुत्वा जिघांसवोऽभ्येयुः। अयोध्यां सैन्यै रुरुधुः। रामोऽपि सौमित्रिं स्वांके न्यस्य वज्रावर्त्तं धनुरास्फालयत्। तदा जटायुर्नाकिभिः सहाऽऽसनकम्पेन माहेन्द्रादाययौ। तेऽरयोऽद्यापि सुरा रामगृह्या इति वदन्तो नेशुः। अत्र रामो देवसखा पुरोविभीषणोऽस्माकं हन्ता इति भीता ह्रीणाश्च संवेगादतिवेगमुनेः पार्श्वे प्रवव्रजुः। ततो जटायुर्देवो रामस्य बोधार्थं पुरः स्थित्वा शुष्कद्रुमं जलेन सिषेच। करीषं क्षिप्त्वा दृषदि पद्मिनीं रोपयामास। अकाले मृतोक्ष्णा लाङ्गलेन बीजान्युवाप। यन्त्रे वालुकाः क्षिप्त्वा तैलार्थं पर्यपीलयत्। एवमन्यदप्यसाधकमदर्शयत्। रामस्तमूचे। किं शुष्कं द्रुं सिञ्चसीत्यादि। देवोऽप्यूचे। इयच्चेद्वेत्सि तत्किं मृतकं स्कन्धे वहसि ? रामो लक्ष्मणवपुरालिङ्ग्य प्रत्यूचे। अमङ्गलं किं भाषसे? दृक्पथं त्यज। अत्रान्तरे कृतान्तवदनो देवस्तद्बोधार्थमाययौ। स्त्रीमृतकं स्कन्धे न्यस्य रामोपान्ते चचार। रामः प्रोचे। उन्मत्तोऽसि ? स्त्रीमृतकं वहसि। कृतान्तोऽप्यूचे। किममङ्गलं वक्षि। ममैषा प्रेयसी। त्वन्तु किं शवं वहसि ? इत्यादि तद्दर्शितैर्हेतुभिर्जातचेतनो रामो दध्यौ। किं सत्यं ममानुजो न जीवति ? ततस्तौ देवौ रामाय लब्धबोधाय स्वं निवेद्य स्वस्थानं ययतुः। रामोऽनुजस्य मृतकार्यं कृत्वा दीक्षां प्रपित्सुः शत्रुघ्नं राज्यादानायाऽऽदिदेश। तस्मिन्नपि दीक्षाकृताऽऽग्रहे लवणात्म-

जायानन्दनाय राज्यं दत्त्वाऽर्हद्दासश्रावकेणोपदिष्टस्य मुनिसुव्रतवंशस्य सुव्रतर्षेरन्तिके शत्रुघ्नविभीषणसुग्रीवविराधैरन्यैश्च नृपैः समं रामो व्रतं जग्राह । रामे निष्क्रान्ते षोडश नृपसहस्राणि निष्क्रान्तानि । सप्तत्रिंशत्सहस्राणि स्त्रियः प्राव्रजन् । श्रीमत्याश्च साध्व्याः परिच्छदे बभूवुः । रामो नानाभिग्रहो गुरुपादान्ते षष्ठ्यब्दीं तपस्तेपे । गुर्वनुज्ञया प्रतिपन्नैकविहारो निर्भीरटव्यां गिरिकन्दरे ययौ । तत्रैव निशि ध्यानमुपस्थस्यावधिज्ञानमभूत् । चतुर्दशरज्जुप्रमं विश्वं पश्यन्देवाभ्यां हतं नरके गतमनुजं ज्ञात्वा दध्यौ । अहं प्राग्धनदत्ताख्योऽभूवम् । तदा च लक्ष्मणो वसुदत्ताऽऽख्यो ममाऽनुजोऽभूत् । तत्राऽप्यकृतकृत्योऽसौ मुधैव विपन्नः । अस्मिन्नपि भवेऽस्य कौमारेऽब्दशतं मुधा ययौ ।

शतत्रयं मण्डलित्वे चत्वारिंशत्तु दिग्जये । वर्षैकादशसहस्राः सार्धा राज्येऽब्दषष्ठि च ॥४७॥

एवमस्याविरतस्यैव द्वादशवर्षसहस्रात्मकं सर्वमायुर्नरकार्हं ययौ । तयोर्मायावधकयोर्देवयोर्न दोषः । कर्मणामीदृग्विपाकः । एवं ध्यायन्रामो विशेषतो निर्ममस्तपःसमाधिनिष्ठोऽधिकं बभूव ।

अथ स्पन्दनस्थले पुरे षष्ठोपवासान्ते पारणाय विवेश । पौराः प्रचुरसंमदाः सम्मुखीनास्तं नयनोत्सवमायान्तं समापेतुः । पौर्यः स्वस्वगृहाजिरे तस्य भिक्षादानाय विचित्रभोज्यपूर्णानि भाजनानि पुरो दधुः । पौराणां हर्षतुमुले जाते गजाः स्तम्भान्बभञ्जुः । हया उत्कर्णतां ययुः । रामोऽप्युज्झितधर्माभिरतः पौरढौकितमाहारं न जग्राह । नृपागारं तु गतः । प्रतिनन्दिनृपेणोज्झितधर्माहारेण प्रतिलम्भितो विधिवद् बुभुजे । सुरैर्वसुधारादिपञ्चकं कृतम् । रामोऽप्यरण्यं गतो भूयः पुरक्षोभो मा भूदिति पुरे प्रवेशाभिग्रहं जग्राह । अरण्ये चेद्भिक्षा लप्स्यते, तदा पारणं, नान्यथेति । देहेऽपि निरपेक्षः प्रतिमाधरः समाधियुतस्तस्थौ । अन्यदा तत्र विपर्यस्तशिक्षाश्वाकृष्टः

प्रतिनन्दिनृप आययौ । सोऽश्वोनन्दपुण्याख्यसरसः पङ्के ममज्ज । अनुपदं च सैन्यमाययौ । राजा तमश्वं पङ्कादुत्तार्य सैन्यं तत्र न्यस्य स्नात्वा सपरिच्छदो बुभुजे। पारणेच्छुं रामर्षिमागतमभ्युत्थाय शेषैर्भक्तपानैः प्रत्यलम्भयत् । दिवो रत्नवृष्टिः । रामदेशनया नृपाद्याः श्रावका जाताः। ततः प्रभृति वनदेवीभिः पूज्यमानो रामस्तत्रैव स्थितो मासेनैकेन द्वित्रिचतुरैर्वा मासैः पारयामास । कदाचित्पर्यङ्कस्थः, कदाचित्प्रलम्बितभुज उत्कटिकासीनो वा, ऊर्ध्वबाहुर्वा, अङ्गुष्ठस्थो वा, पार्ष्णिस्थो वा एवं नानासनस्तपस्तेपे। अन्यदा कोटिशिलां ययौ । तामध्यास्य क्षपकश्रेणिस्थो निशिप्रतिमाधरः शुक्लध्यानान्तरं भेजे। तदा सीतेन्द्रोऽवधिना ज्ञात्वा दध्यौ । चेदसौ संसारी स्यात् तदा भूयोऽमुना युज्ये । अनुकूलैरुपसर्गैरुपद्रवामि । यथा मन्मित्रं सुरः स्यात् । उपराममागत्य वसन्तभूषितमुद्यानं विचक्रे । कोकिलालिरवाः प्रसस्नुः । सीतेन्द्रः सीतारूपं विकृत्य नानास्त्रीभिः सह प्रोचे । प्रिय ! त्वत्प्रिया सीताऽस्मि । तदा त्वां त्यक्त्वा प्रव्रजिता पश्चात्तापमभजम् । एताभी रक्ताभिः खेचरीभिरहं प्रार्थिता रामं स्वीकुरु। तं चास्मन्नाथं कुरु । तत्प्रभो ! माममूश्च स्वीकृत्य रमस्वेति ब्रुवाणे सीतेन्द्रे वैक्रिय्यः खेचरनार्यः सङ्गीतं चक्रुः । तथाप्यक्षुब्धस्य रामर्षेर्माघशुक्लद्वादश्यां निशोऽन्ते यामे केवलज्ञानमजनि । सीतेन्द्रोऽन्ये च सुरास्तस्य केवलमहिमानं व्यधुः । स्वर्णाब्जासीनश्चामरातपत्रराजितो रामो धर्मदेशनां चक्रे । सीतेन्द्रो देशनान्ते क्षमयित्वा नत्वा सौमित्रिरावणगतिं पप्रच्छ । रामः प्राह । शम्बूकदशास्यौ लक्ष्मणश्च तुर्ये नरके सन्ति । तत उद्धृतौ दशास्यसौमित्री प्राग्विदेहे विजयावतीपुर्यां सुनन्दरोहिणी पुत्रौ जिनदाससुदर्शनौ भूत्वाऽर्हद्धर्मं प्रपाल्य सौधर्मे देवौ भविष्यतः। च्युत्वा विजयापुर्यां श्रावकौ भूत्वा मृत्वा हरिवर्षे पुरुषौ भाविनौ। ततो देवौ । च्युत्वा विजयापुर्यां कुमारवार्तराट्लक्ष्म्योः कुमारौ जयकान्तजयप्रभौ संयमं प्रपाल्य लान्तकं यास्यतः। तदा त्वमच्युताच्च्युतोऽत्रैव भरते सर्वरत्नमतिश्चक्री भविता । तौ तु

त्वत्सुताविन्द्रायुधमेघरथौ भाविनौ। त्वं प्रव्रज्य वैजयन्तं यास्यसि। इन्द्रायुधस्तु रावणजीवः शुभं भवत्रयं भ्रान्त्वा तीर्थकृद्गोत्रकर्मार्जयिष्यति। ततः स तीर्थनाथो भविता त्वं तु वैजयन्ताच्च्युतस्तस्य गणधरो भावि। ततस्तौ मोक्षं यास्यतः। लक्ष्मणजीवस्तु त्वत्सुनुर्मेघरथः शुभगतीर्यास्यति। ततश्च पुष्करद्वीपे प्राग्विदेहे रत्नचित्रापुर्यां चक्री भूत्वा प्रव्रज्य तीर्थनाथत्वं प्राप्य निर्वास्यति। सीतेन्द्रस्तच्छ्रुत्वा रामं नत्वा स्नेहा लक्ष्मणं ययौ। तत्र शम्बूकरावणौ विकृतैः सिंहादिरूपैर्लक्ष्मणेन युध्यमानौ ददर्श। परमाधार्मिका नैवं युध्यमानानां वो दुःखं भावीत्युक्त्वाऽग्निकुण्डेषु तान्न्यधुः। दह्यमाना रटन्तस्त्रयोऽपि ततः कृष्ट्वा तप्ततैलकुम्भ्यां निदधिरे। ततो भ्राष्ट्रे चिक्षिपिरे। इत्यादि तेषां दुःखं प्रेक्ष्य सोऽसुरानूचे। किं रे न वित्थ? अमी पुरुषोत्तमा आसन्। दूरमपसरतेति तान् निषिध्य शम्बूकरावणौ प्रत्याह। युवां प्राक्कृतकर्मणेमं नरकं गतौ। दृष्टोदर्कं प्राग्वैरं किमद्यापि न मुञ्चतमित्युक्त्वा सौमित्रे रावणस्य च बोधाय रामाख्यातमाचख्यौ। तावप्यूचाते। कृपालो साधु कार्षीः। तव शुभोपदेशेन दुःखविस्मृतिर्जाता। प्राक्कर्मभिरर्पितो नरकावासो दीर्घः। तद्दुःखं कोऽपनेष्यति। सीतेन्द्रोऽवोचत सुरलोके त्रीनपि नेष्यामीति। ते तेनोद्धृताः कणशः पेतुः। भूयोऽपि मिलिताङ्गानुद्दध्रे। ते तथैवाऽपतन्त। ते सीतेन्द्रमूचुः। उद्ध्रियमाणानामस्माकमधिकमेव दुःखं भवति। यां याहि। सीतेन्द्रस्तानमुक्त्वा रामं नत्वा शाश्वतार्हत्तीर्थयात्रायै नन्दीश्वरादिषु व्रजन्देवकुरुप्रदेशे भामण्डलजीवं दृष्ट्वा स्नेहात्प्रतिबोध्य स्वस्थानं ययौ। रामः केवलित्वे पञ्चविंशत्यब्दीं भव्यान्प्रबोध्य पञ्चदशाब्दसहस्राण्यायुः पालयित्वा परं पदं प्रपेदे।

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते गद्यबन्धे सप्तमे पर्वणि रामनिर्वाणगमनो नाम दशमः सर्गः ॥

॥ समाप्तं चेदं रामायणम् ॥

## ॥ अथैकादशः सर्गः ॥



नमो नमिजिनेन्द्राय सुरेन्द्रमहिताङ्घ्रये। कर्मद्रुमगजेन्द्राय धरित्रीकल्पशाखिने ॥१॥

अत्रैव जम्बूद्वीपे प्रत्यग्विदेहे भरताभिधे विजये कौशाम्बी पूः। सिद्धार्थो राजा। सुदर्शनर्षेरात्तदीक्षः कैश्चित्स्थानकैस्तीर्थकृन्नामकर्मार्ऽर्जयित्वाऽपराजिते ययौ। त्रयस्त्रिंशदर्णवोपममायुः पूरयामास। इतश्चात्रैव भरते मिथिलापुर्यां विजयराजस्य वप्रादेवीकुक्षावश्वयुक्पूर्णिमायामश्विन्यां चतुर्दशस्वप्नसूचितस्तीर्थकृज्जन्माऽवातरत्। श्रावणकृष्णाष्टम्यामश्विनीधिष्ण्ये नीलोत्पलाङ्कं स्वर्णाभं देवी सुतमसूत। दिक्कुमारीकाः सूतिकर्माणि चक्रुः, इन्द्रा मेरौ स्नपनं च। विजयो राजा प्रातर्महमकारयत्।

प्रभौ गर्भस्थिते रुद्धा पुर्यासीन्मिथिलारिभिः। अधिप्रासादमारोहद्वप्रादेवी च तत्क्षणम् ॥२॥

वप्रां प्रेक्ष्य च तद्गर्भानुभावाद्विजयं नृपम्। यन्नेमुर्द्विष इत्यस्य नमिरित्यभिधा दधे ॥३॥

यौवनस्थः प्रभुः पञ्चदशचापोच्चो रेजे। सार्धे द्वे वर्षसहस्रे व्यतिक्रम्य पित्रा दत्तं राज्यमपात्। पञ्चाब्दसहस्राणि राज्यं पालयित्वा लोकान्तिकबोधितो राज्ये सुप्रभं पुत्रं न्यस्य वार्षिकं दानं दत्त्वा।

सुप्रभाद्यैर्नृपैः शक्रादिभिर्देवैर्वृतः प्रभुः। देवकुर्वा शिबिकया सहस्राम्रवणं ययौ ॥४॥

जातमनोज्ञानो द्वितीयेऽहनि वीरपुरे दत्तराजेन क्षैरेय्या
आषाढकृष्णनवम्यामश्विन्यां चरमेऽह्नि नृपसहस्रयुतः षष्ठेन प्राव्रजत्। सहस्राम्रवणे दीक्षास्थाने षष्ठेन बकुलस्याधः प्रतिमया
पारितः। सुरैस्तत्र वसुधारादिपञ्चकं पीठं च चक्रे। प्रभुर्नवमासानन्यत्र विहृत्य सहस्राम्रवणे दीक्षास्थाने षष्ठेन बकुलस्याधः प्रतिमया
स्थितो। तदा मार्गशुक्लैकादश्यामश्विनीभे केवलमुदपादि। सुराः समवसरणमशीत्यधिकचापशतोच्चाऽशोकभूषितं व्यधुः। प्रभुरशोकं
प्रदक्षिणीकृत्य तीर्थाय नत्वा प्राङ्मुखो रत्नसिंहासने न्यषदत्। अन्यदिक्षु व्यन्तरकृतं प्रतिबिम्बत्रयं बभूव। यथास्थानं सङ्घे निषण्णे
भर्तुः स्तुत्वा विरते भर्तुर्देशनां चक्रे। असारोऽयं संसारः। ततो यतिधर्माय यतेत। तत्राऽशक्तः श्राद्धधर्मायोत्तिष्ठेत। अहोरात्रं
धर्मकर्मभिः श्राद्धो नयेत्। ब्राह्मे मुहूर्ते उत्तिष्ठेत्। गृहस्थोऽपि विशुद्ध्यतीति यावत्। कुम्भाद्याः सप्तदश गणधरा आसन्। प्रभोर्दे-
शनान्ते कुम्भदेशनां श्रुत्वा शक्राद्याः स्वस्थानं ययुः।

भर्त्तीर्थजन्मा भ्रुकुटिर्यक्षस्त्र्यक्षश्चतुर्मुखः। स्वर्णवर्णो वृषरथश्चतुर्भिर्दक्षिणैर्भुजैः ॥५॥

भूतमातुलिङ्गशक्तिमुद्गराभयदैर्युतः। वामैः पुनर्नकुलकपरशुवज्राक्षसूत्रिभिः ॥६॥ (युग्मम्)

तथैव देवी गांधारी श्वेताङ्गी हंसवाहना। दोर्भ्यां वरदखड्गिभ्यां दक्षिणाभ्यां विराजिता ॥७॥

वामाभ्यां बीजपूरिभ्यां याष्टिभ्यामुपशोभिता। अभूतामित्युभे भर्तुर्नमेः शासनदेवते ॥८॥

मनःपर्यायज्ञानिनां सार्धा विंशतिः सहस्राः। साध्वीनामेकचत्वारिंशत्सहस्राः। पूर्वभृतां सार्धा चतुःशती। अवधिज्ञानिनां षोडश शताः। मनो-
ज्ञानिनां द्वादशशती। केवलिनां षोडश शताः। जातवैक्रियलब्धीनां पञ्च सहस्राः। वादिनां सहस्रम्। श्राद्धानां लक्षं
सप्ततिः सहस्राश्च। श्राविकाणां त्रिलक्षा अष्टचत्वारिंशच्च सहस्राः। सम्मेताद्रौ मुनिसहस्रेण सह मासमनशनी वैशाखकृष्णदशम्याम-

श्विनीभे तैर्मुनिभिः समं सिद्धः।

कौमारेऽब्दानां सहस्रौ सार्धौ राज्ये तु पञ्च ते। व्रते सार्धौ सहस्रौ चेत्ययुतायुर्नमिप्रभुः ॥९॥

श्रीमुनिसुव्रतनिर्वाणात्षट्स्वब्दलक्षेषु नमिनिर्वाणम्। सुराः शरीरसंस्कारपूर्वं श्रीनमेः सपरिवारस्य निर्वाणकल्याणं व्यधुः।

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते गद्यबन्धे सप्तमे पर्वणि नमिनाथचरितवर्णनो नामैकादशः सर्गः ॥

## ॥ अथ द्वादशः सर्गः ॥

नमौ विहरत्येव हरिषेणश्चक्री। तच्चरितं यथा। अत्रैव भरतेऽनन्ततीर्थे नरपुरे नराभिरामो नृपः। प्रव्रज्य सनत्कुमारे सुरोऽभूत्। पाञ्चालदेशे काम्पील्यपुरे इक्ष्वाकुवंशे महाहरिराजस्य मेराकुक्षाववतीर्णः। पञ्चदशधनुस्तुङ्गो हेमाभो हरिषेणः सुतोऽजनि। युवा राज्येऽभिषिक्तः। अस्त्रशालायां चक्ररत्नं प्रादुरभूत्। अन्यान्यपि त्रयोदश रत्नानि जज्ञिरे। दिग्जयः। द्वादशाब्दानि चक्रित्वाभिषेको-

१ प्राच्या मागधतीर्थकुमारं, याम्याब्धौ वरदामपतिं, पश्चिमाब्धौ प्रभासेशं सुरं, सिंधुं, वैताढ्ये वैताढ्याद्रिकुमारं, ततः कृतमालदेवं, सेनान्या सिन्धोः पश्चिमनिष्कुटं, यथाविधि तमिस्रा प्रविश्य निर्गत्य च आपातनाम्नो म्लेच्छान्, सेनान्या सिन्धोः पश्चिमनिष्कुटं हिमवत्कुमारं च जित्वा ऋषभकूटे स्वनाम लिखित्वा सेनान्या गांगं निष्कुटमजयत्। उभयश्रेणिविद्याधरैर्दत्तदण्डो नाट्यमालं खण्डप्रपातया निर्गत्य सेनान्या गांगं निष्कुटं साधयित्वा गङ्गायामावासयामास। तत्र गङ्गामुखमागधवासिनो नव निधयो वशीबभूवुः।

मदः। प्रव्रज्य निर्वृतो दशमचक्री। कौमारे वर्षाणि (३२५) सपादानि त्रीणि शतानि, मण्डलित्वे ३२५, जये सार्धशतम्, चक्रित्वे सार्धाष्टशताधिकाष्टसहस्राणि (८८५०) व्रते सार्धत्रिशतानि ३५०, एवं वर्षायुतायुः।

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते गद्यबन्धे सप्तमपर्वणि हरिषेणचक्रवर्तिचरितवर्णनो नाम द्वादशः सर्गः॥

## ॥ अथ त्रयोदशः सर्गः॥

नमेस्तीर्थे जयचक्री, तच्चरित्रं यथा—अस्यैव जम्बूद्वीपस्यैरवते श्रीपुरे वसुंधरो राजा। पद्मावती प्रिया। मृत्योरुद्विग्नो विनयंधर सुतं राज्ये न्यस्य मनोहरवने वरधर्मर्षेः प्रव्रज्य सप्तमकल्पं ययौ। मगधेषु राजगृहे इक्ष्वाकुवंशे विजयराजो वप्रायां सुतो जातः जयो नाम धनुर्द्वादशकोच्चः काञ्चनच्छविः। तस्य पित्रा दत्तराज्यस्य आयुधागारे चक्रं समुत्पेदे। कृतदिग्जयोऽखण्डविक्रमः षट्खण्डां भुवं भुक्त्वा प्रवव्राज। कौमारे वर्षत्रिशतम्, मण्डलित्वे ३००, दिग्जये शतम्, चक्रित्वे एकोनविंशतिः शतानि, व्रते चत्वारि शतानि, एवं वर्षाणि त्रीणि सहस्राण्यायुः। ततः सिद्धः।

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते गद्यबन्धे सप्तमे पर्वणि जयचक्रिचरितवर्णनो नाम त्रयोदशः सर्गः॥

रामलक्ष्मणदशानना नमिस्तीर्थकृच्च हरिषेणचक्रभृत्। चक्रभृच्च जय इत्यमुत्र षड् वर्णिताः श्रुतिसुखाय सन्तु वः॥

